Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 13.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRIYA SAMHITA

OF THE

# KṚISHṆA YAJUR-VEDA

WITH THE

## COMMENTARY OF BHAṬṬABHA'SKARAMIS'RA.



## Vol. X.

(Kanda VI—Prasnas 1 to 4).

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,

*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,

*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1897.

# EDITOR'S NOTE.

No manuscript of Bhaṭṭa-Bháskara's commentary on the fourth káṇḍa having been as yet found, and our MSS. of the commentary on the fifth káṇḍa not having been sufficiently varied, we had to continue the printing of our edition of the commentary from the sixth káṇḍa onward, prepared with the aid of the following MSS. :—

(1) A Grantha Manuscript of the commentary on the sixth and seventh káṇḍas belonging to the Sarasvati Bhaṇḍára of H. H. the Maharaja of Mysore.

(2) A Telugu palm-leaf MS. of the commentary on the sixth and seventh káṇḍas, belonging to the Government Oriental Library, Mysore.

(3) A Grantha palm-leaf MS. of the commentary on the sixth and sevanth kaṇḍas, belonging to the Government Oriental Library, Mysore.

(4) A Grantha palm-leaf MS. of the commentary on the fifth and sixth káṇḍas, belonging to S'rí S'ringeri Maṭṭ at Kúḍli.

Since commencing the printing of this portion, we have been able to collate our edition of the commentary on the fifth, sixth, and seventh káṇḍas with the MSS. found in the Madras Government Oriental MSS. Library and in the Sâras-vatí-Mahal of the Tanjore Palace. By the time this collation was done the printing of Vols. X and XI was almost completed, these volumes comprising the sixth káṇḍa and the first three prapáṭhakas of the seventh. Important variations of readings found in the Tanjore and Madras MSS. are noted at the end of the volumes.

A. M. S.

# षष्ठं काण्डम्.

---

## सौमिकब्राह्मणम्.

### प्रथमः प्रपाठकः.



### द्वितीयः प्रपाठकः.

## तृतीयः प्रपाठकः.



## चतुर्थः प्रपाठकः





हरिः ॐ.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

### षष्ठकाण्डे.

### प्रथमप्रपाठकः.

॥ हरिः ओम् ॥

प्राचीनवंशं करोति देवमनुष्या

[1]प्राचीनवंशमिति प्राचीन—वंशम् । करोति ।
[2]देवमनुष्या इति देव—मनुष्याः । दिशः । वीति । अ-

---

[1]अथ सौम्यस्याध्वरस्य ब्राह्मणं सौम्यं काण्डमारभ्यते । तत्र 'प्राचीनवंशं करोति' इति विधिः ॥ हविर्धानशब्दवत् योगाख्यैषा हि देवयजनस्य । तेन देवयजनविधिरयं, न गुणविधिमात्रम् । प्राचीनः प्रागायतः पृष्ठवंशोस्मिन्निति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । प्रागञ्चतीति ऋत्विगादिना क्विनि 'अचः' इति भलोपे 'चौ' इति दीर्घत्वं, 'विभाषाञ्चेरदिक् स्त्रियाम्' इति खः । तादृशं देवयजनं कुर्यादिति । लिङर्थे लट्, 'तिङतिङः' इति निहन्यते ॥

[2]अथ प्राचीनवंशत्वं विशिष्टफलहेतुत्वेन स्तोतुमाह—देवाश्च

दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत्प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते

भजन्त। प्राचीम्। देवाः। दक्षिणा। पितरः। प्रतीचीम्। मनुष्याः। उदीचीम्। रुद्राः। [3]यत्। प्राचीनवꣳशमिति प्राचीन-वꣳशम्। करोति। देवलोकमिति देव-लोकम्। एव। तत्। यजमानः। उपावर्तत इत्युप-

मनुष्याश्च दिशः प्रागादिका व्यभजन्त विभज्य परिगृहीतवन्तः, विविधं वा अभजन्त। 'उदात्तस्वरितयोर्यणः' इति संहितायामडागमस्स्वर्यते। के कामित्याह—प्राचीं देवाः। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्, 'चौ' इति पूर्वपदस्यान्तोदात्तत्वं दीर्घत्वं च, 'आङ्याजयारामुपसंख्यानम्' इति द्वितीयाया आडादेशः। 'दक्षिणादाच्' इति वा व्यत्ययेन द्वितीयान्तादपि भवति। प्रतीचीम्। पूर्ववत्स्वरदीर्घत्वे, 'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृतिस्वरत्वम्॥

[3]इदानीं तमेव फलविशेषं दर्शयति—यत् यस्मात् प्राचीनवंशं करोति देवयजनम्। तत् तस्माद्यजमानः देवलोकमेवोपावर्तते उपसंप्राप्तमेवोपागम्य वर्तते देवलोकस्वभावत्वादस्य देवयजनस्य। यद्वा—उपावर्तते उपसंप्राप्तुमाभिमुख्येन वर्तते॥

परि॑ श्रयत्य॒न्तर्हि॑तो॒ हि दे॒वलो॒को मनु॒ष्यलो॒कान्नास्माल्लो॒कात्स्वे॑त-

आवर्तते। [4]परीति॑। श्र॒य॒ति॒। अ॒न्तर्हि॑त॒ इत्य॒न्तः-हि॒तः। हि। दे॒व॒लो॒क इति॑ दे॒व-लो॒कः। म॒नु॒ष्य॒लो॒कादिति॑ मनु॒ष्य-लो॒कात्। [5]न। अ॒स्मात्। लो॒कात्। स्वे॑त॒व्य॒मिति॒ सु-ए॒त॒व्य॒म्। इ॒व॒। इति॑।

---

[4]परि श्रयतीति विधिः—समन्ताद्देवयजनं प्रच्छन्नं करोति। अयं च देवलोकत्वसंपादने द्वितीयो हेतुः। अधुना तमेव समर्थयते—हि यस्मादर्थे। यस्माद्देवलोको मनुष्यलोकादन्तर्हितः मनुष्यलोकमभिसमीक्ष्य व्यवहितो भवति। यद्वा—मनुष्यलोकमभिसमीक्ष्य तिरोहितो भवति। मनुष्यलोकमभिसमीक्षमाणः इममेव लोकं सन्तं मन्यते असन्तममुम्। ल्यब्लोपे पञ्चमी। 'अन्तरपरिग्रहे' इत्यन्तश्शब्दस्य गतित्वात् 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। एवं परिश्रयणेन च देवलोकत्वं कृतं भवति॥

[5]इदानीमतीकाशान्विधास्यन् देवलोकस्य दौर्बल्यं तावत्प्रतिपादयति—नास्मादिति॥ यत्र बहूनि भद्राणि पश्यामः अस्माल्लोकान्न स्वेतव्यं न साधु गन्तव्यं, गन्तव्यं न साध्विति यावत्। इति खल्वाहुः प्रत्यक्षापहृतचेतसो लौकिकाः। 'ऊडिदम्' इतीदमो विभक्तेरुदात्तत्वम्। शोभनमेतव्यं स्वेतव्यमिति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। नन्वमुष्मिन्नपि लोके बहुभद्रकं भोक्ष्यते, तत्किमित्याहुर्न स्वेतव्यमिति, अतस्त एवाहुः—

व्यमिवेत्याहुः को हि तद्वेद यद्यमु-
ष्मिन्लोकेऽस्ति वा न वेति दिक्ष्व-
तीकाशान्करोति ॥ १ ॥ उभयोर्लो-

आहुः । कः । हि । तत् । वेद । यदि । अमुष्मिन्न् ।
लोके । अस्ति । वा । न । वा । इति । [6]दिक्षु ।
अतीकाशान् । करोति ॥ १ ॥ उभयोः । लोकयोः ।

---

को हीति । अमुष्मिन्लोके यद्यस्ति भद्रकं, यदि वा नास्ति को वा नाम तद्वेदितुं प्रभवतीति । हि यस्मात् न कश्चिदपि तद्वेद, तस्मादितो न स्वेतव्यमित्याहुः । एतदुक्तं भवति—इतस्तावत्त्वरितेन न गन्तव्यं, परलोकसुखस्य विप्रकृष्टत्वात्, इदानीं तावदनुभवितव्यं नास्ति, तस्मादीदृशदेवलोकसाम्यापादने न कश्चिद्गुणो देवयजनस्य, अपि तु त्रासहेतुरेव स्यात् इदं मनुष्याणामिति । वेदेत्यस्य 'हि च' इति निघातप्रतिषेधः । अस्तीत्यस्य 'चवायोगे प्रथमा' इति निघाताभावः । तर्हि परिश्रयणं कर्तव्यमेव न ब्रूमः । तस्मात्परिश्रयणं न कर्तव्यमेवेति । किन्नु अत्र समाधिः कर्तव्य एवेति ब्रूमः ॥

[6]कोसावित्याह—दिक्ष्वतीकाशान् करोतीति विधिः—दिक्षु सर्वासु अतीकाशान् द्वाराणि कुर्यात् । भित्तौ छदिषि वा अतीत्य व्यवधानं काशन्त इत्यतीकाशाः, पचाद्यच्, 'इकः काशे' इति पूर्वपदस्य दीर्घत्वम् । अधिकरणे साधने वा घञि थाथादिनोत्तरपदान्तोदात्तत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वं वा 'कर्षात्वतः' इत्यन्तोदात्तत्वात् 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति

कयो॑रभि॒जित्यै॒ केश॑श्म॒श्रु व॑पते न॒-
खानि॒ नि कृ॑न्तते॒ मृ॒ता वा ए॒षा
त्वग॑मे॒ध्या यत्केश॑श्म॒श्रु मृ॒ताम॒ेव त्व-
च॑ममे॒ध्याम॑पहृत्य॑ य॒ज्ञियो॑ भू॒त्वा

अ॒भिजि॑त्या॒ इत्य॒भि-जि॒त्यै॒ । [7]केश॑श्म॒श्र्विति॒ केश-श्म॒श्रु । व॒प॒ते॒ । न॒खानि॑ । नीति॑ । कृ॒न्त॒ते॒ । मृ॒ता । वै । ए॒षा । त्वक् । अ॒मे॒ध्या । यत् । केश॒-श्म॒श्र्विति॑ केश-श्म॒श्रु । मृ॒ताम् । ए॒व । त्वच॑म् । अ॒मे॒ध्याम् । अ॒प॒हृत्येत्य॑प-हृत्य॑ । य॒ज्ञियः॑ । भू॒त्वा ।

---

दीर्घः । 'सावेकाचः' इति दिशो विभक्तेरुदात्तत्वम् । फल-
माह—उभयोर्लोकयोः अस्यामुष्य च अभिजयाय भवतीति ।
'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[7]'केशश्मश्रु वपते नखानि नि कृन्तते' इति विधिः—केशाश्च श्मश्रूणि च इति समाहारद्वन्द्वे 'जातिरप्राणिनाम्' इत्येकवद्भावः । अधुना केशादित्रयं निन्दति—मृतेति । मृता वा मृतावत् प्राणादिभिरनधिष्ठितत्वात् । तद्वत् छिद्यमानायामप्यस्यां जन्तोः पीडानुदयात् । शवकल्पा खल्वेषा त्वक् । त्वगिव त्वक्; पुरुषस्य छादकत्वात् । अत एवामेध्या अयज्ञार्हा । मेधं नार्हतीति दण्डादिभ्यो यः, 'तत्र साधुः' इति वा यत्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । किं पुनस्तदित्याह—यत्केशश्मश्रु यदिदं केशश्मश्रुनखं प्रकृतोपलक्षणत्वात्त्रयमपि गृह्यते ।

मेधमुपैत्यङ्गिरसस्सुवर्गं लोकं यन्तो-
प्सु दीक्षातपसी प्रावेशयन्नप्सु स्ना-
ति साक्षादेव दीक्षातपसी अव रुन्धे
तीर्थे स्नाति तीर्थे हि ते तां प्रावेशयन्ती-

मेधम् । उपेति । एति । [8]अङ्गिरसः । सुवर्गमिति सुवः—गम् । लोकम् । यन्तः । अप्स्वित्यप्—सु । दीक्षातपसी इति दीक्षा—तपसी । प्रेति । अवेशयन्न् । अप्स्वित्यप्—सु । स्नाति । साक्षादिति स—अक्षात् । एव । दीक्षातपसी इति दीक्षा—तपसी । अवेति ।

---

फलमाह—मृतामिति । वपनकर्तनाभ्यां मृतकल्पां त्वचं अमेधाहीमपहत्य अपास्य याज्ञियः यज्ञार्हो भूत्वा मेधं यज्ञमुपैति उपसंप्राप्नोति । 'यज्ञर्त्विग्भ्याम्' इति घः ॥

[8]अथाप्सु स्नानं विधास्यन् तासां गुणविशेषमाह—अङ्गिरस इति ॥ दीक्षा मौण्ड्यादिलक्षणा, तपः उपसदाख्यं, तस्य चेह प्रासङ्गिकं ग्रहणं, दीक्षाधिकारात् । यथा वक्ष्यति 'तीर्थे हि ते ताम्' इति । 'ऊडिदम्' इत्यङ्गचो विभक्तेरुदात्तत्वम् । अप्सु स्नातीति विधिः । फलमाह—साक्षादिति । अक्ष्णा सह साक्षात् । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् । अप्सु स्नानेन प्रत्यक्षमेव ते अवरुन्धे गृह्णाति, न पुनर्वपनादिवत् स्नानाददृष्टद्वारको दीक्षालाभः । तीर्थे स्नातीति विधिः । तीर्थमवतारः । हेतुमाह—हि यस्मात्ते अङ्गिरसः तां दीक्षां तीर्थे प्रावेशयन्, तस्मात्तीर्थे

थें स्नांति ॥ २ ॥ तीर्थमेव संमाना-
नां भवत्यपोऽश्नात्यन्तरत एव मे-
ध्यो भवति वासंसा दीक्षयति सौ-

रुन्धे । तीर्थे । स्नाति । तीर्थे । हि । ते । ताम् । प्रेति । अवेंशयन्न् । तीर्थे । स्नाति ॥ २ ॥ तीर्थम् । एव । समानानाम् । भवति । [9]अपः । अश्नाति । अन्तरतः । एव । मेध्यः । भवति । [10]वासंसा । दीक्षयति । सौम्यम् । वै । क्षौमम् । देवतंया ।

---

स्नातव्यमिति । 'हि च' इति निघाताभावः । तीर्थे स्नातीति द्वितीयं विधानं फलविधित्सया । फलं चाह—तीर्थमेवेति । समानानां सजातानां तीर्थमेव भवति यजमानः । यथा तत् स्नानपानावगाहादिना लोकस्योपकारकं भवति, एवमसौ समानानां बहुप्रकारमुपजीव्यो भवति ॥

[9]अपोऽश्नातीति विधिः ॥ 'ऊडिदम्' इति शस उदात्तत्वम्, 'स्वरितोवानुदात्ते' इत्येकादेशस्य स्वरितत्वम् । फलमाह—अन्तरत एव मेध्यो भवतीति । मेध्यः मेधार्हः भवति । पूर्ववद्यत्प्रत्यये वृषादित्वादाद्युदात्तत्वम् । मेधे साधुरिति वा यत् । यद्वा—मेध्यश्शुद्धः, मेधे भवः इति दिगादित्वाद्यत्, 'यतो नावः' इत्याद्युदात्तत्वम् ॥

[10]वाससा दीक्षयतीति विधिः ॥ वासः क्षौमं, अर्थवादे श्रुतत्वात् । फलमाह—सौम्यमिति । सोमो देवता अस्य

म्यं वै क्षौमं देवतया सोममेष देव-
तामुपैति यो दीक्षते सोमस्य तनू-
रसि तनुवं मे पाहीत्याह स्वामेव
देवतामुपैत्यथो आशिषमेवैतामा

सोमम् । एषः । देवताम् । उपेति । एति । यः ।
दीक्षते । [11]सोमस्य । तनूः । असि । तनुवम् । मे ।
पाहि । इति । आह । स्वाम् । एव । देवताम् ।
उपेति । एति । अथो इति । आशिषमित्या–शि-

---

'सोमाट्टचण्' । देवतया देवतासंबन्धेन । किं देवत्यमिति निरूप्यमाणे सौम्यं क्षौमामिति यावत् । तस्माद्यो वाससा सोम-देवत्येन दीक्षते एषः सोमं वक्ष्यमाणं देवतां उपैतीति सोमा-वाप्तिः फलम् । यद्वा—यो दीक्षते एषः सोमदेवतामुपैति उप-संप्राप्तुं यतते; वासश्च सोमदेवत्यं, तस्मात् तदुपेतव्यप्राप्तिसाधन-मिति ॥

[11]अधुना अमुमेवार्थं मन्त्रार्थेऽपि प्रकाशयति—सोमस्येति ॥ वक्ष्यमाणाया मदीयाया देवतायास्सोमस्य तनूस्त्वमसीति यस्मादाह मन्त्रः, तस्मात्स्वामेव देवतामुपैति, अनेन मन्त्रेण अनेन च वास-सा दीक्षणेन । किमेतावदेव प्रतिपाद्यं मन्त्रस्य? नेत्याह—अथो इति । अपि चेत्यर्थः । तनुवं मे पाहीत्येतामप्याशिषमनेन मन्त्रेणाशास्ते । तदेवं वाससा दीक्षायाः फलद्वयमभीष्टदेवता-प्राप्तिरात्मरक्षा चेति ब्राह्मणाभिप्रायः । 'आङश्शासु इच्छायां' इत्यस्य 'क्वौ च' इतीत्वम्, 'शासिवसिघसीनां च' इति षत्वम् ॥

शास्तेऽग्नेस्तूषाधानं वायोर्वातपानं पितृणां नीविरोषधीनां प्रघातः ॥३॥ आदित्यानां प्राचीनतानो विश्वेषां देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा

षम् । एव । एताम् । एति । शास्ते । [12]अग्नेः । तूषाधानमिति तूष—आधानम् । वायोः । वातपानमिति वात—पानम् । पितृणाम् । नीविः । ओषधीनाम् । प्रघात इति प्र—घातः ॥ ३ ॥ आदित्यानाम् । प्राचीनतान इति प्राचीन—तानः । विश्वेषाम् । देवानाम् । ओतुः । नक्षत्राणाम् । अतीकाशाः । तत् । वै । एतत् । सर्वदेवत्यमिति सर्व—

[12]अधुना सर्वदेवत्यत्वेन वासस्स्तौति—अग्नेरिति ॥ शलाकोपधानरज्जवः तूषाः । तत्र तन्तूनामाधानं पूरणं तूषाधानं, तदग्नेः तदग्निदैवत्यम् । सेचनानि पाययित्वा वातेन पानं शोषणं वातपानम् । पै ओ वै शोषणे, उभयत्रापि कृदुत्तरपदप्रकृतिस्वरत्वम् । व्यत्ययेन 'अनो भावकर्मवचनः' इति न क्रियते । नीविः नहनविशेषः, तन्तूनां तत्र तत्र प्रतिष्ठापनम् । प्रघातः वेमाख्येन दण्डेन प्रहारः । प्राचीनानां द्राघीयसां तन्तूनां तानः तननं प्राचीनतानः । उभयत्र थाथादिनोत्तरपदान्तोदात्तत्वम् । ओतुः तिरश्चीनतानः, तेन हि प्राचीनतानो रक्ष्यते । वयतेरौणादिके तुनि 'छ्वोश्शूठ्' इति वकारस्य ऊडादेशः । अतीकाशाश्छि-

एतत्सर्वदेवत्यं यद्वासो यद्वाससा दी-
क्षयति सर्वाभिरेवैनं देवताभिर्दीक्षय-
ति बहिःप्राणो वै मनुष्यस्तस्याशं-
नं प्राणोऽश्नाति सप्राण एव दीक्षते

देवत्यम् । यत् । वासः । यत् । वाससा । दीक्ष-
यति । सर्वाभिः । एव । एनम् । देवताभिः । दीक्ष-
यति । [13]बहिःप्राण इति बहिः–प्राणः । वै । मनु-
ष्याः । तस्य । अशनम् । प्राण इति प्र–अनः ।
अश्नाति । सप्राण इति स–प्राणः । एव । दीक्षते ।

---

द्राणि प्राचीनतिरश्चीनान्तरवकाशाः, पूर्ववत्स्वरदीर्घत्वे । एवं यद्वा-
सो नाम तदेतत्खलु सर्वदेवत्यं सर्वदेवताभ्य इदं सर्वदेवत्यं, देव-
तान्तात्तादर्थ्ये यत् । तस्माद्वाससा दीक्षितः सर्वाभिर्देवताभिर्दी-
क्षितो भवति । एनादेशोनुदात्तः ॥

[13]अशनं विधास्यन् अशनीयं स्तौति—बहिःप्राण इति ॥
बहिर्भूता अन्नादयः प्राणहेतवो यस्य । बहिर्भूतैर्वा अन्नादिभिः
प्राणनं यस्येति व्यधिकरणो बहुव्रीहिः । यस्मादेवं तस्मात् तस्य
मनुष्यस्याशनं प्राणहेतुः । यद्वा—तस्य बहिर्भूतस्यान्नादेरशनं
स्वयं प्राणः । प्राणयति जीवयतीति प्राणः, पचाद्यच्,
थाथादिनोत्तरपदान्तोदात्तत्वम् । अश्नातीति विधिः । तस्माद-
श्नीयात्प्राणवत्त्वाय । पदात्परत्वाभावान्न निहन्यते । ‘ स्वरितो
वाऽनुदात्ते पदादौ ’ इति संहितायामाकारस्स्वर्यते । फलमाह—

आशितो भवति यावानेवास्य प्राण-
स्तेन सह मेधमुपैति घृतं देवानां
मस्तु पितृणां निष्पक्कं मनुष्याणां

आशितः । भवति । यावान् । एव । अस्य । प्राण इति प्र-अनः । तेन । सह । मेधम् । उपेति । एति । [14]घृतम् । देवानाम् । मस्तु । पितृणाम् । निष्पक्कमिति निः-पक्कम् । मनुष्याणाम् । तत् ।

---

सप्राण इति । अभ्यन्तरीकृतप्राण एवेत्यर्थः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । फलान्तरं चाह—आशितो भवतीति । 'आशितो भुवः' इति निपातनाद्दीर्घत्वम्, कर्तरि निष्ठा च । ण्यन्तात्कर्मणि निष्ठा । आशितो हि सुहितो भवतीति सुहितत्वं लक्ष्यते । सर्वथा पृषोदरादित्वादाद्युदात्तत्वं द्रष्टव्यम् । अशनेन ह्ययमाशितो भवति तस्मादाशितंभवमन्नादिकमश्नीयादिति । तदपि किमर्थमित्याह—यावानिति । अस्याशितस्य यावान्प्राणः तेन सर्वेण मेधं यज्ञमुपैति ॥

[14]अथ नवनीतेनाभ्यञ्जनं विधास्यन् तत्सर्वदेवत्यतया स्तौति—घृतमिति ॥ तिस्रोवस्थाः, नवनीतस्यैताः उद्धृतानुद्धृतविलीनस्वभावतया केचिदाहुः । घृतं अग्नौ विलीनम् । मस्तु स्वयं विलीनम् । निष्पक्कमौषधैः पक्कमिति नवनीतस्यैवावस्थास्तिस्रः इति । निष्पक्कमिति 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । तद्वा इति । तदेतत्सर्वदेवत्यम् । पूर्ववद्यत् । तस्मान्नवनीताभ्यञ्जनं

तद्वै ॥ ४ ॥ एतत्सर्वदेवत्यं यन्नवनी-
तं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देव-
ताः प्रीणाति प्रच्युतो वा एषोऽस्मा-
ल्लोकादगतो देवलोकं यो दीक्षितो-

वै ॥ ४ ॥ एतत् । सर्वदेवत्यमिति सर्व-देवत्यम् । यत् । नवनीतमिति नव-नीतम् । यत् । नवनी-तेनेति नव-नीतेन । अभ्यङ्क्ते इत्यभि-अङ्क्ते । स-र्वाः । एव । देवताः । प्रीणाति । प्रच्युत इति प्र-च्युतः । वै । एषः । अस्मात् । लोकात् । अगतः । देवलोकमिति देव-लोकम् । यः । दीक्षितः । अ-न्तरा । इव । नवनीतमिति नव-नीतम् । तस्मात् ।

---

सर्वासां देवतानां प्रीणनम् । अभ्यङ्क्ते इति । 'तिङि चोदा-त्तवति' इति गतेः अनुदात्तत्वम् । किं चेत्याह—प्रच्युत इति । प्रच्युतः व्यावृत्तोभवत् अप्राप्तश्च देवलोकमसमाप्तकर्मत्वात् । अन्तरा वर्तते । कः? यो दीक्षितः नवनीतं चान्तरेव मध्य-मायामिव अवस्थायां वर्तते । तस्मादनुलोमं यजुषेति विधिः । प्रच्युत इति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अस्मा-दिति 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । अनुलोममिति 'अच्प्रत्यन्ववपूर्वात्' इत्यच् । यजुषा 'महीनां पयोसि'*

---

*सं. ३-२-६.[1]

न्तरेव नवनीतं तस्मान्नवनीतेनाभ्यं-
क्तेऽनुलोमं यजुषा व्यावृत्त्या इन्द्रो
वृत्रमहन्तस्य कनीनिका पराऽपत-
त्तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृ-
व्यस्य वृङ्क्ते दक्षिणं पूर्वमाऽङ्क्ते ॥५॥

नवनीतेनेति नव–नीतेन । अभीति । अङ्क्ते । अनु-
लोममित्यनु–लोमम् । यजुषा । व्यावृत्त्या इति
वि–आवृत्त्यै । [15]इन्द्रः । वृत्रम् । अहन्न् । तस्य ।
कनीनिका । परेति । अपतत् । तत् । आञ्जनमि-
त्या–अञ्जनम् । अभवत् । यत् । आङ्क्त इत्या–
अङ्क्ते । चक्षुः । एव । भ्रातृव्यस्य । वृङ्क्ते । [16]दक्षि-

---

इत्यादिना । एवं क्रियमाणस्य मनुष्येभ्यो व्यावृत्त्यै भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[15]इन्द्रो वृत्रमहन्नित्यादि ॥ कनीनिका अक्षिस्थं कृष्णमण्डलं पराऽपतत् गळिता अभवत्, तदाञ्जनं द्रव्यमभवत् । तस्मादक्ष्णो-रञ्जनेन यजमानः भ्रातृव्यस्य शत्रोश्चक्षुर्वृङ्क्ते वर्जयति । वृजि वर्जने । 'व्यन् सपत्ने' इति भ्रातृव्यशब्दाद्व्यन् । तस्मादा-ञ्जीतेति विधिरनुमीयते ॥

[16]अथाञ्जने गुणविधयः—दक्षिणं पूर्वमित्यादि ॥ गतम् । न निधावते न भ्रमयति यस्मान्मनुष्या एव निधावन्तः अञ्जते ।

सव्यꣳ हि पूर्वं मनुष्या आञ्जते न नि धावते नीव हि मनुष्या धावन्ते पञ्च कृत्व आऽङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे परिमित-

णम् । पूर्वम् । एति । अङ्क्ते ॥ ५ ॥ सव्यम् । हि । पूर्वम् । मनुष्याः । आञ्जत इत्या—अञ्जते । न । नीति । धावते । नीति । इव । हि । मनुष्याः । धावन्ते । पञ्च । कृत्वः । एति । अङ्क्ते । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । परिमितमिति परि—मितम् । एति । अङ्क्ते । अपरिमितमित्यपरि—मितम् ।

---

सर्वत्र 'हि च' इति निघाताभावः । पञ्चकृत्वः एकैकस्य द्वयोर्वा पञ्चकृत्वः । कृत्व इति शब्दान्तरमेवेदमभ्यावृत्तिमाचष्टे । पञ्चाक्षरा पङ्क्तिः देवानां पङ्क्तेः पञ्चाक्षरत्वात् । पदानां वा पञ्चाक्षरत्वात् पङ्क्तिः पञ्चाक्षरेत्युच्यते । पङ्क्तेरागतः पाङ्क्तः । उत्सादित्वादञ् । धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या, तेन पङ्क्तिराप्यते । तत् यज्ञस्य पाङ्क्तत्वमिति । यज्ञः पाङ्क्त इति । एवमत्रापि पञ्चत्वसङ्ख्यासंपादनात् पाङ्क्तो यज्ञः परिगृहीतो भवतीति । परिमितं पञ्चैवेति परिच्छिन्नम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अपरिमितं अपरिच्छिन्नं

माऽङ्क्ते॑ऽपरिमित॒ꣳ हि म॑नु॒ष्या॑ आ॒ञ्जते॒ सतू॑ल॒याऽङ्क्ते॑ऽपतूल॒या हि म॑नु॒ष्या॑ आ॒ञ्जते॒ व्यावृ॑त्त्यै॒ यदप॑तूलयाऽऽञ्जीत वज्र॑ इव स्या॒त्सतू॑ल॒याऽङ्क्ते॑ मि॒त्र॒त्वाय॑ ॥ ६ ॥ इन्द्रो॑ वृ॒त्रम॑ह॒न्त्सो॒ऽपो॒ऽभ्य॑म्रि-

हि । म॒नु॒ष्याः॑ । आ॒ञ्जत॒ इत्या॑—अ॒ञ्जते॑ । सतू॑ल॒येति॒ स—तू॒ल॒या । एति॑ । अ॒ङ्क्ते॒ । अप॑तूल॒येत्यप॑—तू॒ल॒या । हि । म॒नु॒ष्याः॑ । आ॒ञ्जत॒ इत्या॑—अ॒ञ्जते॑ । व्यावृ॑त्त्या॒ इति॑ वि—आवृ॑त्त्यै । यत् । अप॑तूल॒येत्यप॑—तू॒ल॒या । आ॒ञ्जीतेत्या॑—अ॒ञ्जीत । वज्रः॑ । इ॒व॒ । स्या॒त् । सतू॑-ल॒येति॒ स—तू॒ल॒या । एति॑ । अ॒ङ्क्ते॒ । मि॒त्र॒त्वायेति॑ मि॒त्र—त्वाय॑ ॥ ६ ॥ [17]इन्द्रः॑ । वृ॒त्रम् । अ॒ह॒न्न् । सः । अ॒पः । अ॒भीति॑ । अ॒म्रि॒य॒त॒ । तासा॑म् । यत् ।

---

यथाऽभिप्रेतमावर्तयन्ति मनुष्याः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । सतू-लया साग्रेषीकया । अपतूलया शलाकया । पूर्ववत्स्वरः । व्यावृत्त्यै अमानुषीभूतत्वादस्य मनुष्येभ्यो व्यावृत्तिप्रकटनार्थम् । दक्षिणं पूर्व-मित्यादिष्वपि व्यावृत्त्या इति संबध्यते । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । अपतूलयाऽञ्जनं वज्र इव सर्वस्योपद्रवहेतुस्स्यात् । सतूलया तु सर्वस्य मित्रत्वाय भवति मित्रवदुपद्रवशान्त्यै भवति ॥

[17]दर्भपुञ्जीलैः पवनं विधास्यन् दर्भांस्तावत्स्तौति—इन्द्र इति ॥

यत् तासां यन्मेध्यं यज्ञियꣳ सदे-
वमासीत्तदपोदक्रामत्ते दर्भा अभवन्
यद्दर्भपुञ्जीलैः पवयति या एव मे-
ध्या यज्ञियास्सदेवा आपस्ताभिरेवै-

मेध्यम् । यज्ञियम् । सदेवमिति स–देवम् । आ-
सीत् । तत् । अप । उदिति । अक्रामत् । ते ।
दर्भाः । अभवन् । यत् । दर्भपुञ्जीलैरिति दर्भ–
पुञ्जीलैः । पवयति । याः । एव । मेध्याः । यज्ञि-
याः । सदेवा इति स–देवाः । आपः । ताभिः ।

इन्द्रेण हतो वृत्रः सोपोभि यत्रापस्तत्राम्रियत मृतो ऽभूत्
अपामुपरीत्यर्थः । ‘अभिरभागे’ इत्यभेः कर्मप्रवचनीयत्वम्, ‘कर्मप्रवचनीययुक्ते द्वितीया’ इत्यप्शब्दात् द्वितीया, तस्याः ‘ऊडिदम्’ इत्याद्युदात्तत्वम्, ‘स्वरितो वाऽनुदात्ते पदादौ’ इत्योकारस्स्वर्यते, ‘उदात्तस्वरितयोर्यणः’ इत्यस्वरितत्वम् । तासामपां यन्मेध्यं शुद्धं रूपम् । पूर्ववद्यत् । यज्ञियं यज्ञार्हम् । पूर्ववद्धः । सदेवं देवसहितं देवयोग्यमित्यर्थः । यदीदृशं रूपमासीत्, तदपोदक्रामत् अपोपहायोर्ध्वमगच्छत् । ते दर्भा अभवन् तद्दर्भभावं प्रत्यपद्यत । दर्भापेक्षया बहुवचनम् । तस्माद्दर्भपुञ्जीलैः पावनेन मेध्यत्वादिगुणादिभिरद्भिर्यजमानः पावितो भवति । तेन ‘दर्भपुञ्जीलैः पावयेत्’ इति विधिर्गम्यते । ‘प्वादीनां ह्रस्वः’ इति व्यत्ययेन णिच्यपि प्रवर्तते । ‘संज्ञापूर्वको विधिरनित्यः’ इति वा वृद्धिर्न क्रियते ॥

नं पवयति द्वाभ्यां पवयत्यहोरात्रा-
भ्यामेवैनं पवयति त्रिभिः पवयति
त्रयं इमे लोका एभिरेवैनं लोकैः पव-
यति पञ्चभिः ॥ ७ ॥ पवयति पञ्चाक्षरा
पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवय-

एव । एनम् । पवयति । [18]द्वाभ्याम् । पवयति ।
अहोरात्राभ्यामित्यहः—रात्राभ्याम् । एव । एनम् ।
पवयति । त्रिभिरिति त्रि—भिः । पवयति । त्रयः ।
इमे । लोकाः । एभिः । एव । एनम् । लोकैः ।
पवयति । पञ्चभिरिति पञ्च—भिः ॥ ७ ॥ पवयति ।
पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः ।

---

[18]द्वाभ्यामित्यादयो गुणविधयः । एकस्मिन्पवने अवयुत्य वादा एते इति केचित् । नानासंख्याविधीनामेकवाक्यत्वासंभवाद्विकल्प इत्यन्ये । अत्र संख्याविशेषाः संख्येयविशेषं सन्निधाप्य तेन स्तूयन्ते । त्रिभिः । 'षट्त्रिचतुर्भ्यो हलादिः' इति भिस उदात्तत्वम् । पञ्चभिः । झल्युपोत्तमस्योदात्तत्वम् । पञ्चाक्षरेत्यादि । व्याख्यातम्* । यज्ञाय । ननु सर्वेऽपि विधयः यज्ञायैव निर्वर्त्यन्ते, तत्कोऽस्य विशेषः? अयमस्ति विशेषः—यज्ञायैवेति यज्ञाविच्छेदः प्रतिपाद्यते; यथा यज्ञसंपादनैकरुचिः सर्वकालं भवति तथा पवयति । एवं नाम प्रशस्तं पञ्चभिः पवनमिति । पङ्क्तिः । पूर्व-

---

*सं ६-१-१.16

ति षड्भिः पवयति षड्वा ऋतव ऋतु-
भिरेवैनं पवयति सप्तभिः पवयति
सप्त छन्दांसि छन्दोभिरेवैनं पव-
यति नवभिः पवयति नव वै पुरुषे
प्राणास्सप्राणमेवैनं पवयत्येकविं-
शत्या पवयति दश हस्त्या अङ्गुल-

यज्ञाय । एव । एनम् । पवयति । षड्भिरिति षट्-
भिः । पवयति । षट् । वै । ऋतवः । ऋतुभिरि-
त्यृतु-भिः । एव । एनम् । पवयति । सप्तभिरिति
सप्त-भिः । पवयति । सप्त । छन्दांसि । छन्दो-
भिरिति छन्दः-भिः । एव । एनम् । पवयति ।
नवभिरिति नव-भिः । पवयति । नव । वै । पुरुषे ।
प्राणा इति प्र-अनाः । सप्राणमिति स-प्राणम् ।
एव । एनम् । पवयति । एकविंशत्येत्येक-विं-
शत्या । पवयति । दश । हस्त्याः । अङ्गुलयः ।

---

वड्भिस उदात्तत्वम् । सप्तभिः । पूर्ववदुपोत्तमस्योदात्तत्वम् । सप्त छन्दांसि गायत्र्यादीनि प्रधानानि । 'विश्वजनादीनां छन्दसि वेति वक्तव्यम्' इति तुगभावः । नवभिः । पूर्ववत्स्वरः । नव प्राणाः नवरन्ध्राधिष्ठानाः । सप्राणम् । शोधकगतं नवत्वं शोध्येऽपि पुरुषे नवत्वं प्रत्याययति । यद्वा—क्रियाविशेषणम्, सप्राणं

यो दश पद्या आत्मैकविँ्शो यावा-
नेव पुरुषस्तमपरिवर्गम् ॥ ८ ॥ पव-
यति चित्पतिस्त्वा पुनात्वित्याह

दश । पद्याः । आत्मा । एकविँ्श इत्येक–विँ्-
शः । यावान् । एव । पुरुषः । तम् । अपरिवर्गमि-
त्यपरि–वर्गम् ॥ ८ ॥ पवयति । [19]चित्पतिरिति
चित्–पतिः । त्वा । पुनातु । इति । आह । मनः ।

---

यथा पवयति प्राणैरेनं पवयतीत्यर्थः । एकविंशत्या । महा-
सङ्ख्यैषा, एका च विंशतिश्चैकविंशतिः । ‘ संख्या ’ इति पूर्व-
पदप्रकृतिस्वरत्वम् । हस्त्याः हस्ते भवाः । ‘ शरीरावयवाच्च ’
इति यत्, ‘ यतो नावः ’ इत्याद्युदात्तत्वम् । पद्याः पादे भवाः ।
पूर्ववत्प्रत्ययः, स्वरश्च, ‘ पद्यत्यतदर्थे ’ इति पद्भावः । आत्मा
शरीरमेकविंशः एकविंशतेः पूरणः, ‘ तिविंशतेर्डिति ’ इति ति-
लोपः । एवं यावान्पुरुषः तमपरिवर्गं किंचिदप्यपरिहाप्य सम-
स्तमेव पवयति । छान्दसो घञ् । यद्वा—परिवर्जनीयं परिवर्गः,
कर्मणि घञ्, ‘ चजोः कु घिण्यतोः ’ इति कुत्वम् । नास्य
परिवर्जनीयमस्तीति । व्यत्ययेन ‘ नञ्सुभ्याम् ’ इति न क्रियते ॥

[19]इदानीं मन्त्रार्थमनुसन्धत्ते—चित्पतिस्त्वा पुनात्वित्याहेति ॥
चित्पतिः त्वा पुनातु इति यस्मादाह, तस्मात् मनसैव एनं पव-
यति । कुतः ? मनो वै चित्पतिः चेतनस्येन्द्रियाणां वा पातृ-
त्वात् चित्पतिः । ‘पत्यावैश्वर्ये’ इत्यस्मिन् ‘ न भूवाक्चिद्दिधिषु ’

मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति तस्य ते पवित्रपते पवित्रेण यस्मै कं

वै। चित्पतिरिति चित्-पतिः। मनसा। एव। एनम्। पवयति। वाक्पतिरिति वाक्-पतिः। त्वा। पुनातु। इति। आह। वाचा। एव। एनम्। पवयति। देवः। त्वा। सविता। पुनातु। इति। आह। सवितृप्रसूत इति सवितृ-प्रसूतः। एव। एनम्। पवयति। तस्य। ते। पवित्रपत इति पवित्र-पते। पवित्रेण। यस्मै। कम्। पुने। तत्।

---

इति प्रतिषिद्धे ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम्। वाक्पतिः वागिन्द्रियस्याधिष्ठाता। वाचा। ‘ सावेकाचः ’ इति विभक्तेरुदात्तत्वम्। सवितृप्रसूत एव सवित्रा प्रेरित एव पवयति। ‘ तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरत्वम्। पू प्रेरणे। अनुज्ञाकर्मणस्तु सौतेः सविता सूतः, इति पदद्वयस्यासम्भवः; अनुदात्तत्वात् ह्रस्वान्तत्वाच्च। तस्य त इति। तच्छेकेयमित्यन्तं यस्मादाह तस्मात् एतां तस्य ते इत्यादिस्वरूपामाशि-

पुने तच्छंकेयमित्याहाशिषमेवैतामा
शास्ते ॥ ९ ॥
यावन्तो वै देवा यज्ञायापुनत त

शकेयम् । इति । आह । आशिषमित्या–शिषम् ।
एव । एताम् । एति । शास्ते ॥ ९ ॥

अतीकाशान्करोत्यवेशयन्तीर्थे स्नाति
प्रघातो मनुष्याणां तद्वा आऽङ्क्ते मित्र-
त्वायं पञ्चभिरपरिवर्गमष्टाचं-
त्वारिंशच्च ॥ १ ॥

[1]यावन्तः । वै । देवाः । यज्ञाय । अपुनत । ते ।

---

षमात्मन आशास्ते यजमानः । यजमानत्वादस्य । यथोक्तं 'यजमानं वाचयति' इति ॥

इति षष्ठे काण्डे प्रथमप्रश्ने प्रथमोनुवाकः

---

[1]अथ पवनस्यैवार्थवादशेषः—यावन्त इत्यादि ॥ पुनर्वचनं प्राशस्त्यातिशयप्रदर्शनार्थम् । यत्परिमाणा देवा यज्ञार्थमपुनत सद्भेपुञ्जीलाभिरद्भिः दीक्षित्वा शुद्धाः ते तावन्त एवाभवन् भूतिमन्तस्संपन्नाः । एवं नाम प्रशस्ततममिदमिति यज्ञार्थेषु कर्मसु पवमानमाद्दतवन्त एव सिद्धिभाजो भवन्ति । यद्वा—यज्ञाय

एवाभवन् य एवं विद्वान् यज्ञायं पु-
नीते भवत्येव बहिः पवयित्वाऽन्तः
प्र पादयति मनुष्यलोक एवैनं पव-
यित्वा पूतं देवलोकं प्रणयत्यदीक्षित

एव । अभवन् । यः । एवम् । विद्वान् । यज्ञायं ।
पुनीते । भवति । एव । [2]बहिः । पवयित्वा । अन्तः ।
प्रेति । पादयति । मनुष्यलोक इति मनुष्य–लोके ।
एव । एनम् । पवयित्वा । पूतम् । देवलोकमिति
देव–लोकम् । प्रेति । नयति । [3]अदीक्षितः । एकं-

---

यज्ञसंपादने एव सर्वदा भूयास्मेत्यभिसन्धिना एतत्पवनमकुर्वन्निति । तस्माद्य एवं विद्वान् यज्ञार्थमनेन विधिना शुद्धिमिच्छति स भवत्येव भूतिं भजते वर्धते इत्यर्थः ॥

[2]बहिः पवयित्वाऽन्तः प्र पादयतीति विधिः ॥ बहिरुदकसमीपे पवयित्वा शालायामन्तः प्रवेशयति । स्तौति—मनुष्यलोक इति । गतम् । प्रणयति प्रापयति ॥

[3]अथ दीक्षाहुतीर्विधास्यन् अभिमतसंख्याप्रतिपादनार्थमाह— अदीक्षित इति ॥ एकयेति चतसृणामभावो लक्ष्यते, यदि चतस्रो न जुहुयात् तदा एकया अदीक्षित एव स्यादित्याहुः । तस्मात्स्रुवेण चतस्रो जुहोतीति विधिः । अन्ये तु ब्रुवते—एकाहुतिः दीक्षणीया । दीक्षाहुतीनामनेकत्वात् यदीमा दीक्षाहुतीर्न जुहु-

एकयाऽऽहुत्येत्याहुस्स्रुवेण चतस्रो
जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं
पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमे-
वाव रुन्ध आकूत्यै प्रयुजेऽग्नये

याः । आहुत्येत्या—हुत्या । इति । आहुः । स्रुवेण ।
चतस्रः । जुहोति । दीक्षितत्वायेति दीक्षित—त्वाय ।
स्रुचा । पञ्चमीम् । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः ।
पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । [4]आ-
कूत्या इत्या—कूत्यै । प्रयुज इति प्र—युजे । अग्न-

यात्, तदा दीक्षणीयया एकयाऽऽहुत्या दीक्षितत्वाभावात् अदीक्षित एव स्यादित्याहुः । तस्माद्दीक्षाहुतीर्जुहुयादिति । तत्र चतुष्टयं विधातुं चतस्र इत्युक्तम् । आहुतिशब्दे 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । दीक्षितत्वाय दीक्षाहुतिभिरेव दीक्षितस्संपद्यते इति कृत्वा तत उपपद्यते । मेखलया संयोजयति दीक्षितमित्यादि । ताश्च आकूत्या इत्याद्याः* । स्रुचा पञ्चमीमिति । इयं च 'आपो देवीः'* इत्यादिका । स्रुचा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । पञ्चाक्षरेति । व्याख्यातम्† ॥

[4]मन्त्रार्थमनुसन्धत्ते—आकूत्या इत्यादि ॥ आकूत्या संकल्पेन हि पुरुषो यजेयेति यज्ञमभि प्रयुङ्क्ते आभिमुख्येन मनसा यज्ञं

*सं ६-१-२.4—7 †सं. ६-१-१.10

॥ १० ॥ स्वाहेत्याहाकूत्या हि पुरुषो यज्ञमभि प्रयुङ्क्ते यजेयेति मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचै-

यै ॥ १० ॥ स्वाहा । इति । आह । आकूत्येत्या-कूत्या । हि । पुरुषः । यज्ञम् । अभीति । प्रयुङ्क्ते इति प्र-युङ्क्ते । यजेय । इति । [5]मेधायै । मनसे । अग्नये । स्वाहा । इति । आह । मेधया । हि । मनसा । पुरुषः । यज्ञम् । अभिगच्छतीत्यभि-गच्छति । [6]सरस्वत्यै । पूष्णे । अग्नये । स्वाहा । इति । आह । वाक् । वै । सरस्वती । पृथिवी । पूषा । वाचा । एव । पृथिव्या । यज्ञम् । प्रेति । युङ्क्ते ।

---

प्रयोजयति । यस्मादेवं तस्मात् आकूत्यै प्रयुजे अग्नये स्वाहेति मन्त्रमाह ॥

[5]मेधा ग्रन्थार्थधारणशक्तिः । तद्वत्त्वेन हि हेतुना पुरुषो मनसा यज्ञमभिगच्छति अभिप्राप्नोति ऊहापोहादिविज्ञानेन निश्चिनोति । सर्वत्र 'हि च' इति निघाताभावः ॥

[6]पृथिवी पूषा ; वृष्टिहेतुत्वात् । वाचा पृथिव्या च यज्ञं

व पृथिव्या यज्ञं प्र युङ्क्ते आपो दे-
वीर्बृहतीर्विश्वशम्भुव इत्याह या वै
वर्ष्यास्ताः ॥ ११ ॥ आपो देवीर्बृह-

[7]आपः । देवीः । बृहतीः । विश्वशम्भुव इति विश्व-
शम्भुवः । इति । आह । याः । वै । वर्ष्याः । ताः ।
॥ ११ ॥ आपः । देवीः । बृहतीः । विश्वशम्भुव

---

प्रयुङ्क्ते प्रवर्तयति । एकत्र 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।
इतरत्र 'उदात्तयणो हल्पूर्वात्' इति ॥

[7]आप इत्यादि ॥ या वर्ष्या वर्षे भवा आपः, ता देव्यो
बृहत्यो विश्वशम्भुवश्च । वर्षशब्दात् 'भवे छन्दसि' इति यत् ।
अत्र मन्त्रे आप इत्यादीनामामन्त्रितत्वादामन्त्रितस्वरो भवति,
तत्र आप इत्यपदात्परत्वात् पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । 'वि
भाषितं विशेषवचने बहुवचनम्' इति तस्याविद्यमानत्वनिषेधात्
शेषाणामाष्टमिकमामन्त्रिताद्युदात्तत्वम् । ब्राह्मणे त्वनामन्त्रितत्वात्
यथास्वं स्वरप्रवृत्तिः । तत्र देवीशब्दः पचादिषु देवडिति पा-
ठात् 'टिड्ढाणञ्' इति ङीप्, उदात्तनिवृत्तिस्वरेणान्तोदात्तः ।
बृहतीशब्दः गौरादिङीषन्तः । उभयत्रापि 'वा छन्दसि' इति
पूर्वसवर्णदीर्घत्वम् । विश्वाऽपि प्रवृत्तिर्यासां प्रजानां सुखस्य भा-
वयित्री । अन्तर्भावितण्यर्थात् भवतेः क्विप् । ण्यन्ताद्वा क्विपि
'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति णिलुक् । 'बहुव्रीहौ विश्वं
संज्ञायाम्' इति विश्वशब्दोन्तोदात्तः । वर्ष्याः खल्वापः सस्या-
दिनिष्पत्तिद्वारेण विश्वस्य लोकस्य सुखं भावयन्तीत्येवमुच्यते ॥

तीर्विश्वशम्भुवो यदेतद्यजुर्न ब्रूया-
द्दिव्या आपोऽशान्ता इमं लोकमाग-
च्छेयुरापो देवीर्बृहतीर्विश्वशम्भुव
इत्याहास्मा एवैना लोकाय शम-
यति तस्माच्छान्ता इमं लोकमाग-

इति विश्व–शम्भुवः । [8]यत् । एतत् । यजुः । न ।
ब्रूयात् । दिव्याः । आपः । अशान्ताः । इमम् ।
लोकम् । एति । गच्छेयुः । आपः । देवीः । बृह-
तीः । विश्वशम्भुव इति विश्व–शम्भुवः । इति ।
आह । अस्मै । एव । एनाः । लोकाय । शमय-
ति । तस्मात् । शान्ताः । इमम् । लोकम् । एति ।

---

[8]मन्त्रपदानि व्याख्याय मन्त्रप्रयोजनमिदानीमाह—यदिति ॥ नन्वियं त्रिपदा विराडेकादशाक्षरा, तत्किमुच्यते यदेतद्यजुरिति? अनवसानत्वमात्रेण यजुष्ट्वमुपचर्यते इत्यदोषः । यद्वा—स्वाहाकाराधिक्येन ऋग्यजुषसमुदायात्मकत्वात् अवयवधर्मेण समुदायो व्यपदिश्यते इति । दिवमन्तरिक्षं अर्हन्तीति दिव्याः, दण्डादित्वाद्यः । भवार्थे वा दिगादित्वाद्यति उत्सादित्वादन्तोदात्तत्वम् । अशान्ताः असुखा रोगाद्युपद्रवहेतवः इमं मनुष्यलोकमागच्छेयुः अस्मिन् मनुष्यलोके पतेयुः । तस्मात् 'आपः'* इत्युदितं यजुः यस्मादाह तस्मात् अस्मै दिव्याय लोकाय एना दिव्या आपः

---

* सं. १-२-२५.

च्छन्ति द्यावापृथिवी इत्याह द्यावा-
पृथिव्योर् हि यज्ञ उर्वन्तरिक्षमि-
त्याहान्तरिक्षे हि यज्ञो बृहस्पतिर्नो
हविषा वृधातु ॥ १२ ॥ इत्याह ब्रह्म
वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै य-

गच्छन्ति । [१]द्यावापृथिवी इति द्यावा—पृथिवी । इति । आह । द्यावापृथिव्योरिति द्यावा—पृथिव्योः । हि । यज्ञः । उरु । अन्तरिक्षम् । इति । आह । अन्तरिक्षे । हि । यज्ञः । बृहस्पतिः । नः । हविषा । वृधातु ॥ १२ ॥ इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै ।

---

शमयति स्तोत्रेण प्रसाद्यास्य सुखाः करोति । तस्माच्छान्ताः इदानीमिमं लोकमागच्छन्ति ॥

[१]द्यावापृथिवी इत्याहेति ॥ द्यावापृथिव्यौ वर्धयितव्ये मन्त्र आह । क उपकारो भवति यज्ञस्येति चेत् आह—द्यावापृथिव्योर्हि यज्ञः, वृष्ट्यन्नादिना तदाश्रयत्वाद्यज्ञस्य । यद्वा—द्यावापृथिव्योः यज्ञफलं वर्तते तस्य तयोस्सुखार्थत्वात् । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । ततः 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । अन्तरिक्षे हि यज्ञ इति । अन्तरिक्षेऽपि हि यज्ञ इत्यर्थः । अन्तरिक्षाश्रयत्वान्म

ज्ञमवं रुन्धे यद्ब्रूयाद्विधेरिति यज्ञ-
स्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणु-
मेव परि वृणक्ति प्रजापतिर्यज्ञम-

यज्ञम् । अवेति । रुन्धे । [10]यत् । ब्रूयात् । विधेः ।
इति । यज्ञस्थाणुमिति यज्ञ-स्थाणुम् । ऋच्छेत् ।
वृधातु । इति । आह । यज्ञस्थाणुमिति यज्ञ-स्था-
णुम् । एव । परीति । वृणक्ति । [11]प्रजापतिरिति
प्रजा-पतिः । यज्ञम् । असृजत । सः । अस्मात् ।

---

नसा द्रव्यप्रक्षेपादौ । यद्वा—अन्तरिक्षचारिणामपि सुखार्थत्वात्
अन्तरिक्षेऽपि यज्ञफलम् । वृहस्पतिर्न इत्यादि । गतम् । बृह-
स्पतिशब्दो वनस्पत्यादिः पारस्करादिश्च ॥

[10]यद्ब्रूयादिति ॥ अत्र शाखान्तरे 'बृहस्पतिर्नो हविषा वृधेः'
इत्याम्नायते । वृधेर्लिङि विधेः । तन्निन्दति ब्राह्मणमितरवि-
धानार्थम् । यज्ञस्थाणुं यज्ञप्रतिबन्धं यजमान ऋच्छेत् प्राप्नु-
यात्तस्मात् वृधात्वित्याह । उभयोरप्यनुकरणत्वात् तिङः परत्वेऽपि
निघातो न निवर्तते । यस्माद्वृधात्वित्याह, तस्माद्यज्ञस्थाणुं परि-
वृणक्ति सर्वतो वर्जयति । वृजी वर्जने । वृधेर्ण्यन्ताल्लोटि
'बहुलमन्यत्रापि' इति णिलुक्, विकरणव्यत्ययेन शः, वर्ण-
व्यत्ययेन दीर्घत्वम् । वृधातु वर्धयत्वित्यर्थः ॥

[11]अथोद्ग्रहणहोमं विधास्यन् पदं तावन्निर्वक्तुमाह—प्रजापतिरि-
त्यादि ॥ प्रजापतिना सृष्टो यज्ञः अस्मात्प्रजापतिसकाशात् प-

सृजत सोऽस्मात्सृष्टः पराङैत्स प्र य-
जुरव्लीनात्प्र साम तमृगुदयच्छद्य-
दृगुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वमृचा
॥ १३ ॥ जुहोति यज्ञस्योद्यत्या अ-

सृष्टः । पराङ् । ऐत् । सः । प्रेति । यजुः । अव्ली-
नात् । प्रेति । साम । तम् । ऋक् । उदिति । अय-
च्छत् । यत् । ऋक् । उदयच्छदित्युत्–अयच्छत् ।
तत् । औद्ग्रहणस्येत्यौत्–ग्रहणस्य । औद्ग्रहणत्व-
मित्यौद्ग्रहण–त्वम् । ऋचा ॥ १३ ॥ जुहोति । य-
ज्ञस्य । उद्यत्या इत्युत्–यत्यै । अनुष्टुबित्यनु–स्तु-

---

राङैत् पराङ्मुखोगच्छत् । परागञ्चतीति ऋत्विगादिना क्विनि हल्ङ्यादिसंयोगान्तलोपयोः 'क्विन्प्रत्ययस्य कु.' इति कुत्वम्, 'अनिगन्तोञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् । अथ स यज्ञ आत्मानमानेतुमागतं यजु' प्राव्लीनात् प्रावृणोत्प्राच्छादयत् । व्ली वरणे । साम च प्राव्लीनात् । 'चादिलोपे विभाषा' इति तिङ्विभक्तिर्न निहन्यते । अथ 'विश्वे देवस्य'* इत्यादिका ऋक्तं यज्ञमुदयच्छत् उद्गृह्यानीतवती । यस्मादियमृगुदयच्छत् तस्मादियमृगुद्ग्रहणी । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । यस्मादियमृगुद्ग्रहणी तस्मादनेन मन्त्रेण क्रियमाणस्य औद्ग्रहणहोमस्य औद्ग्रहणत्वम् । 'तस्माद्यज्ञस्यानयनार्थमौद्ग्रहणं जुहुयात्' इति विधिरनुमीयते ।

---

*स. १-२-२,६

नुष्टुप्छन्दंसामुदंयच्छदित्यांहुस्तस्मां-
दनुष्टुभां जुहोति यज्ञस्योद्यंत्यै द्वादं-
श वात्सबन्धान्युदंयच्छन्नित्यांहुस्त-
स्मांद्वादशभिंर्वात्सबन्धविदों दीक्ष-

प् । छन्दंसाम् । उदिति । अयच्छत् । इति । आहुः ।
तस्मांत् । अनुष्टुभेत्यंनु-स्तुभां । जुहोति । यज्ञस्यं ।
उद्यंत्या इत्युत्-यत्यै । [12]द्वादंश । वात्सबन्धानीति
वात्स-बन्धानि । उदिति । अयच्छन् । इति ।
आहुः । तस्मांत् । द्वादशभिरिति द्वादश-भिः ।
वात्सबन्धविद इति वात्सबन्ध-विदंः । दीक्षयन्ति ।

---

ऋचा जुहोतीति ऋक्त्वस्य विधिः । फलमाह—यज्ञस्योद्यत्यै 'तादौ च निति' इति पूर्वपदप्रकृतिस्वरत्वम् । छन्दसां मध्ये अनुष्टुबुदयच्छदित्याहुः । तस्मादनुष्टुभा जुहोतीत्यनुष्टप्त्वस्य विधिः । तदेव फलम् । एवमस्य मन्त्रस्य ऋक्त्वमनुष्टुप्त्वं च ज्ञात्वैव होमः कर्तव्य इति भावः ॥

[12]कथमिदं चापि ज्ञातव्यमित्याह—द्वादशेति ॥ वत्सस्य बन्धनानि वत्सबन्धाः, वत्सो यैर्बद्धा आनीयते, त इव वात्सबन्धानि, 'शर्करादिभ्योण्' इतीवार्थेऽण् । तानि द्वादश यज्ञमुदयच्छन्नित्याहुः । वत्स इव यज्ञो द्वादशभिर्बन्धैर्बद्ध आनीयते इत्याहुः । तानि च विश्वे इत्यादीनि द्वादश पदानि

यन्ति सा वा एषर्गनुष्टुग्वागनुष्टुग्य-
देतयर्चा दीक्षयंति वाचैवैनꣳ सर्वया
दीक्षयति विश्वे देवस्यं नेतुरित्याह

[13]सा । वै । एषा । ऋक् । अनुष्टुगित्यनु—स्तुक् । वाक् ।
अनुष्टुगित्यनु—स्तुक् । यत् । एतया । ऋचा । दीक्ष-
यंति । वाचा । एव । एनम् । सर्वया । दीक्षयति ।
[14]विश्वे । देवस्य । नेतुः । इति । आह । सावित्री ।

---

एतदृक्संबन्धीनि । तस्मादेभिः द्वादशभिः पदैः ज्ञायमानैः वात्स-बन्धविदस्सन्तोध्वर्यवो दीक्षयन्ति । 'झल्युपोत्तमम्' इत्युपोत्तम-स्योदात्तत्वम् । एवमस्या ऋचः पदसंख्या स्तुता । केचिदाहुः— आकूत्या इत्यादीनि ध्रुवाहुतिसंबन्धीनि । अस्वाहाकाराणि पदानि द्वादश वात्सबन्धानीति । अथवा—अग्निरेक एव सर्वत्रेति आकूत्या इत्यादीनि नव पदानि ऋचि पितृदेवत्यव्यतिरिक्तानि त्रीणि द्वादशेति । उद्ग्रहण्यधिकारे कः प्रसंगोन्येषामिति चिन्त्यमेतत् ॥

[13]अथ प्रकारान्तरेणानुष्टुप्त्वं स्तूयते—सा वा एषेति ॥ ऋ-क्सर्वा अनुष्टुप् 'वागनुष्टुक्' इति प्रदेशान्तरे दर्शनात् सैषा वागनुष्टुक् । तस्मादेतया अनुष्टुभा ऋचा दीक्षयति सर्वया वा-चा एनं दीक्षयति ॥

[14]अथ सर्वदेवत्यतया ऋगियं स्तूयते—सावित्री सवितृदेवत्या नेता देवस्सवितेति कृत्वा । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्, 'उदात्तस्वरितयोर्यणः' इति संहितायां ततः परस्स्वर्यते । पितृ-

सावित्रयैतेन मर्तो वृणीत सख्यम्
॥ १४ ॥ इत्याह पितृदेवत्यैतेन वि-
श्वे राय इषुध्यसीत्याह वैश्वदेव्यैतेन
द्युम्नं वृणीत पुष्यस इत्याह पौष्ण्यै-
तेन सा वा एषर्क्सर्वदेवत्या यदे॒त-
यर्चा दीक्षयति सर्वाभिरेवैनं देव-
ताभिर्दीक्षयति सप्ताक्षरं प्रथमं प-

एतेन । मर्तः । वृणीत । सख्यम् ॥ १४ ॥ इति ।
आह । पितृदेवत्येति पितृ-देवत्या । एतेन । विश्वे ।
रायः । इषुध्यसि । इति । आह । वैश्वदेवीति वैश्व-
देवी । एतेन । द्युम्नम् । वृणीत । पुष्यसे । इति ।
आह । पौष्णी । एतेन । सा । वै । एषा । ऋक् ।
सर्वदेवत्येति सर्व-देवत्या । यत् । एतया । ऋचा ।
दीक्षयति । सर्वाभिः । एव । एनम् । देवताभिः ।
दीक्षयति । [15] सप्ताक्षरमिति सप्त-अक्षरम् । प्रथ-

---

देवत्या, मर्त इति म्रियत्यर्थश्रुतेः । देवतान्तात्तादर्थ्ये यत् ।
वैश्वदेवी; विश्वश्रुतेः । पौष्णी; पुष्यसे इति पुष्यर्थश्रुतेः ।
सा तादृश्येषा ऋक् सर्वदेवत्या । पूर्ववद्यत् । यदेतयेत्यादि । गतम् ॥

[15]अथ सर्वच्छन्दस्त्वेन स्तूयते—सप्ताक्षरं प्रथमं पदं प्रथमः
पादः । अष्टाक्षराणि त्रीणि शिष्टानि पदानि द्वितीयतृतीयच-

दमुष्टाक्षराणि त्रीणि यानि त्रीणि
तान्युष्टावुप यन्ति यानि चुत्वारि ता-
न्युष्टौ यद्ष्टाक्षरा तेन ॥१५॥गाय-

मम् । पुदम् । अुष्टाक्षराणीत्युष्टा—अुक्षराणि । त्री-
णि । [16]यानि । त्रीणि । तानि । अुष्टौ । उपेति ।
यन्ति । यानि । चुत्वारि । तानि । अुष्टौ । यत् ।
अुष्टाक्षरेत्युष्टा—अुक्षरा । तेन ॥ १५ ॥ गायत्री ।

---

तुर्थानि । ननु द्वितीयं सप्ताक्षरम्? इयादिपूरणेनाष्टाक्षरं भवि-
ष्यति । तर्ह्यनेन न्यायेन प्रथममप्यष्टाक्षरं स्यात्? प्रयोजना-
भावादियादिपूरणाप्रवृत्तेः । द्वितीये त्वस्ति प्रयोजनम् । अष्टा-
क्षराणि त्रीण्येतत्संपादनार्थत्वात् । ननु समाने सप्ताक्षरत्वे किं का-
रणमेकं यथा समाम्नातं सप्ताक्षरमाह, इतरं त्वियादिपूरणेनाष्टा-
क्षरम् । उच्यते—न न्यूनाक्षरत्वमात्रेणेयादिना पूरयितव्यम्,
अपि तु वृत्त्यनुरोधेन, तत्राष्टाक्षरस्य पादस्य वृत्तिलक्षणं पञ्चम-
मक्षरं सप्तमं च लघु स्यात्, षष्ठं गुर्विति, न च प्रथमे पादे
इयादिपूरिते अभीष्टवृत्तिलाभः; सत्यप्यस्मिन् सप्तमस्य गुरुत्वात्
षष्ठस्य लघुत्वापत्तेः, पञ्चमस्य प्रागेव लघुत्वात् । तस्मादियादिपू-
रणाप्रसंगात् सप्ताक्षरं प्रथममित्याह । द्वितीये त्वियादिपूरणे
सप्तमस्य लघुवृत्तित्वं क्रियते इति तस्येयादिपूरणस्य युक्तत्वात्
अष्टाक्षराणि त्रीण्याहेति वेदितव्यम् ॥

[16]अथ छन्दसां संख्याविशेषानुत्पादयति—यानीति ॥ इयमे-
कत्रिंशदक्षरा, अष्टौ, एकादश च, द्वादश च एकत्रिंशद्भवन्ति ।

त्री यदेकादशाक्षरा तेन त्रिष्टुग्यद्द्वा-
दशाक्षरा तेन जगती सा वा एषर्क्स-
र्वाणि छन्दाꣳसि यदेतयर्चा दीक्षय-
ति सर्वाभिरेवैनं छन्दोभिर्दीक्षयति

यत् । एकादशाक्षरेत्येकादश—अक्षरा । तेन । त्रि-
ष्टुक् । यत् । द्वादशाक्षरेति द्वादश—अक्षरा । तेन ।
जगती । सा । वै । एषा । ऋक् । सर्वाणि । छन्दा-
ꣳसि । यत् । एतया । ऋचा । दीक्षयति । सर्वाभिः ।
एव । एनम् । छन्दोभिरिति छन्दः—भिः । दीक्ष-

---

तत्र प्रथमस्य सप्ताक्षरस्य यानि त्रीण्यक्षराणि तान्यष्टौ तृतीय-
पादात्मकान्यक्षराणि उपयन्ति उपगच्छन्ति । अथ यान्यवशि-
ष्टानि चत्वारि, तानि चाष्टौ चतुर्थपादाक्षराण्युपयन्ति । द्वितीयः
पादोऽष्टाक्षर एवावतिष्ठते । तथा सति यस्मादियमष्टाक्षरा द्वितीयेन
पादेन, तेनेयं गायत्री । यस्मादियमेकादशाक्षरा तृतीयेन पादेन, तेनेयं
त्रिष्टुक् । यस्माच्चेयं द्वादशाक्षरा चतुर्थेन पादेन, तेनेयमृग्जगती । एता-
न्येव प्रधानानि सवनत्रयगतानि छन्दांसि । तस्मात्तादृश्येषा ऋक्
सर्वाणि छन्दांसि । यदेतयेत्यादि । गतम्* । यद्वाभ्यामष्टाक्षराभ्यां
द्वादशाक्षरेण च एकोनोष्णिगिति उष्णिक्परिगृहीता । चतुर्भिरष्टाक्षरै-
रनुष्टुप् इत्यनुष्टुप्परिगृहीता । बृहती, द्वादशाक्षरा त्रयश्चाष्टाक्षरा इति
बृहती परिगृहीता । पङ्क्तिः, द्वादशाक्षरा अष्टाक्षरा चेति पङ्क्तिः परिगृ-
हीता । गायत्र्यादयस्तु प्राधान्याद्ब्राह्मणेन दर्शिता इति वेदितव्यम् ॥

---

*सं ६-१-२.14

सप्ताक्षरं प्रथमं पदꣳ सप्तपदा शक्करी पशवश्शक्करी पशूनेवावं रुन्ध एक-स्मादक्षरादनाप्तं प्रथमं पदं तस्माद्य-द्वाचोनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजा-

यति । [17]सप्ताक्षरमिति सप्त-अक्षरम् । प्रथमम् । पदम् । सप्तपदेति सप्त-पदा । शक्करी । पशवः । शक्करी । पशून् । एव । अवेति । रुन्धे । एकस्मात् । अक्षरात् । अनाप्तम् । प्रथमम् । पदम् । तस्मात् । यत् । वाचः । अनाप्तम् । तत् । मनुष्याः । उपेति । जीवन्ति । [18]पूर्णया । जुहोति । पूर्णः । इव । हि ।

---

[17]इदानीं प्रथमस्य सप्ताक्षरत्वमपि महते गुणायेत्याह—यस्मा-दियं प्रथमपादे सप्तत्वसंख्ययाऽवरुद्धा, यतश्च सप्तपदा शक्करी सप्तभिरष्टाक्षरैश्शक्करी पद्भश्चाशदक्षरेति, यस्माच्च पशवः शक्करी शाक्कराः पशव इति तस्मादेतयर्चा दीक्षितः पशूनवरुन्धे । किं चेत्याह—एकस्मादिति । यस्मादियं प्रथमे पादे एकस्मादक्षरा-दनाप्ता एकमक्षरमभिसमीक्ष्य अपूर्णा वर्तते तस्मादनया ईदृक्स्व-भावया आहुतिकरणात् यद्वाचोनाप्तमपरिपूर्णं तुरीयं तदेवाद्यापि मनुष्या उपजीवन्ति । 'तुरीयं वाचो मनुष्या वदन्ति '* इति ॥

[18]एवं न्यूनत्वं निन्दितम् । अधुना पूर्णत्वं न्यूनत्वं च स्तूय-

---

*ब्रा. २-८-८.

पतिः प्रजापतेराप्त्यै न्यूनया जुहो-
ति न्यूनाद्धि प्रजापतिः प्रजा अ-
सृजत प्रजानाꣳ सृष्ट्यै ॥१६॥

प्रजापतिरिति प्रजा–पतिः । प्रजापतेरिति प्रजा–
पतेः । आप्त्यै । न्यूनयेति नि–ऊनया । जुहोति ।
न्यूनादिति नि–ऊनात् । हि । प्रजापतिरिति प्रजा–
पतिः । प्रजा इति प्र–जाः । असृजत । प्रजाना-
मिति प्र–जानाम् । सृष्ट्यै ॥ १६ ॥

अग्नये ता वृधात्वृचा सख्यं तेन जु-
होति पञ्चदश च ॥ २ ॥

---

ते—पूर्णयेति ॥ यस्माद्द्वितीयादिभिः पादैः पूर्णस्वभावा वाक् तस्मादनया होमः प्रजानां सृष्ट्यै भवति । कुतः ? न्यूनाद्धि प्रजापतिः प्रजा असृजत, नितरामूनं न्यूनं प्रशान्तविकारमुपादानम् । एतस्माद्धि प्रजास्सृष्टाः मृत्पिण्डादिव घटशरावादिविकाराः । प्रजापतिशब्दे 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । अव्ययपूर्वपदप्रकृतिस्वरत्वेन न्यूनशब्दे 'उदात्तस्वरितयोर्यणः' इति संहितायां ततः परः ऊकारस्स्वर्यते । असृजतेति 'हि च' इति निघाताभावे अनुदात्तत्वम् ॥

इति षष्ठे प्रथमे द्वितीयोनुवाकः.

ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठ-
माने कृष्णो रूपं कृत्वाऽपक्रम्या-
तिष्ठतां तेऽमन्यन्त यं वा इमे उपा-

[1]ऋक्सामे इत्यृक्—सामे । वै । देवेभ्यः । यज्ञा-
य । अतिष्ठमाने इति । कृष्णः । रूपम् । कृत्वा ।
अपक्रम्येत्यप—क्रम्य । अतिष्ठताम् । ते । अम-
न्यन्त । यम् । वै । इमे इति । उपावर्त्स्यत इ-

---

[1]कृष्णाजिनेन दीक्षां विधास्यन् तद्गुणानाह—ऋक्सामे इति ॥ ऋक्च साम च ऋक्सामे, अचतुरादिसूत्रे अच्प्रत्ययान्तो निपात्यते । ते यज्ञार्थं देवेभ्यः अतिष्ठमाने अप्रकाशमाने अप्रकाशनहेतोः कृष्णमृगो भूत्वा तदीयं च रूपं कृत्वा देवसकाशादपक्रम्यातिष्ठतां कुत्रापि स्थिते । 'श्लाघह्नुङ्स्थाशपाम्' इति देवानां संप्रदानत्वम् । तिष्ठतेर्हेतौ शानच्, 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । ते देवा अमन्यन्त यमिमे ऋक्सामे उपावर्त्स्यतः उपगन्तुमाभिमुख्येन वत्स्यतः स इदं विश्वं यागद्वारेण भविष्यति विश्वाधिपत्ये स्थास्यतीत्यर्थः । यद्वा—इदमिति क्रियाविशेषणम् । इदमत्र भविष्यति वर्धिष्यते एषा सर्वा विभूतिस्तस्येति यावत् । यद्वा—स इदं विश्वं प्राप्स्यति, भू प्राप्तौ, आत्मनेपदी, चुरादिराधृषीयः, व्यत्ययेन परस्मैपदम् । 'वृद्भ्यस्स्यसनोः' इति वृतेः परस्मैपदम्, 'न वृद्भ्यश्चतुर्भ्यः' इतीट्प्रतिषेधः । एवमीदृशोरनयोर्महिमा । इमे च अस्मानुपहायापक्रान्ते, तत्किमिति तूष्णीमास्महे इतीत्थं संजातमतयो देवास्ते उपामन्त्रयन्त ते ऋक्सामे रहस्युपच्छ-

वृथ्स्यतस्स इदं भविष्यतीति ते उ-
पामन्त्रयन्त ते अहोरात्रयोर्महिमा-
नमपनिधाय देवानुपावर्तेतामेष वा
ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यै-

त्युप-आवर्त्स्यतः । सः । इदम् । भविष्यति । इति ।
ते इति । उपेति । अमन्त्रयन्त । ते इति । अहो-
रात्रयोरित्यहः-रात्रयोः । महिमानम् । अपनिधा-
येत्यप-निधाय । देवान् । उपावर्तेतामित्युप-आ-
वर्तेताम् । [2]एषः । वै । ऋचः । वर्णः । यत् । शु-
क्लम् । कृष्णाजिनस्येति कृष्ण-अजिनस्य । एषः ।

---

न्दितवन्तः अस्मानुपावर्तेथामिति । अथ ते ऋक्सामे अहो-
रात्रयोर्महिमानं महनीयं गुणं शुक्लकृष्णरूपं अपनिधायापादाय
आत्मनि निधाय कृष्णमृगात्मनि रूपे स्थापयित्वा । यद्वा—
उपार्थे 'अप'शब्दः, उपनिधाय तेन रूपेण देवानुपावर्तेतामुपा-
गच्छताम् । महिमानमिति महच्छब्दादिमनिच्, महेर्वा औणा
दिक इमनिच् ॥

[2]कः पुनस्स महिमा? योहोरात्राभ्यां ऋक्सामयोस्संक्रान्तः
सोद्यत्वे कृष्णमृगस्याजिने दृश्यते । तत्रापि को वा ऋचो म-
हिमा, को वा साम्न इत्याह—एष वा इति ॥ एष वा ऋ-
चो वर्णः अह्नः ऋचि संक्रान्तः । कः? यच्छुक्लं रूपं

ष साम्नो यत्कृष्णमृक्सामयोश्शि-
ल्पे स्थ इत्याहर्क्सामे एवाव रुन्ध ए-
षः ॥ १७ ॥ वा अह्नो वर्णो यच्छु-
क्लं कृष्णाजिनस्यैष रात्रिया यत्कृ-

साम्नः । यत् । कृष्णम् । [3]ऋक्सामयोरित्यृक्-सा-
मयोः । शिल्पे इति । स्थः । इति । आह । ऋक्सामे
इत्यृक्-सामे । एव । अवेति । रुन्धे । [4]एषः ॥ १७ ॥
वै । अह्नः । वर्णः । यत् । शुक्लम् । कृष्णाजिन-
स्येति कृष्ण-अजिनस्य । एषः । रात्रियाः । यत् ।

---

कृष्णाजिनस्य सम्बन्धि । एष साम्नो वर्णः रात्रेस्साम्नि संक्रान्तः, यत्कृष्णं रूपं कृष्णाजिनस्य ॥

[3]अधुना अमुमेवार्थं मन्त्रार्थेऽपि प्रदर्शयति—ऋक्सामयोरिति ॥ शिल्पं कौशलं, ऋक्सामयोः कौशलोपार्जिते स्थ इति कृष्णाजिनस्य शुक्लकृष्णे राजी उच्येते । तस्मादेतदभिधानं ऋक्सामयोराप्त्यै भवति ॥

[4]कतरः पुनस्तर्ह्यनयोरह्नो वर्णः, कतरो रात्रेरित्याह—एष वा इति ॥ यद्वा—पूर्वमृक्सामगुणत्वेन कृष्णाजिनस्य शुक्लकृष्णे स्तुते । अधुना अहोरात्रगुणत्वेन स्तोतुमाह—एष वा इति ॥ मन्त्रे ऋक्सामयोश्शिल्पे इति अहोरात्रयोश्शुक्लकृष्णे ऋक्सामसक्रान्तरूपतयोच्येते; तथैवाह—यदेवैनयोरहोरात्रयोस्सम्बन्धि तत्र ऋक्सामयोः न्यक्तं तदेवावरुन्धे अव्यवधानेनैवाहोरात्रगुणौ प्राप्नोति, न पुनः

ष्णं यदेवैनयोस्तत्र न्यक्तं तदेवाव रुन्धे कृष्णाजिनेन दीक्षयति ब्रह्म- णो वा एतद्रूपं यत्कृष्णाजिनं ब्रह्म- णैवैनं दीक्षयतीमां धियꣳ शिक्षमा-

कृष्णम् । यत् । एव । एनयोः । तत्र । न्यक्तमिति नि-अक्तम् । तत् । एव । अवेति । रुन्धे । कृष्णाजिनेनेति कृष्ण-अजिनेन । दीक्षयति । [6]ब्रह्मणः । वै । एतत् । रूपम् । यत् । कृष्णाजिनमिति कृष्ण-अजिनम् । ब्रह्मणा । एव । एनम् । दीक्षयति । इमाम् । धियम् । शिक्षमाणस्य । देव । इति ।

ऋक्सामद्वारेण । यं महिमानमृक्सामे प्राप्नुतां, तं स्वयमहोरात्रसकाशादेव प्राप्नोतीत्यर्थः । पूर्ववद्गतेरुदात्तत्वम्, ततः परस्य च स्वरितत्वम् ॥

[5]एवं स्तुत्वा इदानीं विधत्ते—कृष्णाजिनेन दीक्षयतीति ॥ दीक्षितं संयोजयतीत्यर्थः ॥

[6]इदानीं स्तुत्यन्तरमाह—ब्रह्मण इति ॥ ब्रह्मणः ऋक्सामयोरित्यस्य मन्त्रस्य एतद्रूपं यत्कृष्णाजिनं नाम । केचिदाहुः—ब्रह्मणः परस्य वस्तुनः एतद्रूपं । व्यामिश्राकारत्वमाभर्म्यादिनमुक्तम् ; यथा 'पुरुषं कृष्णपिङ्गलम्'* इति । इमामित्यादि । एतं मन्त्रं यस्मादाह तस्माद्यथायजुरेव फलमवरुन्धे 'सं शिशाधि, दुरिता तरेम, अधि नावं रुहेम'† इति यदनेन यजुषा आ-

* उ. ४-२३. † सं. १-२-२

णस्य दे॒वेत्या॑ह य॒था॒य॒जु॒रे॒वैतद्गर्भो॒ वा ए॒ष यद्दी॑क्षि॒त उल्बं॒ वास॒ः प्रोर्णु॑ते॒ तस्मा॑त् ॥१८॥ गर्भाः॒ प्रावृ॑ता जा॒यन्ते॒ न पु॒रा सोम॑स्य क्र॒यादपो॑र्ण्वीत॒ यत्पु॒रा सोम॑स्य क्र॒यादपो॑र्ण्वी॒त ग-

आ॒ह॒ । य॒था॒य॒जु॒रिति॑ यथा–य॒जुः । ए॒व । ए॒तत् । [7]गर्भः॑ । वै । ए॒षः । यत् । दी॒क्षि॒तः । उल्ब॑म् । वास॑ः । प्रेति॑ । ऊ॒र्णु॒ते॒ । तस्मा॑त् ॥ १८ ॥ गर्भाः॑ । प्रावृ॑ताः । जा॒य॒न्ते॒ । न । पु॒रा । सोम॑स्य । क्र॒यात् । अपेति॑ । ऊ॒र्ण्वी॒त॒ । यत् । पु॒रा । सोम॑स्य । क्र॒यात् । अ॒पो॒र्ण्वी॒तेत्य॑प–ऊ॒र्ण्वी॒त । गर्भाः॑ । प्र॒जा॒ना॒मिति॑

---

शास्यते तत्सर्वं प्राप्नोत्येवेत्यर्थः । पूर्ववद्यजुष्ट्वं वेदितव्यम् ॥

[7]गर्भ इत्यादि ॥ गर्भः खल्वेष संजातः यो दीक्षितो भवति । तस्योल्बस्थानीयं वासः । उल्बं नाम गर्भावरणम् । प्रोर्णुत इति विधिः । वाससा छादयति दीक्षित आत्मानम् । तस्मादित्यादि । स्पष्टम् । प्रावृता इति । पूर्वपदप्रकृतिस्वरत्वम् । नापोर्ण्वीत नोद्घाटयेत् । परापातुकाः परापतनशीलाः स्युः । 'लषपत' इत्यादिना उकञ्, कृदुत्तरपदप्रकृतिस्वरत्वे 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । क्रीते सोमेऽपोर्णुते प्रावृतमुष्णीषमिति विधिः । अपास्यतीत्यर्थः । जायत एव तज्जननं खल्वस्य तत् तदाऽसौ जायत इति वा । तिङः परत्वान्न निहन्यते, अद्यु-

भीः प्रजानां परापातुकास्स्युः क्री-
ते सोमेऽपोर्णुते जायत एव तदथो
यथा वसीयाꣳसं प्रत्यपोर्णुते तादृ-
गेव तदाङ्गिरसस्सुवर्गं लोकं यन्त

प्र—जानाम् । परापातुका इति परा—पातुकाः । स्युः । क्रीते । सोमे । अपेति । ऊर्णुते । जायते । एव । तत् । अथो इति । यथा । वसीयाꣳसम् । प्रत्यपोर्णुत इति प्रति—अपोर्णुते । तादृक् । एव । तत् । [8]अङ्गिरसः । सुवर्गमिति सुवः—गम् । लोकम् । यन्तः । ऊर्जम् । वीति । अभजन्त । ततः ।

---

पदेशाल्लसार्वधातुकानुदात्तत्वे 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । अथो अपिच यथा वसीयांसं पूज्यगुर्वादिकं प्रति प्रावृतं वासोपोर्णुते तादृगेव तत् तत्तुल्यमेव तत् । अतिशयेन वसुमान् वसीयान् । ईयसुनि 'विन्मतोर्लुक्' 'टेः' इति टिलोपः । लक्षणादिना प्रतेः कर्मप्रवचनीयत्वाद्द्वितीया, 'गतिर्गतौ' इति प्रतेरनुदात्तत्वम् । 'तिङि चोदात्तवति' इत्यपशब्दस्य प्रादिसमासः । ननु 'प्रादिप्रसंगे कर्मप्रवचनीयानां प्रतिषेधः' इति । उच्यते—छान्दसत्वाददोषः । यद्वा—प्रत्यपोर्णुते उपचरति यथा वसीयांसमिति गतिसमासः । द्वितीया च कर्मण्येव । तदिव पश्यति 'त्यदादिषु दृशः' इति क्विन् 'क्विन्प्रत्ययस्य कुः' 'आ सर्वनाम्नः' इत्यात्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[8]अथ मेखलां विधास्यन् आह—अङ्गिरस इति ॥ ऊर्जं ऊ-

ऊर्जं व्यंभजन्त ततो यदृत्यशिंष्य-
त ते शरा अंभवन्नूर्ग्वै शरा य-
च्छरमयीं ॥ १९ ॥ मेखंला भव-
त्यूर्जमेवावं रुन्धे मध्यतस्सं नंह्यति
मध्यत एवास्मा ऊर्जं दधाति त-

यत् । अत्यशिंष्यतेत्यंति—अशिंष्यत । ते । शराः । अभवन्न् । ऊर्क् । वै । शराः । यत् । शरमयीति शर—मयीं ॥ १९ ॥ मेखंला । भवंति । ऊर्जम् । एव । अवेतिं । रुन्धे । [9]मध्यतः । समितिं । नह्यति । मध्यतः । एव । अस्मै । ऊर्जम् । दधाति । तस्मांत् ।

---

र्जितमन्नं बलं वा व्यभजन्त व्यत्ययेनाभजन्त । ततः ऊर्जं यदत्यशिष्यत यत्किंचिदविभक्तमत्यरिच्यत ते शरा अभवन् । शरास्तृणविशेषाः । विकृत्यवस्थापेक्षं बहुवचनम्, पुंलिङ्गता च । ऊर्ग्वै शराः ऊर्क्प्रकृतिकत्वात् । यच्छरमयीत्यादि । 'नित्यं वृद्धशरादिभ्यः' इति मयट् । तस्मात् शरमय्या मेखलया दीक्षयतीति विधिरनुमीयते ॥

[9]मध्यतस्सं नह्यति मेखलामिति विधिः ॥ मध्यत एव शरीरमध्य एव । अस्मा उर्जमन्नं बलं वा दधाति स्थापयति । यद्वा— मध्यमायामवस्थायाम् । तस्मात्सर्वेऽपि शरीरमध्ये मध्यमावस्थायां वा ऊर्जा भुञ्जते अन्नेन सहिता भवन्ति । बलेन वा उपलक्षिता

स्मान्मध्यत ऊर्जा भुञ्जत ऊर्ध्वं वै
पुरुषस्य नाभ्यै मेध्यमवाचीनममे-
ध्यं यन्मध्यतस्संनह्यति मेध्यं चै-
वास्यामेध्यं च व्यावर्तयतीन्द्रो वृ-

मध्यतः । ऊर्जा । भुञ्जते । [10]ऊर्ध्वम् । वै । पुरुष-
स्य । नाभ्यै । मेध्यम् । अवाचीनम् । अमेध्यम् ।
यत् । मध्यतः । सन्नह्यतीति सं—नह्यति । मेध्यम् ।
च । एव । अस्य । अमेध्यम् । च । व्यावर्तयतीति
वि—आवर्तयति । [11]इन्द्रः । वृत्राय । वज्रम् । प्रेति । अ-

---

भुञ्जते । विभक्तिव्यत्ययो वा । ऊर्जं भुञ्जते इत्यर्थः । 'आ-
द्यादिभ्यस्तसिः' । 'सावेकाचः' इति ऊर्जेर्विभक्तेरुदात्तत्वम् ॥

[10]मध्यतस्सन्नहनस्य फलान्तरमाह—ऊर्ध्वमित्यादि ॥ नाभ्यै नाभ्याः
षष्ठ्यर्थे चतुर्थी । मेध्यं मेधे भवं शुद्धम्, दिगादित्वाद्यत्, 'यतो
नावः' इत्याद्युदात्तत्वम् । अवाचीनमधोभागः । अञ्चतेः क्विनि
'अचः' इति लोपे 'चौ' इति दीर्घत्वम्, 'विभाषाञ्चेरदिक्स्त्रि-
याम्' इति खः । अमेध्यममेधार्हम् । दण्डादिभ्यो यः, 'य-
यतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । तस्मान्मध्यतस्संनहनेन अस्य
मेध्यामेध्ये व्यावर्तयति विभागेनावस्थापयति ॥

[11]अथ मध्यतस्सन्नहनस्यैव तृतीयं फलं दर्शयति—इन्द्रो वृत्रा-
येति ॥ इन्द्रो वृत्रमसुरं हन्तुं वज्रं निर्माय प्राहरत् प्राहिणोत् ।

त्राय वज्रं प्राहरथ्स त्रेधा व्यभवथ्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम् ॥ २० ॥ येऽन्तश्शरा अशीर्यन्त ते शरा अभवन्तच्छराणाꣳ शरत्वं वज्रो वै शराः क्षुत्खलु वै

हरत् । सः । त्रेधा । वीति । अभवत् । स्फ्यः । तृतीयम् । रथः । तृतीयम् । यूपः । तृतीयम् ॥ २० ॥ ये । अन्तश्शरा इत्यन्तः-शराः । अशीर्यन्त । ते । शराः । अभवन् । तत् । शराणाम् । शरत्वमिति शर-त्वम् । वज्रः । वै । शराः । क्षुत् । खलु । वै । मनुष्यस्य ।

---

स वज्रस्त्रेधा विभक्तोभवत् स्फ्यादिरूपेण । वृत्रवधानन्तरं स्फ्यादियज्ञोपकरणभावेन त्रेधा विभक्तात्मा बभूवेति । यद्वा—इन्द्रेण प्रहितो वज्रस्तं हन्तुं तदीययज्ञे स्फ्यादिभावेन विभक्तात्माऽभवत् । तृतीयमिति । सामान्यरूपत्वान्न पुंसकत्वम् । वज्रतृतीयं स्फ्यो भवतीति । 'पूरणाद्भागे तीयादन्' । एवं रथयूपौ द्रष्टव्यौ । येऽन्तश्शरा अशीर्यन्त शीर्णाः क्षुद्रशकलाः शातनप्रभवाः ते शरा अभवन् । अन्तश्शीर्यन्ते इत्यन्तश्शराः । 'ऋदोरप्' थाथादिनोत्तरपदान्तोदात्तत्वम् । तच्छराणां शरत्वम् । यस्मादशीर्यन्त तस्माच्छरा अभवन् वज्रशकलात्मानश्शराः । किमनेनेत्याह—वज्रो वै शराः वज्रप्रभवत्वात् । शरशब्द उञ्छादिर्द्रष्टव्यः । अजन्तो वा पचादिर्द्रष्टव्यः । मनुष्यस्य क्षुत् भ्रातृव्यः शत्रुः । 'व्यन् सपत्ने' ।

मनुष्यस्य भ्रातृव्यो यच्छरमयी मे-
खला भवति वज्रेणैव साक्षात्क्षुधं
भ्रातृव्यं मध्यतोप हते त्रिवृद्भवति
त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मध्यतो
यजमाने दधाति पृथ्वी भवति र-

भ्रातृव्यः । यत् । शरमयीति शर–मयी । मेखला ।
भवति । वज्रेण । एव । साक्षादिति स–अक्षात् ।
क्षुधम् । भ्रातृव्यम् । मध्यतः । अपेति । हते ।
[12]त्रिवृदिति त्रि–वृत् । भवति । त्रिवृदिति त्रि–वृत् ।
वै । प्राण इति प्र–अनः । त्रिवृतमिति त्रि–वृतम् ।
एव । प्राणमिति प्र–अनम् । मध्यतः । यजमा-
ने । दधाति । [13]पृथ्वी । भवति । रज्जूनाम् । व्यावृ-

---

यच्छरमयी मेखला मध्यतस्सन्नद्धा भवति वज्रेणैव साक्षात्क्षुधं शत्रुभूतां भ्रातृव्यं मध्यतोपहते अपहन्ति । व्यत्ययेनात्मनेपदम् ॥

[12]त्रिवृद्भवतीति विधिः ॥ तिस्रो वृत्तयो यस्य स त्रिवृत् । अन्तोदात्तप्रकरणे 'त्रिचक्रादीनां छन्दसि' इत्युत्तरपदान्तोदात्तत्वम् । त्रिवृत्प्राणः, अपानोदानसहितत्वात् ॥

[13]पृथ्वी भवतीति विधिः ॥ पृथ्वी विस्तीर्णा रज्जूनां ततो व्यावृत्त्यै ॥

ज्नूनां व्यावृत्त्यै मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय ॥ २१ ॥ यज्ञो दक्षिणामभ्यध्यायत्ताꣳ समभवत्तदिन्द्रोचायत्

त्या इति वि–आवृत्त्यै । [14]मेखलया । यजमानम् । दीक्षयति । योक्त्रेण । पत्नीम् । मिथुनत्वायेति मिथुन–त्वाय ॥ २१॥ [15]यज्ञः । दक्षिणाम् । अभीति । अध्यायत् । ताम् । समिति । अभवत् । तत् । इन्द्रः । अचायत् । सः । अमन्यत । यः । वै ।

---

[14]मेखलयेत्यादिविधिः ॥ वेणीग्रथिता मेखला । विपरीतं योक्त्रम् । मिथुनत्वाय रज्ज्वोः । यद्वा—पत्नीयजमानयोरेकरूप्ये हि रज्ज्वोस्स्वाभाविकं दम्पत्योर्मिथुनत्वं तिरोहितं स्यात् । तस्माद्रज्ज्वोः वैरूप्यं तयोर्मिथुनत्वरक्षार्थमिति । 'पत्युर्नो यज्ञसंयोगे' इति ङीब्नकारौ ॥

[15]अथ कृष्णविषाणां प्रतिविधास्यन् तदुत्पत्तिमाह—यज्ञो दक्षिणामित्यादि ॥ यज्ञात्मा दक्षिणामकामयत तां समभवत्समगृह्णात् मिथुन्यभवत् । तदिन्द्रोचायत् । चायृ पूजानिशामनयोः, जातवान् । अथ सोमन्यत यो वा इतो दक्षिणाया जनिष्यते स इदं विश्वं भविष्यति इदं सर्वं तदधीनं भविष्यति । यद्वा—स इदं विश्वं प्राप्स्यति विश्वस्य स्वामी भविष्यति, तस्मादस्या अहं जनिषीयेति समालोच्य. तां प्राविशदिन्द्रः । ततस्तस्या इन्द्र एव पुत्रो·

थ्सोऽमन्यत यो वा इतो जनिष्यते
स इदं भविष्यतीति तां प्राविंशत्त-
स्या इन्द्रा एवाजायत सोऽमन्यत
यो वै मदितोऽपरो जनिष्यते स इदं
भविष्यतीति तस्या अनुमृश्य यो-
निमाऽच्छिनथ्सा सूतवशाऽभवत्त-
थ्सूतवशायै जन्म ॥२२॥ ताꣳ ह-

इतः । जनिष्यते । सः । इदम् । भविष्यति । इति ।
ताम् । प्रेति । अविशत् । तस्याः । इन्द्रः । एव ।
अजायत । सः । अमन्यत । यः । वै । मत् ।
इतः । अपरः । जनिष्यते । सः । इदम् । भवि-
ष्यति । इति । तस्याः । अनुमृश्येत्यनु-मृश्य ।
योनिम् । एति । अच्छिनत् । सा । सूतवशेति
सूत-वशा । अभवत् । तत् । सूतवशाया इति
सूत-वशायै । जन्म ॥२२॥ ताम् । हस्ते । नीति ।

---

जायत । सोमन्यत पुनरपि मिथुनीभवन्तौ तौ दृष्ट्वा इन्द्रोचि-न्तयत् यो मत्तोप्यपरः इतो जनिष्यते स इदं भविष्यति । तस्मा-न्मत्तोपरो यथाऽस्या न जनिष्यते तथा कर्तव्यमिति सोनुमृश्य वि-चार्य तस्या योनिमाच्छिनत् सा सूतवशाऽभवत् सकृत्प्रसूता वन्ध्याऽ-भवत् । सूतेन कृता वशा सूतवशा, सूत्या कृतं वशात्वमिति कृत्वा

स्ते न्यवेष्टयत तां मृगेषु न्यदधात्सा कृष्णविषाणाऽभवदिन्द्रस्य योनिरसि मा मां हिꣳसीरिति कृष्णविषाणां प्र यच्छति सयोनिमेव यज्ञं करोति सयोनिं दक्षिणाꣳ सयो-

अवेष्टयत । ताम् । मृगेषु । नीति । अदधात् । सा । कृष्णविषाणेति कृष्ण—विषाणा । अभवत् । इन्द्रस्य । योनिः । असि । मा । मा । हिꣳसीः । इति । कृष्णविषाणामिति कृष्ण—विषाणाम् । प्रेति । यच्छति । [16]सयोनिमिति स—योनिम् । एव । यज्ञम् । करोति । सयोनिमिति स—योनिम् । दक्षिणाम् । सयोनिमिति स—योनिम् । इन्द्रम् ।

तृतीयापूर्वपदप्रकृतिस्वरत्वम् । तदिदं सूतवशायै जन्म । षष्ठ्यर्थे चतुर्थी । अथेन्द्रस्तां योनिं हस्ते न्यवेष्टयत । अथ तां योनिं मृगेषु न्यदधात् निहितवान् सा कृष्णविषाणाऽभवत् । इन्द्रस्येत्यादिविधिः । प्रयच्छति यजमानाय ददाति ॥

[16]फलमाह—सयोनिमिति ॥ तत्र दक्षिणा योनिमती । यज्ञस्तद्योन्यभिध्यायी । इन्द्रोपि तस्या योनेर्जातः । त इमे सर्वेऽपि तस्या योन्यभावादयोनयस्स्युः । कृष्णविषाणाप्रदानेन तु सर्वेऽपि यज्ञादयो योनिमन्तः कृता भवन्ति । सह योन्या वर्तते इति । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्, 'वोपसर्जनस्य' इति सभावः । सयोनित्वाय भवत्यात्मनोपि ॥

निमिन्द्रꣳ सयोनित्वाय कृष्यै त्वा
सुसस्याया इत्याह तस्मादकृष्टप-
च्या ओषधयः पच्यन्ते सुपिप्पला-
भ्यस्त्वौषधीभ्य इत्याह तस्मादोष-

सयोनित्वायेति सयोनि–त्वाय । [17]कृष्यै । त्वा । सुसस्याया इति सु–सस्यायै । इति । आह । तस्मात् । अकृष्टपच्या इत्यकृष्ट–पच्याः । ओषधयः । पच्यन्ते । [18]सुपिप्पलाभ्य इति सु–पिप्पलाभ्यः । त्वा । ओषधीभ्य इत्योषधि–भ्यः । इति । आह । तस्मात् । ओषधयः । फलम् । गृह्णन्ति ।

[17]कृष्यै त्वेति लोष्टोन्नयनमन्त्रोऽयम् ॥ अकृष्टपच्याः । राजसूयादौ 'अकृष्टे चेति वक्तव्यम्' इति यः, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा—कृष्टं क्षेत्रमेव अकृष्टपच्यं, तत्र हि ताः पच्यन्ते । य एव राजसूयादौ कृष्टपच्यशब्दो निष्पद्यते ततो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्, पच्यन्ते इति कर्मवद्भावात् । यद्वा—कृष्टे पच्यन्ते इति कृष्टपच्याः, न कृष्टपच्याः अकृष्टपच्याः, अतादृक्स्वभावात्स्वयमेव पच्यन्ते इति अव्ययपूर्वपदप्रकृतिस्वरत्वं व्यत्ययेन प्रवर्तते ॥

[18]सुपिप्पलाभ्य इति दक्षिणे गोदाने कण्डूयनमन्त्रः ॥ यस्मात्सुपिप्पलाभ्यः शोभनफलाभ्य इत्याह, तस्मादोषधयः फलं गृह्णन्ति ॥

धयः फलं गृह्णन्ति यद्धस्तेन॥२३॥
कुण्डूयेत पामनंभावुकाः प्रजास्स्यु-
र्यत्स्मयेत नग्नंभावुकाः कृष्णविषा-
णया कण्डूयतेऽपिगृह्य स्मयते प्र-
जानां गोपीथाय न पुरा दक्षिणा-
भ्यो नेतोः कृष्णविषाणामवं चृते-

[19]यत् । हस्तेन ॥ २३ ॥ कुण्डूयेत । पामनंभावु-
का इति पामनं–भावुकाः । प्रजा इति प्र–जाः ।
स्युः । यत् । स्मयेत । नग्नंभावुका इति नग्नं–भा-
वुकाः । कृष्णविषाणयेति कृष्ण–विषाणया । कण्डू-
यते । अपिगृह्येत्यपि–गृह्य । स्मयते । प्रजानामि-
ति प्र–जानाम् । गोपीथाय । न । पुरा । दक्षिणा-
भ्यः । नेतोः । कृष्णविषाणामिति कृष्ण–विषा-

[19]यद्धस्तेनेत्यादि ॥ पामनंभावुकाः पामान्यासां सन्तीति पामनाः, पामादित्वान्नप्रत्ययः, पामना भवन्तीति पामनंभावुकाः । 'कर्तरि भुवः खिष्णुच्खुकञौ' इति व्यत्ययेन पामनेऽपि भवति, 'खित्यनव्ययस्य' इति मुम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यत्स्मयेत हसेत् नग्नंभावुकाः प्रजास्स्युरित्येव । नग्ना भवन्ति ताच्छील्येनेति नग्नंभावुकाः, पूर्ववत्प्रत्ययादि । तस्मात् कृष्णविषाणया कण्डूयते, न हस्तेन । अपिगृह्य स्मयते अपिधाय मुखं स्मयते चेति विधिः । गोपीथाय रक्षणार्थम् । 'निशीथगोपी-

द्यत्पुरा दक्षिणाभ्यो नेतोः कृष्णवि-
षाणामवचृतेद्योनिः प्रजानां परापा-
तुका स्यान्नीतासु दक्षिणासु चात्वा-
ले कृष्णविषाणां प्रास्यति योनिर्वै
यज्ञस्य चात्वालं योनिः कृष्णविषा-

णाम् । अवेति । चृतेत् । यत् । पुरा । दक्षिणा-
भ्यः । नेतोः । कृष्णविषाणामिति कृष्ण—विषा-
णाम् । अवचृतेदित्यव—चृतेत् । योनिः । प्रजाना-
मिति प्र—जानाम् । परापातुकेति परा—पातुका ।
स्यात् । [20]नीतासु । दक्षिणासु । चात्वाले । कृष्ण-
विषाणामिति कृष्ण—विषाणाम् । प्रेति । अस्यति ।
योनिः । वै । यज्ञस्य । चात्वालम् । योनिः । कृ-

---

थावसथाः' इति निपात्यते । न पुरेति निषेधविधिः । दक्षि-
णानयनात्प्राक् कृष्णविषाणां नावचृतेत् न मुञ्चेत् । नयतेर्भाव-
लक्षणे तोसुन् । दक्षिणाभ्य इति । षष्ठ्यर्थे चतुर्थी । चृतति-
र्हिंसार्थकस्तौदादिकः । यदवचृतेत् यन्मुञ्चेत् । अदुपदेशाल्लसार्वधातु-
कानुदात्तत्वे शस्यैवोदात्तत्वम् । प्रजानां योनिः परापातुका परा-
पतनशीला स्यात् । पूर्ववदुक्तम् ॥

[20]तस्मात् नीतास्वित्यादिविधिः ॥ प्रास्यति प्रत्यस्येत् । योनि-
रित्यादि । चात्वालं यज्ञस्य योनिः धिष्ण्योपवनादेः प्रकृतत्वात् ।

णा योनांवेव योनिं दधाति यज्ञस्यं सयोनित्वायं ॥ २४ ॥

वाग्वै देवेभ्योपांक्रामद्यज्ञायातिष्ठ-माना सा वनस्पतीन्प्राविंशथ्सैषा

ष्णाविषाणेति कृष्ण-विषाणा । योनौ । एव । यो-निम् । दधाति । यज्ञस्यं । सयोनित्वायेति सयो-नि-त्वायं ॥ २४ ॥

रुन्ध एष तस्माच्छरमयी यूपस्तृतीयं मिथु-नत्वाय जन्म हस्तेनाष्टाचत्वारिंशच्च ॥३॥

[1]वाक् । वै । देवेभ्यः । अपेति । अक्रामत् । यज्ञायं । अतिष्ठमाना । सा । वनस्पतीन् । प्रेति ।

---

कृष्णविषाणाया योनित्वमुक्तमेव । तस्माद्योनावेव योनिं स्थापयति, यदियं चात्वाले प्रास्यते, तस्मादेतद्यज्ञस्य सयोनित्वाय भवति, योनेरपरित्यागात् ॥

इति षष्ठे प्रथमे तृतीयोनुवाकः.

---

[1]दीक्षितदण्डप्रदानं विधास्यन् आह—वाग्वा इत्यादि ॥ यज्ञार्थं देवेभ्योऽतिष्ठमाना अप्रकाशमाना अप्रकाशनहेतोः वाग्देवेभ्योऽ-पाक्रामत् । पूर्ववत्संप्रदानत्वमात्मनेपदत्वं च । ततस्सा वनस्पती-न्प्राविशत् । उक्तं पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्, सुडागमश्च ।

वाग्वनस्पतिषु वदति या दुन्दुभौ या
तूर्णवे या वीणायां यद्दीक्षितदण्डं
प्रयच्छति वाचमेवाव रुन्ध औदु-
म्बरो भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव
रुन्धे मुखेन संमितो भवति मुखत

अविशत् । सा । एषा । वाक् । वनस्पतिषु । वद-
ति । या । दुन्दुभौ । या । तूर्णवे । या । वीणा-
याम् । यत् । दीक्षितदण्डमिति दीक्षित-दण्डम् ।
प्रयच्छतीति प्र-यच्छति । वाचम् । एव । अवेति ।
रुन्धे । [2]औदुम्बरः । भवति । ऊर्क् । वै । उदुम्बरः ।
ऊर्जम् । एव । अवेति । रुन्धे । [3]मुखेन । साम्मित

ततः प्रभृति सैषा वाग्वनस्पतिषु स्थिता वदति व्यक्तमुच्चरति ।
या दुन्दुभौ वदति, या च तूणवे वदति, या च वीणायां
वदति । तस्माद्यद्दीक्षितदण्डं प्रददाति वाचमेवावरुन्धे यजमानः,
तस्माद्दीक्षितदण्डं प्रयच्छतीति विधिरनुमीयते ॥

[2]औदुम्बरो भवतीति विधिः ॥ स दीक्षितदण्डः औदुम्बरः कार्यः ।
उदुम्बरस्य विकार औदुम्बरः, 'अनुदात्तादेश्च' इत्यञ् ।
ऊर्ग्वा इत्यादि । ऊर्गन्नं तद्धेतुत्वादौदुम्बरस्य तत्प्रकृतेस्ताच्छब्द्यम् ॥

[3]मुखेन सम्मितो भवतीति विधिः ॥ स दण्डो मुखेनास्येन सम्मि-
तस्तुल्यः मुखप्रमाणः कर्तव्यः । 'गतिरनन्तरः' इति गतेः

एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुंञ्जते ॥ २५ ॥ क्रीते सोमे मैत्रावरुणाय दण्डं प्र यच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रतिष्ठापयन्ति स्वाहा यज्ञं मनसेत्या-

इति सं-मितः । भवति । मुखतः । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । मुखतः । ऊर्जा । भुञ्जते ॥ २५ ॥ [4]क्रीते । सोमे । मैत्रावरुणायेति मैत्रा-वरुणाय । दण्डम् । प्रेति । यच्छति । मैत्रावरुण इति मैत्रा-वरुणः । हि । पुरस्तात् । ऋत्विग्भ्य इत्यृत्विक्-भ्यः । वाचम् । विभजतीति वि-भजति । ताम् । ऋत्विजः । यजमाने । प्रतीति । स्थापयन्ति । [5]स्वाहा । यज्ञम् । मनसा ।

---

प्रकृतिस्वरत्वम् । मुखत एव अस्मै अन्नं दधाति, तस्मान्मुखे सर्वेऽप्यन्नेन भुञ्जते भुजिक्रियां निर्वर्तयन्ति अन्नं भुञ्जते इति । विभक्तिव्यत्ययो वा । 'आद्यादिभ्यस्तसिः' ॥

[4]क्रीते सोमे इत्यादि विधिः ॥ मैत्रावरुणः पुरस्तात् । स हि प्रथमं सर्वर्त्विग्भ्यो वाचं विसृजति प्रैषेषु ऋतुग्रहप्रस्थितयाज्यासु होतृकेभ्यः । तामृत्विजो वाचं यजमाने प्रतिष्ठापयन्ति....न[तदधीन?]त्वात् ॥

[5]अथ मुष्टीकरणात्पूर्वं यजमानं वाचयति यान्मन्त्रान् तान्व्या-

ह मन॑सा हि पुरु॑षो य॒ज्ञम॑भि ग-
च्छ॑ति स्वाहा॒ द्यावा॑पृथि॒वीभ्या॒मि-
त्या॑ह द्यावा॑पृथि॒व्योर् हि य॒ज्ञस्स्वा-
हो॒रोर॒न्तरि॑क्षा॒दित्या॑हा॒न्तरि॑क्षे हि
य॒ज्ञस्स्वाहा॑ य॒ज्ञं वाता॒दा र॑भ॒ इत्या॑-

इति॑ । आ॒ह । मन॑सा । हि । पुरु॑षः । य॒ज्ञम् ।
अ॒भि॒गच्छ॒तीत्य॑भि–गच्छ॑ति । स्वाहा॑ । द्यावा॑पृ-
थि॒वीभ्या॒मिति॒–द्यावा॑–पृ॒थि॒वीभ्या॑म् । इति॑ । आ-
ह । द्यावा॑पृथि॒व्योरिति॒ द्यावा॑–पृ॒थि॒व्योः । हि ।
य॒ज्ञः । स्वाहा॑ । उ॒रोः । अ॒न्तरि॑क्षात् । इति॑ । आ-
ह । अ॒न्तरि॑क्षे । हि । य॒ज्ञः । स्वाहा॑ । य॒ज्ञम् । वाता॑त् ।
एति॑ । र॒भे । इति॑ । आ॒ह । अ॒यम् ॥ २६ ॥ वाव ।

---

चष्टे—स्वाहा यज्ञमित्यादि ॥ अभिगच्छति आभिमुख्येन प्राप्नो-
ति । द्यावापृथिव्योर्हि यज्ञ इति । तदधीनत्वात्तस्य । तद्विषयत्वाद्वा
यज्ञफलस्य । अन्तरिक्षे हि यज्ञ इति । अन्तरिक्षेऽपि हि यज्ञ
इत्यर्थः । स एव हेतुः । सर्वस्य स्थितिहेतुर्यज्ञ इति भावः ।
अयं वावेति । योयं पवते वातनामा अन्तरिक्षे वर्तमानः विश्वं
पुनाति । स यज्ञः व्यापारात्मा, सर्वपरिस्पन्दानां तदधीनत्वात् ।
किं च—तत्र प्रतिष्ठितत्वात्ताच्छब्द्यम् । वाते हि यज्ञः प्रतिष्ठितः
आत्मसमवेतक्रियाशक्तिरूपः परिस्पन्दात्मा प्राणो वातः । कस्मात्?

हायम् ॥ २६ ॥ वाव यः पवते स यज्ञस्तमेव साक्षादा रंभते मुष्टी क- रोति वाचं यच्छति यज्ञस्य धृत्या अदीक्षिष्टायं ब्राह्मण इति त्रिरुपाꣳ- श्वाह देवेभ्य एवैनं प्राह त्रिरुच्चैरुभ-

यः । पवते । सः । यज्ञः । तम् । एव । साक्षादि- ति स–अक्षात् । एति । रभते । [6]मुष्टी इति । कु- रोति । वाचम् । यच्छति । यज्ञस्य । धृत्यै । [7]अ- दीक्षिष्ट । अयम् । ब्राह्मणः । इति । त्रिः । उपाꣳ- श्वित्युप–अꣳशु । आह । देवेभ्यः । एव । एनम् । प्रेति । आह । त्रिः । उच्चैः । उभयेभ्यः । एव ।

---

यस्मादाह यज्ञं वातादारभे इति तस्मात्तं यज्ञं साक्षादव्यवधानेन आरभते वातेन यज्ञं गृह्णाति तदेव साक्षाद्ग्रहणमभिनयन्ति च ॥

[6]मुष्टी करोति, वाचं यच्छतीति विधिद्वयम् ॥ फलम्—यज्ञस्य धृत्यै धारणार्थम् । अनन्यमनस्कत्वापादनेन यज्ञधारणार्थम् ॥

[7]अदीक्षिष्टेति विधिः ॥ ब्राह्मणग्रहणं त्रयाणामपि प्रदर्शनार्थम् । प्राधान्यादस्योपादानम्, एवं यथावर्णं ब्रूयादिति । अन्य आहुः—सर्वोपि दीक्षितो ब्राह्मण एव भवति, न चोहो न्याय्य इति सर्वेषां ब्राह्मण इत्येवावेदनमिति । एतावदेवावेदनवाक्यमिति केचित् । प्रतीकं गृह्यते शाखान्तरीयस्येत्यन्ये । उपांशु नातिव्यक्तम् । ‘ उपाद्व्यजजिनम् ’ इत्युत्तरपदान्तोदात्तत्वम् ।

येभ्य एवैनं देवमनुष्येभ्यः प्राह न
पुरा नक्षत्रेभ्यो वाचं वि सृजेद्यत्पु-
रा नक्षत्रेभ्यो वाचं विसृजेद्यज्ञं वि-
च्छिन्द्यात् ॥ २७ ॥ उदितेषु नक्षत्रे-
षु व्रतं कृणुतेति वाचं वि सृजति

एनम् । देवमनुष्येभ्य इति देव-मनुष्येभ्यः । प्रेति । आह । [8]न । पुरा । नक्षत्रेभ्यः । वाचम् । वीति । सृजेत् । यत् । पुरा । नक्षत्रेभ्यः । वाचम् । विसृजेदिति वि-सृजेत् । यज्ञम् । वीति । छिन्द्यात् ॥ २७ ॥ उदितेष्वित्युत्-इतेषु । नक्षत्रेषु । व्रतम् । कृणुत । इति । वाचम् । वीति । सृजति ।

---

देवेभ्य एवेति । उपांशूक्तं देवा एव जानन्ति । उभयभ्य इति । उच्चैरुक्तं हि सर्व एव जानते ॥

[8]न पुरेति प्रतिषेधः । नक्षत्रेभ्यः नक्षत्रोदयादित्यर्थः । तस्य तदुदयवृत्तित्वात् । विपर्यये दोषमाह—यदित्यादि । विच्छिन्द्यात् विच्छिन्नं कुर्यात् । तस्मादुदितेष्वित्यादिविधिः । ऊर्ध्वमितान्युदितानीति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अनेन नक्षत्रोदयकाले व्रतकरणमिति; यदुक्तं व्रतं कृणुतेति वाचं विसृजतीति । तत्र कारणमाह—यज्ञव्रत इति । यज्ञविषयं व्रतं व्यापारस्सर्वः यस्य स यज्ञव्रतः, तस्मादस्य न केन चिदपि व्यापारेणायज्ञविषयेण भवितव्यम् । तस्माद्व्रतं कृणुतेति वाचं विसृ-

यज्ञव्रतो वै दीक्षितो यज्ञमेवाभि वा-
चं वि सृजति यदि विसृजेद्वैष्ण-
वीमृचमनु ब्रूयाद्यज्ञो वै विष्णुर्य-
ज्ञेनैव यज्ञꣳ सं तनोति दैवीं धियं

यज्ञव्रत इति यज्ञ—व्रतः । वै । दीक्षितः । यज्ञम् । एव । अभीति । वाचम् । वीति । सृजति । [9]यदि । विसृजेदिति वि—सृजेत् । वैष्णवीम् । ऋचम् । अन्विति । ब्रूयात् । यज्ञः । वै । विष्णुः । यज्ञेन । एव । यज्ञम् । सामिति । तनोति । [10]दैवीम् । धि-

जति । एवं यज्ञमेवाभिवाचं विसृजतीति यज्ञमेव लक्षीकृत्येति वाग्विसर्जनमपि यज्ञार्थमेव भविष्यतीत्यर्थः ॥

[9]यदुक्तं पुरा नक्षत्रेभ्यः इति, तदतिक्रमे समाधिमाह—यदीति ॥ सामर्थ्याद्वाग्यमनकाले यदि वाचं विसृजेत् वैष्णवीमृचं 'विष्णो त्वं नो अन्तमः'* इति अनुब्रूयात् । केचित्—'इदं विष्णुः'† इति । यज्ञो वै विष्णुरिति । व्यापकत्वसाम्यात् । यज्ञेनैव यज्ञं सन्तनोति अविच्छिन्नं करोति विच्छेददोषः समाहितो भवति ॥

[10]अथ मध्यरात्रे प्रबुद्धस्य यजमानस्याचमनमन्त्रः—दैवीं धियमिति ॥ तत्र यदाह 'मनामहे'‡ इति तेन यज्ञं म्रदयति । मृद मर्दने, मर्दनं क्षोदः पुनःपुनरभ्यासः । मना अभ्यासे । पुनःपुनरभ्यासं प्रार्थयते इति प्रतिपादयति । यद्वा—मृडु करोति सुखहेतुं यज्ञं करोति । अनेन 'सुमृडीकां'‡ इति यदुक्तं तत्प्र-

* सं ३-१-१०.[7] † सं. १-२-१३.[4] ‡ सं. १-२-३.[1]

मनामहे इत्याह यज्ञमेव तन्म्रदयति सुपारा नो असद्वश इत्याह व्युष्टिमेवाव रुन्धे ॥ २८ ॥ ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३-

यम् । मनामहे । इति । आह । यज्ञम् । एव । तत् । म्रदयति । सुपारेति सु-पारा । नः । असत् । वशे । इति । आह । व्युष्टिमिति वि-उष्टिम् । एव । अवेति । रुन्धे ॥ २८ ॥ [11]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । होतव्यम् । दीक्षितस्य । गृहा३इ । न । होतव्या३म् । इति । [12]हविः । वै ।

योजनं प्रदर्शितम् । मृदुं करोतीति णिचि 'रऋतो हलादेर्लघोः' इति रत्वम् । 'सुपारा नः'* इति यदुक्तम्, अनेन व्युष्टिं सुप्रभातमवरुन्धे । यद्वा—व्युष्टिः अविच्छेदेन कर्मसमाप्तिः, तामवरुन्धे । सुपारा शोभनकर्मसमाप्तिः । पार तीरकर्मसमाप्तौ, इत्यतो घञि बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं मन्यन्ते । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इति ततः परस्स्वर्यते ॥

[11]अथ व्रतमन्त्रः 'ये देवा मनोजाताः'* इति । तत्रार्थविशेषप्रदर्शनेन व्रतं संविधास्यन् तद्धेतुभूतं विचारं ब्रह्मवादिभिरुत्थापयति ॥ ब्रह्म देवः, तदर्थं वदितुं संशयपर्यनुयोगादिना याथातथ्येन जिज्ञासितुं शीलं येषां ते ब्रह्मवादिनः । 'ब्रह्मणि वदः' इति णिनिः । ते वदन्ति विचारयन्त आहुः । अद्यापि विचार-

*सं १-२-३,[1—2]

इ न होतव्या३मिति हविर्वै दीक्षि-
तो यज्जुहुयाद्यजमानस्यावदाय जुहु-
याद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये
देवा मनोजाता मनोयुज इत्याह

दीक्षितः । यत् । जुहुयात् । यजमानस्य । अव-
दायेत्यव-दाय । जुहुयात् । यत् । न । जुहुयात् ।
यज्ञपरुरिति यज्ञ-परुः । अन्तः । इयात् । [13] ये ।
देवाः । मनोजाता इति मनः-जाताः । मनोयुज

---

हेतोरनुपरतत्वात् वर्तमानप्रत्ययः । विचारस्वरूपं प्रदर्श्यते—होत-
व्यमिति । दीक्षितस्य गृहे किमग्निहोत्रहोमः कर्तव्यः? उत न?
इति विचारणा । उभयत्रापि 'विचार्यमाणानाम्' इत्युदात्तः प्लुतः,
पूर्वत्र 'एचोप्रगृह्यस्य' इति पूर्वार्धस्याकारः, उत्तरार्धस्येकारः ।
गृहशब्दः कप्रत्ययान्तोन्तोदात्तः । तत्र यदि होतव्यं, तदा प्रा-
णाग्निहोत्ररूपत्वात् व्रतनं कर्तव्यम्, अन्यदा नेति फलभेदः ॥

[12]कुतः पुनस्संशय इत्याह—हविरित्यादि ॥ 'सर्वाभ्यो वा
एष देवताभ्य आत्मानमा लभते यो दीक्षितो यदस्याङ्गानां मीयते
जुहोत्येव तत्' इत्यादिदर्शनाद्दीक्षितस्य हविष्ट्वम् । तत्र यदि
जुहुयात् यजमानमेवावदाय जुहुयात्, हविष्ट्वाविशेषात् । कर्मणस्संप्र-
दानत्वाच्चतुर्थ्यर्थे षष्ठी । तस्मान्न होतव्यम् । अथ यदि न
जुहुयात् यज्ञपरुः यज्ञपर्व अन्तरियान्नाशयेत् । यावज्जीवमनेन
हि होतव्यमिदानीं विच्छिद्यते इति तद्धोतव्यमिति च प्रतिभाति ।
अतो भवति विचारणा ॥

[13]एवं ब्रह्मवादिभिः विचारे उपक्षिप्ते समाधत्ते—ये देवा

प्राणा वै देवा मनोजाता मनोयुज-
स्तेष्वेव परोक्षं जुहोति तन्नेव हुतं

इति मनः—युजः । इति । आह । प्राणा इति प्र—
अनाः । वै । देवाः । मनोजाता इति मनः—जा-
ताः । मनोयुज इति मनः—युजः । तेषु । एव ।
परोक्षमिति परः—अक्षम् । जुहोति । [14]तत् । न ।

---

इति ॥ अग्निहोत्रप्रत्याम्नायतया व्रतनविधिरनुमीयते । चक्षुरादयः प्राणा देवाः देवनशीलाः मनोजाताः, जातमनसः, मनोव्यापारमन्तरेण स्वकार्यकरणासंभवात् । 'निष्ठायाः पूर्वनिपातः' इत्यादिना जातशब्दस्य परवचनम्, 'वाजाते' इत्युत्तरपदान्तोदात्तत्वाभावे बहुव्रीहिस्वरः पूर्वपदप्रकृतिस्वरत्वम् । मनोयुजः विपर्यावधारणलक्षणमनेन युज्यन्ते इति मनोयुजः । यस्मादनेन मन्त्रेण तेभ्यस्स्वाहेति प्राणेभ्यो हूयते, तस्मात् तेषु प्राणेषु परोक्षं प्रच्छन्नं हुतं भवत्यग्निहोत्रम् । परमक्ष्णः परोक्षम्, अक्षाण्यतीत्य वर्तते इति 'अव्ययं विभक्ति' इत्यादिना अत्ययेऽव्ययीभावः; 'परो भावः परस्याक्ष्णः' इत्यादिना रूपसिद्धिः, 'कूलतीरतूल' इत्यादिनोत्तरपदाद्युदात्तत्वम् ॥

[14]इदानीमुक्तयोर्दोषयोरभावं प्रतिपादयति—तन्नेति ॥ हुतमिव च न भवति, परोक्षत्वात् । परोक्षं हि कृत्वा वक्तारो भवन्ति न किंचिदत्र कृतमिति । यजुषा अहुतत्वाच्च हुतमिव न भवति, यदुक्तं यजमानस्यावदाय जुहुयात् इति, तस्य दो-

नेवाहुतꣳ स्वपन्तं वै दीक्षितꣳ र-
क्षाꣳसि जिघाꣳसन्त्यग्निः ॥ २१ ॥
खलु वै रक्षोहाऽग्ने त्वꣳ सु जागृहि
वयꣳ सु मन्दिषीमहीत्याहाग्निमेवा-
धिपां कृत्वा स्वपिति रक्षसामपह-

इव । हुतम् । न । इव । अहुतम् । [15]स्वपन्तम् । वै । दीक्षितम् । रक्षाꣳसि । जिघाꣳसन्ति । अग्निः ॥ २१ ॥ खलु । वै । रक्षोहेति रक्षः—हा । अग्ने । त्वम् । स्विति । जागृहि । वयम् । स्विति । मन्दिषीमहि । इति । आह । अग्निम् । एव । अधिपामित्यधि—पाम् । कृत्वा । स्वपिति । रक्षसाम् ।

---

षस्याप्रसङ्गः । अहुतमिव च न भवति, परोक्षं हुतत्वात् । तेन यज्ञपरुरन्तरियादित्यस्य दोषस्याप्रसङ्गः ॥

[15]अथ 'अग्ने त्वं सु जागृहि'* इति संवेशनमन्त्रं व्याख्यातुमाह—स्वपन्तमित्यादि ॥ दीक्षितग्रहणमन्यस्याप्रसंगार्थम् । रक्षोहेति । 'बहुलं छन्दसि' इति क्विप् । अग्निमधिपामधिकं पातारं गोप्तारं कृत्वा स्वपिति । 'आतो मनिन्क्वनिप्' इति विच् । निर्भयं स्वपितीति भावः; यदाह सु मन्दिषीमहीति । मदि स्तुतिमोदमदस्वप्नगतिषु । अपहत्यै । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

---

* सं, १-२-३.³

त्या अव्रत्यमिव वा एष करोति
यो दीक्षितस्स्वपिति त्वमग्ने व्रतपा
असीत्याहाग्निर्वै देवानां व्रतपतिस्स
एवैनं व्रतमा लम्भयति देव आ

अपहत्या इत्यप-हत्यै । [16]अव्रत्यम् । इव । वै । एषः । करोति । यः । दीक्षितः । स्वपिति । त्वम् । अग्ने । व्रतपा इति व्रत-पाः । असि । इति । आह । अग्निः । वै । देवानाम् । व्रतपतिरिति व्रत-पतिः । सः । एव । एनम् । व्रतम् । एति । लम्भयति । [17]देवः । एति । मर्त्येषु । एति । इति । आह । दे-

[16]अथ प्रबुद्ध्य 'त्वमग्ने व्रतपा असि'* इति यजमान आह । तद्व्याचष्टे—अव्रत्यमिति ॥ व्रते साधु न भवतीति यत्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अत्रापि दीक्षितग्रहणमन्यस्याप्रसंगार्थम् । व्रतं पातीति व्रतपाः, पूर्ववद्विच् । यस्मादेवं मन्त्र आह, यतश्च देवानां मध्ये अग्निरेव व्रतपतिः व्रतस्य पाता । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । तस्मात्सोग्निरेनं व्रतमालम्भयति स्वापनिमित्तव्रतलोपदोषापनोदनेन अधिकं व्रतमालम्भयति । यद्वा—व्रतमेवालम्भयति स्वापमिति [समपि] व्रतमेव करोति । शक्यते हि व्रतपतिना तथा कर्तुम् ॥

[17]देव इत्यादि ॥ मन्त्रे द्वावप्याकारौ समुच्चये । देव इति सप्तमीबहुवचनस्य 'सुपां सुलुक्' इति स्वादेशात् देवेषु च मर्त्येषु

* सं. १-२-३.4

मर्त्येष्वेत्याह देवः ॥ ३० ॥ ह्येष सन्मर्त्येषु त्वं यज्ञेष्वीड्य इत्याहै- तꣳ हि यज्ञेष्वीडतेऽप वै दीक्षिता- थ्सुषुपुषं इन्द्रियं देवताः क्रामन्ति विश्वे देवा अभि मामाऽववृत्रन्नित्या-

वः ॥ ३० ॥ हि । एषः । सन् । मर्त्येषु । [18]त्वम् । यज्ञेषु । ईड्यः । इति । आह । एतम् । हि । यज्ञेषु । ईडते । [19]अपेति । वै । दीक्षितात् । सुषुपुषः । इन्द्रियम् । देवताः । क्रामन्ति । विश्वे । देवाः । अभीति । माम् । एति । अववृत्रन् । इति । आह ।

चेत्यर्थः । अत्र किं देवस्सन् व्रतपतित्वेन वर्तते? उत मर्त्यस्सन् देवेष्विति मन्त्रार्थे सन्दिग्धे ब्राह्मणेन विशेषः प्रतिपाद्यते—देवो ह्येष सन्मर्त्येष्विति । यस्मादेवं तस्मात् मर्त्येषु वर्तते इत्याहेत्यर्थः ॥

[18]त्वमित्यादि ॥ यस्मादेतं यज्ञेष्वीडते स्तुवन्ति याचन्ते वर्तयन्ति वा, तस्मात् यज्ञेष्वीड्य इत्याह । 'ईडवन्द' इत्याद्युदात्तत्वम् ॥

[19]अप वा इत्यादि ॥ सुषुपुषः सुप्तवतो दीक्षितात् इन्द्रियं देवताश्च अपक्रामन्ति, तस्मात् 'विश्वे देवाः' * इति प्रबुद्ध्य जपति । पूषा सन्येति सनिहारान् संशास्तीत्येके । अपरे तु—'विश्वे देवाः'* इत्यादिना सर्वेण सनिहारान् संशास्तीति ब्रुवते । तत्र 'वै' इत्यालस्यमुच्यते । द्रव्याभावेन सनिहारप्रेषणम् । स्वपेर्लिटः क्वसुरादेशः,

* सं. १-२-३.5

ह्येन्द्रियेणैवैनं देवताभिस्सं नयति यदेतद्यजुर्न ब्रूयाद्यावंत एव पशूनभि दीक्षेत तावंन्तोस्य पशवस्स्यू रास्वे-यंत् ॥३१॥ सोमा भूयो भरेत्याहा-

इन्द्रियेण । एव । एनम् । देवताभिः । समिति । नयति । [20]यत् । एतत् । यजुः । न । ब्रूयात् । यावंतः । एव । पशून् । अभीति । दीक्षेत । तावंन्तः । अस्य । पशवः । स्युः । रास्व । इयंत् ॥ ३१ ॥ सोम । एति । भूयः । भर । इति । आह । अपरिमितानित्यपरि–मितान् । एव । पशून् । अवेति । रुन्धे ।

---

'वचि स्वपि' इति संप्रसारणं, 'लिट्यभ्यासस्य' इत्यभ्यासस्य पञ्चम्येकवचने वसोस्संप्रसारणम्, 'शासिवसिघसीनां च' इति षत्वम् । इन्द्रियेण देवताभिश्चैनं संनयति संयोजयति ॥

[20]यदेतदित्यादि ॥ 'पूषा सन्या'* इत्यादिकं 'विश्वे देवाः'* इत्यादिकं वा यजुर्यदि न ब्रूयात् यद्यनेन सनिहारान्प्रेषयेत् तदा आगमाभावात् यावत एव पशूनभिदीक्षेत दीक्षाकाले यावद्भिः पशुभिरुपलक्षितो भवति तावन्त एवास्य पशवस्स्युः । नाधिका सनिरित्याहुः । तदेतदनन्तरं वक्ष्यमाणं यजुः 'रास्व'† इत्यादिकं यत्र 'भूयो भर'† इति श्रूयते । यदि तन्न ब्रूयात् आहरन्तं दृष्ट्वा तन्न जपेत् यथोक्तदोषप्रसङ्ग इति । तस्मादस्य वच-

---

* सं. १-२-३.[5]

† सं. १-२-३.[6]

परिमितानेव पशूनवरुन्धे चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रति गृह्णाति वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेदयथादेवतं दक्षिणा गमयेदा दे-

[21]चन्द्रम । असि । मम । भोगाय । भव । इति । आह । यथादेवतमिति यथा—देवतम् । एव । एनाः । प्रतीति । गृह्णाति । [22]वायवे । त्वा । वरुणाय । त्वा । इति । यत् । एवम् । एताः । न । अनुदिशेदित्यनु—दिशेत् । अयथादेवतमित्ययथा—देवतम् । दक्षिणाः । गमयेत् । एति । देवताभ्यः । वृश्चयेत । यत् ।

---

नात् अपरिमितान् पशूनवरुन्धे, भूयोऽप्याहरेति पूर्वपरिमाणाभावस्याशास्यत्वात् ॥

[21]'चन्द्रमसि' 'वस्त्रमसि'* इत्यादिहिरण्यादिप्रतिग्रहमन्त्राः—तत्र यस्माद्धिरण्यवस्त्रादीनि यथालिङ्गं प्रतिगृह्णाति, तस्माद्यथादेवतं या यस्या देवताया दक्षिणा 'अग्नये हिरण्यम्, सोमाय वासः'† इति प्रसिद्धं तस्यैतस्यै देवतायै दक्षिणाभूतां गृह्णाति ॥

[22]वायवे त्वेत्यादयः नष्टानुदेशमन्त्राः‡ ॥ यद्येवमेता एतैर्मन्त्रैर्नानुदिशेत् अयथास्वंग्राहिदेवताकं यथातथा दक्षिणामागमयेत्,

---

*स. १-२-३.[7—12] †तै. आ. ३-१०. ‡स. १-२-३.[13—16]

वताभ्यो वृश्चयेत् यदेवमेता अनु दि-
शति यथादेवतमेव दक्षिणा गमयति
न देवताभ्य आ ॥ ३२ ॥ वृश्च्यते
देवीरापो अपां नपादित्याह यद्वो
मेध्यं यज्ञियꣳ सदेवं तद्वो माऽवं

एवम् । एताः । अनुदिशतीत्यनु–दिशति । यथा-
देवतमिति यथा–देवतम् । एव । दक्षिणाः । गम-
यति । न । देवताभ्यः । एति ॥ ३२ ॥ वृश्च्यते ।
[23]देवीः । आपः । अपाम् । नपात् । इति । आह ।
यत् । वः । मेध्यम् । यज्ञियम् । सदेवमिति स–दे-
वम् । तत् । वः । मा । अवेति । क्रमिषम् । इति ।

---

देवताभ्यश्चावृश्चयेत सर्वतश्छिद्येत । यदेवमित्यादि । एव यथो-
क्तानुदेशकरणात् न कश्चिद्दोष इति ॥

[23]अथ 'देवीरापः'* इति दीक्षितस्यापामुत्तरणे मन्त्रः । त-
स्यार्थमाह—यद्वो मेध्यमित्यादिना ॥ यत् वो युष्माकं मेध्यं
मेधे साधु यज्ञियं यज्ञार्हं सदेवं देवैस्सहितं देवयोग्यं च रूपं,
तद्वो युष्माकं संबन्धि युष्मास्वेव विद्यमानं माऽवक्रमिषमवक्रम्य
मागाम्, इति खल्वेतदाहायं मन्त्रः । तस्मादपामुत्तरणकाले 'वः'
इत्यादिकं मन्त्रमाह - ब्रूयात् ॥

---

* सं. १-२-३. 17

क्रमिषमिति वावैतदाहाच्छिन्नं त-
न्तुं पृथिव्या अनु गेषमित्याह सेतु-
मेव कृत्वाऽत्येति ॥ ३३ ॥

वाव । एतत् । आह । [24]अच्छिन्नम् । तन्तुम् । पृ-
थिव्याः । अन्विति । गेषम् । इति । आह । सेतुम् ।
एव । कृत्वा । अतीति । एति ॥ ३३ ॥

भुञ्जतेऽयं छिन्द्याद्रुन्धेऽग्निराह देव इयंदे-
वताभ्य आ त्रयस्त्रिंशच्च ॥ ४ ॥

---

[24]ननु क्रियमाणमेवापक्रमणं कथमपह्नियते माऽवक्रमिषमिति? तत्राह—अच्छिन्नं तन्तुं यज्ञाख्यमहमनुगेषमनुगतो भूयासमित्यनेनाभिप्रायेण हिं युष्मान् अपक्रामामि, को हि हविष्यत्वादिगुणं युष्मदीयमूर्मिं वृथाऽवक्रामेत्, तस्माद्यज्ञ एवायं मया युष्मदपक्रमणरूपोनुष्ठीयते । पृथिव्यास्तन्तुं पृथिव्यां तायमानं, अन्यत्र हि दीक्षते अन्यत्र देवान् यजते अन्यत्रावभृथमवयन्तीति तस्माद्यज्ञरूपत्वाद्युष्माभिः अपक्रमणं सोढव्यमिति भावः । यस्मादेवमाह तस्मात् सेतुमेव कृत्वाऽत्येति सेतुं कृत्वाऽपक्रामन्निव भवत्यपक्रमणादोषाभावात्; सेतुनाऽभिगच्छन् अतिक्रामन्नपि अपो नातिक्रामन्भवतीति । यद्वा—सेतुमेव यज्ञं कृत्वाऽत्येति । अपक्रमणदोषाभावहेतुत्वसाम्याद्यज्ञस्य सेतुत्वम् ॥

इति षष्ठे प्रथमे चतुर्थोनुवाकः.

---

देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्तेऽन्योन्यमुपाधावन्त्वया प्र जानाम त्वयेति तेऽदित्याꣳ

[1]देवाः । वै । देवयजनमिति देव–यजनम् । अध्यवसायेत्यधि–अवसाय । दिशः । न । प्रेति । अजानन् । ते । अन्यः । अन्यम् । उपेति । अधावन् । [2]त्वया । प्रेति । जानाम । त्वया । इति । ते । अदित्याम् । समिति । अध्रियन्त । त्वया । प्रेति । जा-

---

[1]अत्र 'भद्रादभि श्रेयः'*. इत्यादीनां दीक्षितवादानां ब्राह्मणमौपानुवाक्यस्य प्रथमानुवाके द्रष्टव्यम् । अथ प्रायणीयोदयनीययोः कांश्चिद्विशेषान्विधातुमाह—देवा वै देवयजनमित्यादि ॥ देवा इज्यन्तेऽस्मिन्निति देवयजनम्; कृदुत्तरपदप्रकृतिस्वरत्वेन लित्स्वरः । देवा वै देवयजनमध्यवसाय 'अत्र देवा यष्टव्याः' इति स्थानविशेषाध्यवसायानन्तरं दिशः प्रागादिकाः न प्राजानन् इयं प्राचीयं दक्षिणेत्यादि निश्चेतुं नाशक्नुवन् । ततश्च व्यामुग्धचित्ताः दिग्विशेषापरिज्ञानेन प्राग्वंशादिकरणासमर्थाः अभवन् । ततस्ते अन्योन्यमुपाधावन् अन्यमन्योऽन्यं चान्य इत्येवं परस्परस्य समीपमगच्छन् । 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलम् । यदा समासवत्तदा पूर्वस्य प्रथमैकवचनम्' इति रूपसिद्धिः ॥

[2]केनाभिप्रायेणोपाधावन्नित्याह—त्वया प्र जानाम दिशः त्वं नो

---

* सं १-२-३.[18]

समध्रियन्त त्वया प्र जानामेति
साऽब्रवीद्वरं वृणै मत्प्रायणा एव वो
यज्ञा मदुदयना असन्निति तस्मादा-
दित्यः प्रायणीयो यज्ञानामादित्य उ-

नाम । इति । [3]सा । अब्रवीत् । वरम् । वृणै ।
मत्प्रायणा इति मत्-प्रायणाः । एव । वः । यज्ञाः ।
मदुदयना इति मत्-उदयनाः । असन् । इति ।
तस्मात् । आदित्यः । प्रायणीय इति प्र-अयनी-
यः । यज्ञानाम् । आदित्यः । उदयनीय इत्युत्-

---

दिशः प्रज्ञापयेति वदन्तो देवास्संभूय एकमुपाधावन्निति । उपगन्तव्यस्य वीप्स्यमानत्वाद्द्विर्वचनं—त्वया त्वया च [त्वयेति] । वीप्सायाश्च सुब्विषयत्वादाख्यातं न द्विरुच्यते । यथा—'पुरुष इष्टकामुपादधात्पुरुष इष्टकाम्' इति । अथ देवा अन्यतोनुत्पन्नदिग्ज्ञानाः अदित्यां समध्रियन्त अदितिसकाशे संभूयातिष्ठन्त त्वया प्र जानामेति । धृङ् अवस्थाने, तौदादिकः, 'रिङ्शयग्लिङ्क्षु' ॥

[3]अधुना अदितिः दिशः प्रज्ञापयितुमना अब्रवीत्—वरं वृणै युष्मत्तः युष्माकं दिशः प्रज्ञापयिष्यामि यूयमिदमनुज्ञातुमर्हथ । कः पुनर्वर इत्याह—मत्प्रायणा इति ॥ प्रासंगिकमुदयनीयविषयं देवताविधानं, समानन्यायत्वात् । प्रयन्ति प्रारभन्तेऽनेनेति प्रायणं प्रारम्भः देवता । उद्यन्ति उत्तिष्ठन्ति संस्थापयन्त्यनेनेति उदयनं

दयनीयः पञ्च देवता यजति पञ्च
दिशो दिशां प्रज्ञात्यै ॥ ३४ ॥ अथो
पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमे-

अयनीयः । [4]पञ्च । देवताः । यजति । पञ्च । दि-
शः । दिशाम् । प्रज्ञात्या इति प्र-ज्ञात्यै ॥ ३४ ॥
अथो इति । पञ्चाक्षरेति पञ्च-अक्षरा । पङ्क्तिः ।
पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे ।

---

समाप्तिः देवता । उभत्रापि करणे ल्युट्, सामान्यविवक्षया नपुंसकत्वम् । अहं प्रायणं येषामहमुदयनं येषामिति बहुव्रीहिः, 'त्वमावेकवचने' इति मादेशः । युष्माकं यज्ञाः मत्प्रायणा मदुदयना असन् सन्त्विति साऽब्रवीत्, वरं च देवेभ्यो लब्धवती । तस्मात् यज्ञानां प्रायणीय उदयनीयश्च आदित्यः अदितिदेवत्यः । 'दित्यदिति' इति ण्यः । प्रायणीयः प्रारम्भयागः, उदयनीयस्समाप्तियागः । उभयत्रापि 'कृत्यल्युटो बहुलम्' इति करणे अनीयर्, 'उपोत्तमं रिति' इत्युपोत्तमस्योदात्तत्वम् । यद्वा—प्रायणं प्रारम्भः, उदयनं समाप्तिः, तत्र भवो याग इति गहादित्वाच्छप्रत्ययः, प्रत्ययाद्युदात्तत्वम् ॥

[4]पञ्चेत्यादिविधिः ॥ ताश्च वक्ष्यमाणाः पथ्यास्वस्त्यादयो वेदितव्याः । दिशाम् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । प्रज्ञात्यै प्रज्ञानाय भवति देवतायागः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । अथो इति । अपि चेत्यर्थः । पाङ्क्तत्वं यज्ञ-

वाव रुन्धे पथ्याꣳ स्वस्तिमयज-
न्प्राचीमेव तया दिशं प्राजानन्नग्नि-
ना दक्षिणा सोमेन प्रतीचीꣳ सवि-
त्रोदीचीमदित्योर्ध्वां पथ्याꣳ स्वस्ति

पथ्याम् । स्वस्तिम् । अयजन्न् । [5]प्राचीम् । एव ।
तया । दिशम् । प्रेति । अजानन्न् । अग्निना । द-
क्षिणा । सोमेन । प्रतीचीम् । सवित्रा । उदीचीम् ।
अदित्या । ऊर्ध्वाम् । पथ्याम् । स्वस्तिम् । यज-

---

स्योक्तम् । पङ्क्तिशब्द उत्सादिः । पञ्चानां योगो यज्ञावरुद्धचै च भवति । काः पुनस्ता देवता इत्याह—पथ्यामित्यादि । पथि साधुः पथ्या प्रजानां हितंकरः आदित्य इति केचित् । उषा इत्यन्ये । प्रजापतिरित्यपरे । अस्तेः 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्, छान्दसो भूभावाभावः । 'छन्दस्युभयथा' इति सार्वधातुकत्वाद्वा । असतेर्वा क्तिचि 'तितुत्र' इतीट्प्रतिषेधः । तया देवतया प्राचीं प्राजानन् । प्राच्यादयश्शब्दा व्युत्पादिताः । अग्निनेत्यादि । अग्निमयजन् तेन दक्षिणामजानन् । एवं सर्वत्र । दक्षिणशब्दाद्द्वितीयैकवचनस्याजादेशः । यस्मादेवं पथ्यास्वस्त्यादीनां यागेन देवाः प्राच्याद्याः प्राजानन् तस्मात्पथ्यां स्वस्तिं यजति यजेत् इत्यादयो विधयः ॥

[5]प्राचीमेवेत्यादीनि फलानि ॥ अग्नीषोमौ । 'ईदग्नेः' इतीत्वम्, 'अग्नेस्तुत्स्तोमसोमाः' इति षत्वम्; 'देवताद्वन्द्वे च'

यजति प्राचीमेव तया दिशं प्र जानाति पथ्याꣳ स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानु पश्यति ॥ ३५ ॥ अग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूत एवानु पश्यति सवितारमिष्ट्वाऽदितिं यजतीयं वा

ति । प्राचीम् । एव । तया । दिशम् । प्रेति । जानाति । पथ्याम् । स्वस्तिम् । इष्ट्वा । अग्नीषोमावित्यग्नी–सोमौ । यजति । चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । अग्नीषोमावित्यग्नी–सोमौ । ताभ्याम् । एव । अन्विति । पश्यति ॥ ३५ ॥ अग्नीषोमावित्यग्नी–सोमौ । इष्ट्वा । सवितारम् । यजति । सवितृप्रसूत इति सवितृ–प्रसूतः । एव । अन्विति । पश्यति । सवितारम् । इष्ट्वा । अदितिम् । यजति । इयम् । वै । अदि-

---

इति द्वयोर्युगपत्प्रकृतिस्वरत्वम् । चक्षुषी इत्यादि । यज्ञचक्षुर्भूताभ्यां ताभ्यामनुपश्यति अनुक्रमेण जानाति, अनन्तरे दिशौ दक्षिणां प्रतीचीं च जानाति । सवितृप्रसूतः सवित्रा प्रेरितः अनुज्ञातो वा अनन्तरामुदीचीं दिशं जानाति । 'तृतीया कर्मणि'

अदि॑तिर॒स्यामे॒व प्र॑ति॒ष्ठाया॒नु॑ पश्य॒-
त्यदि॑तिमि॒ष्ट्वा मा॑रु॒तीमृच॒मन्वा॑ह
म॒रुतो॒ वै दे॒वाना॒ं विशो॑ देववि॒शं
खलु॒ वै कल्प॑मानं मनुष्यवि॒शमनु॑
कल्पते॒ यन्मा॑रु॒तीमृच॑म॒न्वाह॑ वि॒शां

तिः । अ॒स्याम् । ए॒व । प्र॒ति॒ष्ठायेति॑ प्रति—स्थाय॑ ।
अन्विति॑ । प॒श्यति॒ । [6]अदि॑तिम् । इ॒ष्ट्वा । मा॒रु॒-
तीम् । ऋचम् । अन्विति॑ । आ॒ह । म॒रुतः । वै ।
दे॒वाना॑म् । विशः॑ । दे॒व॒वि॒शमिति॑ दे॒व—वि॒शम् ।
खलु॑ । वै । कल्प॑मानम् । म॒नु॒ष्य॒वि॒शमिति॑ मनु-
ष्य—वि॒शम् । आ॒न्विति॑ । क॒ल्प॒ते॒ । यत् । मा॒रु॒-

---

इति पूर्वपदप्रकृतिस्वरत्वम् । इयमित्यादि । अस्यां पृथिव्यां प्रति-
ष्ठाय प्रतिष्ठितो भूत्वा अनन्तरामूर्ध्वां दिशं जानाति । अत्र
सर्वत्रेष्ट्वेति क्त्वाप्रत्ययेन यष्टव्यानां देवतानां क्रमं दर्शयति ॥

[6]अदितिमिष्ट्वेत्यादि ॥ मारुत्या अनुवचनविधिः । यां कां-
चिन्मरुद्देवत्यामन्वाह । विशः प्रजाः प्रकृतयः । देवविशमित्यादि ।
देवानां विशो देवविशम् । मनुष्याणां विशो मनुष्यविशम् ।
जातावेकवचनम्, ‘अच्’ इति योगविभागात्समासान्तः । यथो-
क्तम्—‘अन्यत्रापि दृश्यते’ इति । लिङ्गस्वाभाव्यान्नपुंसकत्वम्,
यथोक्तं—‘लिङ्गमशिष्यम्’ इति । अयमर्थः—यदा देवानां विशः

क्लृप्त्यै ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवत् ॥ ३६ ॥ अप्रयाजमुदयनी-

तीम् । ऋचम् । अन्वाहेत्यनु-आह । विशाम् । क्लृप्त्यै । [7]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । प्रयाजवदिति प्रयाज-वत् । अननूयाजमित्यननु-याजम् । प्रायणीयमिति प्र-अयनीयम् । कार्यम् । अनूयाजवदित्यनूयाज-वत् ॥ ३६ ॥ अप्रयाजमित्यप्र-याजम् । उदयनीयमित्युत्-अ-

---

कल्पन्ते संपद्यन्ते तदा तेनैव हेतुना लक्षणेन वा मनुष्याणां विशः कल्पन्ते संपन्ना भवन्ति । लक्षणेनोः कर्मप्रवचनीयत्वम् । तस्मान्मारुत्या अनुवचनं विशां क्लृप्त्यै भवति ॥

[7]ब्रह्मवादिन इत्यादि ॥ प्रारम्भे यष्टव्याः प्रयाजाः । अनु पश्चात् समाप्तौ यष्टव्याः अनूयाजाः । 'प्रयाजानूयाजौ यज्ञाङ्गे' इति कुत्वाभावो निपात्यते, थाथादिनोत्तरपदान्तोदात्तत्वम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्यनोर्दीर्घत्वम् । प्रयाजयुक्तमविद्यमानानूयाजं प्रायणीयं कार्यं अनूयाजयुक्तमविद्यमानप्रयाजमुदयनीयं कार्यमिति ब्रह्मवादिन आहुः । अत्र पूर्वयोः 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । प्रायणीयोदयनीयशब्दौ अर्धर्चादिद्रष्टव्यौ ॥

यमितीमे वै प्रयाजा अमी अनूया-

यनीयम् । इति । [8]इमे । वै । प्रयाजा इति प्र-

याजाः। अमी इति। अनूयाजा इत्यनु-याजाः। सा।

---

[8]अथ ब्रह्मवादिन उक्तेऽर्थे कारणं वदन्ति—इमे इत्यादि ॥ सन्निहितपुरोवर्तिविषय इदंशब्दः, विपरीतविषयोदश्शब्दः । अयमर्थः— इमे प्रयाजाः अस्मिन् यागारम्भकाले सन्निहिताः प्रयाजाः । अमी अनूयाजाः उत्तरस्मिन् यागसमाप्तिकाले भविष्यन्त्यनूयाजाः । तस्मात्सैव प्रायणीये प्रयाजप्रभृति प्रवृत्ता सा यज्ञस्य सन्ततिः । या उदयनीयानूयाजकाले सन्तन्यते । एतावन्तं कालमेकैकाविच्छेदेन यज्ञस्य सन्ततिः संपन्ना भवति । अन्यथा यदि प्रायणीये अनूयाजास्स्युः, तेषां यज्ञसमाप्तिविषयत्वात् यज्ञसन्ततिः प्रस्तुता विच्छिन्ना स्यात् । अथ यद्युदयनीये प्रयाजास्स्युः तेषां यज्ञारम्भविषयत्वात् प्रस्तुतयज्ञसन्ततिविच्छेदोनेनानुमीयेत । तस्मादुभयाभावात् सैव सा यज्ञस्य सन्ततिर्भवति । यद्वा—इमे वै प्रयाजा आरम्भयागाः खलु प्रयाजाः, तस्मात्त एवारम्भयागे प्रायणीये स्युरिति युज्यते । अथामी अनूयाजाः समाप्तियागाः, त एव समाप्तियागाः उदयनीये भवितुमर्हन्तीत्यर्थः । एतदेव समर्थयते—सैवेति । सैव हि यज्ञस्य प्रायणीयस्य सैवोदयनीयस्य च सन्ततिरिति । यद्वा—इमे इदंरूपाः भूलोकात्मानः प्रयाजाः । अमी अदोरूपाः स्वर्लोकात्मानोनूयाजाः । सैव सा उदयनीयसमाप्तिः एतल्लोकसंबन्धिन्येव यज्ञस्य सन्ततिर्भवति, तथा यजमानोस्मिन् लोके प्रतिष्ठितो भवतीति ॥

जास्सैव सा यज्ञस्य सन्ततिस्तत्त-
था न कार्यमात्मा वै प्रयाजाः प्रजाऽ-
नूयाजा यत्प्रयाजानन्तरियादात्मा-
नमन्तरियाद्यदनूयाजानन्तरियात्प्र-
जामन्तरियाद्यतः खलु वै यज्ञस्य

एव। सा। यज्ञस्य। सन्ततिरिति सं-ततिः। [9]तत्। तथा। न। कार्यम्। आत्मा। वै। प्रयाजा इति प्र-याजाः। प्रजेति प्र-जा। अनूयाजा इत्यनु-याजाः। यत्। प्रयाजानिति प्र-याजान्। अन्त-रियादित्यन्तः-इयात्। आत्मानम्। अन्तः। इ-यात्। यत्। अनूयाजानित्यनु-याजान्। अन्त-रियादित्यन्तः-इयात्। प्रजामिति प्र-जाम्। अ-न्तः। इयात्। यतः। खलु। वै। यज्ञस्य। वित-

---

[9]एवं देवतासाम्येनानयोर्यागयोरैक्यं मन्यमानैः ब्रह्मवादिभिरुक्ते एतद्दूषयति—तत्तथेति॥ अयमभिप्रायः—भिन्नावेतौ यागौ भिन्नकालौ व्यवहितौ च। न च देवताया अभेदमात्रेणैकत्वं भवति अध्वर-कल्पवदिति। यथोक्तं ब्रह्मवादिभिस्तथा न कर्तव्यं; कुत इत्याह—आत्मेत्यादि। प्रथमजातत्वादात्मत्वम्, पश्चाज्जातत्वात्प्रजात्वम्। अन्तरियात् विनाशयेत्। तस्मादन्यतरान्तरयेऽन्यतरान्तरयस्स्यात्। यच्चोक्तं यज्ञसन्ततिस्संपन्ना भवतीति तदपि नेत्याह—यतः ख-

वितंतस्य न क्रियते तदनु यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोनु ॥ ३७॥ परा भवति प्रयाजवदेवा-नूयाजवत्प्रायणीयं कार्यं प्रयाजव-दनूयाजवदुदयनीयं नात्मानमन्त-

तस्येति वि–ततस्य । न । क्रियते । तत् । अन्विति । यज्ञः । परेति । भवति । यज्ञम् । पराभवन्तमिति परा–भवन्तम् । यजमानः । अनु ॥ ३७॥ परेति । भवति । [10]प्रयाजवदिति प्रयाज–वत् । एव । अनूयाजवदित्यनूयाज–वत् । प्रायणीयमिति प्र–अयनीयम् । कार्यम् । प्रयाजवदिति प्रयाज–वत् । अनूयाजवदित्यनूयाज–वत् । उदयनीयमित्युत्–अयनीयम् । न । आत्मानम् । अन्तरेतीत्यन्तः–एति । न । प्रजामिति प्र–जाम् । न । यज्ञः ।

---

ल्विति । यज्ञस्य विततस्य अप्रतिषिद्धप्रसरस्य यतः प्रदेशात्प्रभृति न क्रियते तदनु यज्ञः पराभवति । यज्ञं पराभवन्तं यजमानोनुपराभवति । तस्मादसमीचीनं ब्रह्मवादिवचनमिति ॥

[10]कथं तर्हि कर्तव्यमित्याह—प्रयाजवदेवेत्यादि ॥ उभयमुभयवदेव कर्तव्यमिति नात्मानं न च प्रजामन्तरेति, न यज्ञो न च यजमानः पराभवति ॥

रेति न प्रजां न यज्ञः परा॒भव॑ति॒ न
यज॑मानः प्रा॒य॒णी॒य॑स्य निष्का॒स
उ॑द॒य॒नी॒य॑म॒भि निर्व॑पति॒ सैव सा य॒-
ज्ञस्य॒ सन्त॑ति॒र्याः प्रा॑य॒णी॒य॑स्य या॒-
ज्या॑ यत्ता उ॑द॒य॒नी॒य॑स्य या॒ज्याः॑

प॒रा॒भ॒व॒तीति॑ परा–भव॑ति । न । यज॑मानः । [11]प्रा॒-
य॒णी॒य॒स्येति॑ प्र–अ॒य॒नी॒य॑स्य । नि॒ष्का॒से । उ॒द॒य॒-
नी॒य॒मित्यु॑त्–अ॒य॒नी॒य॑म् । अ॒भि । नि॒रिति॑ । व॒प॒-
ति॒ । सा । ए॒व । सा । य॒ज्ञस्य॑ । सन्त॑ति॒रिति॒
सं–त॒तिः॒ । याः । प्रा॒य॒णी॒य॒स्येति॑ प्र–अ॒य॒नी॒य॑-
स्य । या॒ज्याः॑ । [12]यत् । ताः । उ॒द॒य॒नी॒य॒स्येत्यु॑त्–
अ॒य॒नी॒य॑स्य । या॒ज्याः॑ । कु॒र्यात् । परा॑ङ् । अ॒मु॒-

[11]यज्ञसन्ततिमपि दर्शयाम इत्याह—प्रायणीयस्य निष्कास इति विधिः ॥ प्रायणीयस्य निष्कासे स्थाल्यां मेक्षणे च लग्नं यद्न्नकल्पमन्नं तस्योपर्युदयनीयं निर्वपति । एतेन प्रायणीयोदयनीययोरेका यज्ञस्य सन्ततिः कृता भवति ॥

[12]अत्र तैर्ब्रह्मवादिभिर्यदुक्तं 'याः प्रायणीयस्य याज्यास्ता एवोदयनीयस्य याज्याः कार्याः' इति तदपि दूषयति—यत् यदि तथा कुर्यात् पराङ्पुनरावृत्त एव एनं लोकं मुक्त्वा अमुमूर्ध्वलोकमारोहेत् ; ततश्च प्रमायुकः परागतासुः स्यात् । यज-

कुर्यात्पराङमुं लोकमा रोहेत्प्रमायुः-
कस्स्याद्याः प्रायणीयस्य पुरोनुवा-
क्यास्ता उदयनीयस्य याज्याः करो-

म् । लोकम् । एति । रोहेत् । प्रमायुक इति प्र-
मायुकः । स्यात् । [13]याः । प्रायणीयस्येति प्र-
अयनीयस्य । पुरोनुवाक्या इति पुरः-अनुवाक्याः ।
ताः । उदयनीयस्येत्युत्-अयनीयस्य । याज्याः ।

---

त्याभिरिति याज्याः, 'कृत्यल्युटो बहुलम्' इति करणे ल्युट्, 'यजयाचरुचप्रवचर्चश्च' इति कुत्वाभावः । पराऽञ्चतीति पराङ्, ऋत्विगादिना क्विनि अनुनासिकलोपे संयोगान्तलोपे च 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्, 'अनिगन्तोञ्चतावप्रत्यये' इति गतेः प्रकृतिस्वरत्वम् । मीयतेः छान्दस उकञ्, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[13]एवं परोक्तं दूषयित्वा स्वसिद्धिमाह—याः प्रायणीयस्य पुरोनुवाक्या इत्यादिविधिः ॥ पुरस्तादनूच्यन्ते इति पुरोनुवाक्याः पथ्यास्वस्त्यादीनाम् । ण्यति कृदुत्तरपदप्रकृतिस्वरत्वम् । याः प्रायणीयस्य याज्याः ता उदयनीयस्य पुरोनुवाक्याः कुर्यादित्ययमपि गम्यते । उक्तदोषाभावमिदानीमाह—अस्मिन्नित्यादि । यागान्ते न्यायप्राप्तयाज्यां मुक्त्वा प्रायणीयपुरोनुवाक्यास्वीकारेणामुष्माल्लोकादिमं लोकमागत इवायं भवतीति पुनरावृत्तोस्मिन्नेव

त्यस्मिन्नेव लोके प्रतिं तिष्ठति॥३८॥
कद्रूश्च वै सुपर्णी चात्मरूपयोरस्प-
र्धेताꣳसा कद्रूस्सुपर्णीमंजयथ्साऽब्र-
वीत्तृतीयस्यामितो दिवि सोमस्तमा

करोति । अस्मिन्न् । एव । लोके । प्रतीति ।
तिष्ठति ॥ ३८ ॥

प्रज्ञात्यै पश्यत्यनूयाजवद्यजंमानोनु पुरो-
नुवाक्यांस्ता अष्टौ च ॥ ५ ॥

[1]कद्रूः । च । वै । सुपर्णीति सु–पर्णी । च ।
आत्मरूपयोरित्यात्म–रूपयोः । अस्पर्धेताम् । सा ।
कद्रूः । सुपर्णीमिति सु–पर्णीम् । अजयत् । सा ।

लोके प्रतितिष्ठतीति ; दीर्घायुर्भवतीति यावत् । 'ऊडिदम्' इत्यादिना इदमो विभक्तेरुदात्तत्वम् ॥

इति षष्ठे प्रथमे पञ्चमोनुवाकः

---

[1]अथ सवनगुणान्विधास्यन् तदर्थं गायत्रीं स्तोतुमाह—कद्रूरित्यादि ॥ दिव्यमातरावेते आत्मरूपयोर्निजसौन्दर्यनिमित्तमहं दर्शनीयाऽहं दर्शनीयेति सपत्नीत्वादस्पर्धेतां स्पर्धमाने विप्रतिपत्तिमकुरुताम् । 'कद्रुकमण्डल्वोः' इति कद्रुशब्दादूङ्प्रत्ययः । 'पाककर्ण' इत्यादिना सुपर्णशब्दात् ङीष् । ततस्सा कद्रूस्सुपर्णी-

हर तेनात्मानं निष्क्रीणीष्वेतीयं वै
कद्रूरसौ सुपर्णी छन्दाꣳसि सौपर्णे-
यास्साऽब्रवीदस्मै वै पितरौ पुत्रा-

अब्रवीत् । तृतीयस्याम् । इतः । दिवि । सोमः ।
तम् । एति । हर । तेन । आत्मानम् । निरिति ।
क्रीणीष्व । इति । इयम् । वै । कद्रूः । असौ ।
सुपर्णीति सु–पर्णी । छन्दाꣳसि । सौपर्णेयाः ।
[2]सा । अब्रवीत् । अस्मै । वै । पितरौ । पुत्रान् ।

---

मजयत् रूपवत्तया तां जित्वा दासीं जग्राह । ततस्सा कद्रू-स्सुपर्णीमब्रवीत् । इतस्तृतीयस्यां दिवि सोमो यागात्मा वर्तते, तदानयनेन हेतुना आत्मानं निष्क्रीणीष्व त्वां दासीभावान्मोचयेति । देवनशीलत्वात्त्रयोपि लोका दिव इत्युच्यन्ते, तत्र भूमिष्ठा कद्रूराह—इतस्तृतीयस्यां दिवीति । यद्वा—द्यौरेव त्रिखण्डा, तत्र दिविष्ठैवाह—इतस्तृतीयस्मिन् द्युखण्डे सोमो वर्तते इति । 'तीयस्य वा ङित्सूपसंख्यानम्' इति स्याभावः । 'ऊडिदम्' इतीदमो विभक्तेरुदात्तत्वम् । इयं वा इत्यादि । दिवः पुत्रत्वेन प्रसिद्धानि छन्दांसि, तानि सौपर्णेयाः सुपर्णीपुत्राः केचन दिव्यजनाः, त एव छन्दांसि गायत्र्यादीनि । यद्वा—लिङ्गव्यत्ययः । छन्दांसि सुपर्णापत्यानीत्यर्थः । स्त्रीभ्यो ढकि 'कितः' इत्यन्तोदात्तत्वम् ॥

[2]अथ सा कद्र्वा तथोक्ता सा सुपर्णी पुत्रानब्रवीत् अस्मै ईदृशाय प्रयोजनाय आर्तिपरित्राणाय पितरौ माता च पिता च

न्बिभृतस्तृतीयस्यामितो दिवि सो-
मस्तमा हर तेनात्मानं निष्क्रीणी-
ष्व ॥ ३१ ॥ इति मा कद्रूरवोचदि-
ति जगत्युदपतच्चतुर्दशाक्षरा सती
साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे

बिभृतः । तृतीयस्याम् । इतः । दिवि । सोमः । तम् । एति । हर । तेन । आत्मानम् । निरिति । क्रीणीष्व ॥ ३१ ॥ इति । मा । कद्रूः । अवोचत् । इति । [3]जगती । उदिति । अपतत् । चतुर्दशाक्षरेति चतुर्दश-अक्षरा । सती । सा । अप्राप्येत्यप्र-आ-

पुत्रान् दुःखात्त्रायकस्वभावान् सुतान् बिभृतः उत्पाद्य पोषयतः । 'पिता मात्रा' इत्येकशेषः, पूर्ववदिदमो विभक्तेरुदात्तत्वम् । किं तवागमनमिति चेत्? श्रूयतां पुत्रकाः—तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति मां कद्रूरवोचत् निजरूपवत्तया गर्विता दासीमिव मां मन्यमाना इत्थमवमन्यते । ततोऽस्मिन् व्यसनसंकटे निमग्नामितो मां त्रायध्वमिति ॥

[3]अथ तच्छ्रुत्वा छन्दसां ज्येष्ठभूता जगती उदपतत् ऊर्ध्वं गता। सा चतुर्दशाक्षराऽपि सती सोममप्राप्य अलब्ध्वा न्यवर्तत तत्सकाशात्प्रतिनिवृत्ता । 'शतुरनुमः' इति नद्या उदात्तत्वम् । तस्यै तस्याः सोमेन रहितायाः द्वे अक्षरे अमीयेतामहीयेताम् । अशेस्सरप्रत्यये अक्षरम् । ततस्सा जगती तत्र तृतीयस्यां दिवि

अमीयेताꣳ सा पशुभिश्च दीक्षया
चाऽगच्छत्तस्माज्जगती छन्दसां पशु-
व्यतमा तस्मात्पशुमन्तं दीक्षोप न-
मति त्रिष्टुगुदपतत्त्रयोदशाक्षरा स-

त्य । नीति । अवर्तत । तस्यै । द्वे इति । अक्षरे इति ।
अमीयेताम् । सा । पशुभिरिति पशु-भिः । च ।
दीक्षया । च । एति । अगच्छत् । तस्मात् । जगती ।
छन्दसाम् । पशव्यतमेति पशव्य-तमा । तस्मात् ।
पशुमन्तमिति पशु-मन्तम् । दीक्षा । उपेति ।
नमति । [4]त्रिष्टुक् । उदिति । अपतत् । त्रयोदशा-

---

स्थितान् पशून् दीक्षां च दृष्ट्वा उपादाय तेनोभयेन सहिताऽऽग-
च्छत् । अन्य आहुः—चतुर्दशाक्षराऽपि सती सा अप्राप्य सोम-
सकाशमपि गन्तुमसमर्था न्यवर्तत । ततस्तस्याश्श्रान्तायाः द्वे
अक्षरे अमीयेतां विशीर्णे अभवताम् । सा तादृशी तत्र स्थि-
तान् पशून् दीक्षां च गृहीत्वा आगच्छदिति । तस्माच्छन्दसां
मध्ये जगती पशव्यतमा अतिशयेन पशुभ्यो हिता । हितार्थे
'उगवादिभ्यो यत्' । यस्मादेवं पशुभिस्सह दीक्षा आगता,
तस्मात्पशुमन्तं दीक्षोपनमति उपतिष्ठते दक्षिणा क्षीरादिसंपत्तेश्च ।
'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥

[4]त्रिष्टुगुदपतदित्यादि ॥ गतम् । सा दक्षिणाभिश्च तपसा च
दानलक्षणेन आगच्छत् । तस्मात्त्रिष्टुभो लोके स्थाने माध्यन्दि-

ती साऽप्राप्य न्यंवर्तत तस्यै द्वे अ-
क्षरे अमीयेताꣳ सा दक्षिणाभिश्च
॥४०॥ तपसा चाऽगंच्छत्तस्मात्त्रि-
ष्टुभो लोके माध्यंन्दिने सवने दक्षि-
णा नीयन्त एतत्खलु वाव तप इ-
त्याहुर्यस्स्वं ददातीति गायत्र्युदपत-

क्षरेति त्रयोदश—अक्षरा । सती । सा । अप्राप्ये-
त्यप्र—आप्य । नीति । अवर्तत । तस्यै । द्वे इति ।
अक्षरे इति । अमीयेताम् । सा । दक्षिणाभिः ।
च ॥ ४० ॥ तपसा । च । एति । अगच्छत् ।
तस्मात् । त्रिष्टुभः । लोके । माध्यंन्दिने । सवने ।
दक्षिणाः । नीयन्ते । एतत् । खलु । वाव । तपः ।
इति । आहुः । यः । स्वम् । ददाति । इति ।
[5]गायत्री । उदिति । अपतत् । चतुरक्षरेति चतुः—

---

नसवने दक्षिणा नीयन्ते । उत्सादिर्मध्यन्दिनशब्दः । अधुना माध्यन्दिने सवने, दानमेव तप इत्याह—यत् स्वं ददाति एतदेव खलु तप इत्याहुः । ददातीति 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

[5]ततो गायत्र्युदपतत् चतुरक्षरैव सती अजया सहायभूतया अजामपि सहायभूतां गृहीत्वा ऊर्ध्वं गता, ततस्सा अजा ज्योतिषा

चतुरक्षरा सत्यंजया ज्योतिषा तम-
स्या अजाऽभ्यरुन्ध तदजाया अज-
त्वꣳ सा सोमं चाऽहरच्चत्वारि चाक्ष-
राणि साऽष्टाक्षरा समपद्यत ब्रह्म-

अक्षरा । सती । अजया । ज्योतिषा । तम् । अ-
स्यै । अजा । अभीति । अरुन्ध । तत् । अजा-
याः । अजत्वमित्यज-त्वम् । सा । सोमम् । च ।
एति । अहरत् । चत्वारि । च । अक्षराणि । सा ।
अष्टाक्षरेत्यष्टा-अक्षरा । समिति । अपद्यत ।
[6]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति ॥ ४१ ॥

आत्मीयया दीप्त्या तं सोमं गायत्र्यर्थमभ्यरुन्ध अभिरुद्धवती अभिगतवती । तदित्यादि । अज गतिक्षेपणयोः, 'ङ्याप्पोस्संज्ञाछन्दसोर्बहुलम्' 'त्वे च' इति ह्रस्वत्वम् । ततस्सा गायत्री सोमं चाजया वशीकृतमाहरत्, चत्वारि चाक्षराणि यानि त्रिष्टुब्जगत्योः तत्राहीयन्त तान्येव स्वयमाहरत् । ततः प्रभृति साऽष्टाक्षरा समपद्यत, पादाभिप्रायमिदम् । यथोक्तं 'गायत्र्यष्टकैः' इति । त्रयश्चास्याः पादाः, यथा वक्ष्यति—'पङ्क्त्यां द्वे सवने समगृह्णान्मुखेनैकम्'* इति । तेन चतुर्विंशत्यक्षरा गायत्री । त्रिष्टुब्जगत्यौ च ततः प्रभृत्येकादशद्वादशाक्षरपादे, द्वयोर्द्वयोर्हीनत्वात् । तेन चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा जगती ॥

[6]ब्रह्मवादिन इति ॥ सदर्हतीति सत्यं कारणमुच्यते । दण्डा-

*सं. ६-१-६.7

वादिनो वदन्ति ॥ ४१ ॥ कस्मात्स-
त्याद्गायत्री कनिष्ठा छन्दसाꣳ सती
यज्ञमुखं परीयायेति· यदेवादस्सो-
ममाऽहरत्तस्माद्यज्ञमुखं पर्यैत्तस्मा-
त्तेजस्विनीतमा पद्भ्यां द्वे सवने स-

कस्मात् । सत्यात् । गायत्री । कनिष्ठा । छन्दसाम् । सती । यज्ञमुखमिति यज्ञ—मुखम् । परीति । इयाय । इति । [7]यत् । एव । अदः । सोमम् । एति । अहरत् । तस्मात् । यज्ञमुखमिति यज्ञ—मुखम् । परीति । ऐत् । तस्मात् । तेजस्विनीतमेति तेजस्विनी—तमा । पद्भ्यामिति पत्—भ्याम् ।

---

दिभ्यो यः । कस्मात्कारणाद्गायत्री छन्दसां प्रकृतानां त्रयाणां कनिष्ठा अल्पतमा सती यज्ञमुखं प्रातस्सवनं परीयाय परिगच्छतीति । ‘छन्दसि लुङ्लङ्लिटः’ इति लिट् । ‘युवाल्पयोः कनन्यतरस्याम्’ इति कन् ॥

[7]इत्थं ब्रह्मवादिभिः पृष्टे उत्तरमाह कश्चिद्ब्रह्मवादी—यदेवेति ॥ यदेवेदं कारणं सोममियमाहरत्, अदः एतस्मात् यज्ञमुखं परिगता । यद्वा—अदश्शब्दात्परस्याः पञ्चम्याः ‘सुपां सुलुक्’ इति लुक् । अमुष्माल्लोकादित्यर्थः । एतेर्लिङि इतश्च लोपे अडागमे ‘आटश्च’ इति वृद्धौ ऐदिति भवति । तस्मादेव कारणात् तेजस्विनीतमा अतिशयेन तेजस्विनी गायत्री बभूव । सा

मगृंह्णान्मुखेनैकं यन्मुखेन समगृंह्णा-
त्तदंधयत्तस्माद्द्वे सवंने शुक्रवंती प्रा-
तस्सवनं च माध्यंन्दिनं च तस्मां-
त्तृतीयसवन ऋंजीषमभिषुंण्वन्ति
धीतमिंव हि मन्यंन्ते ॥ ४२ ॥

द्वे इतिं । सवंने इतिं । समगृंह्णादितिं सं–अगृंह्णात् । मुखेन । एकम् । यत् । मुखेन । समगृंह्णादितिं सं–अगृंह्णात् । तत् । अधयत् । तस्मांत् । द्वे इतिं । सवंने इतिं । शुक्रवंती इतिं शुक्र–वती । प्रातस्सवनमितिं प्रातः–सवनम् । च । माध्यंन्दिनम् । च । तस्मांत् । तृतीयसवन इतिं तृतीय–सवने । ऋजीषम् । अभीतिं । सुन्वन्ति । धीतम् । इव ।

---

सोममाहरन्ती पङ्क्त्यां द्वे सवने प्रातस्सवनमाध्यन्दिने समगृह्णात् संगृहीतवती । मुखेन मुखस्थानीयेन पादेन एकं सवनं तृतीयं समगृह्णात् । छन्दसां पक्षिरूपत्वादेवमुक्तम् । द्वौ पादावस्य, तृतीयः पादो मुखमिति । यत् मुखेन सवनं समगृह्णात् तत् अधयत् अपिबत् । तस्मादित्यादि । शुक्रवती रसवती पङ्क्त्यां गृहीतत्वात् । 'नपुंसकाच्च' इति शीभावः । तस्मादित्यादि । यस्मात् धीतं पीतमिव तृतीयसवनं मन्यन्ते तस्मात्तृतीयसवने ऋजीषं किम्भूतं सोमममभिषुण्वन्ति, तस्य पीतसारत्वात् एतादृशस्यापीतत्वात् ॥

आशिरमवं नयति सशुक्रत्वायाथो
संभरत्येवैनत्तꣳ सोमंमाह्रियमाणं
गन्धर्वो विश्वावंसुः पर्यमुष्णात्स
तिस्रो रात्रीः परिंमुषितोऽवसत्तस्मां-
त्तिस्रो रात्रीः क्रीतस्सोमो वंसति

हि । मन्यन्ते ॥ ४२ ॥ [8]आशिरम् । अवेति । नयति । सशुक्रत्वायेति सशुक्र–त्वाय । अथो इति । समिति । भरति । एव । एनत् । [9]तम् । सोमम् । आह्रियमाणमित्यां–ह्रियमाणम् । गन्धर्वः । वि-श्वावंसुरिति विश्व–वसुः । परीति । अमुष्णात् । सः । तिस्रः । रात्रीः । परिंमुषित इति परि–मुषितः । अवसत् । तस्मात् । तिस्रः । रात्रीः ।

---

[8]आशिरमित्यादिविधिः ॥ ऋजीषे आशिरं सोममवनयति सरसत्वार्थम् । अथो अपि च एनत्तृतीयसवनं संभरत्येव संपुष्टमेव करोतीति । एनादेशोऽनुदात्तः ॥

[9]तमित्यादि ॥ तमानीयमानं सोमं विश्वावसुर्नाम गन्धर्वः पर्यमुष्णात् प्रतिरोधक इव भूत्वा आनयनविघ्नमाचरत् । स च परिमुषितः तिस्रो रात्रीः तत्रैव न्यवसत् । तस्मादित्यादि । अत्र त्रित्वसंख्याप्रयुक्तो निवासः दीक्षासमाप्तेः यावत्सुत्यादिवसं वसतीत्यर्थः । अत्रान्तराळदिवसानां त्रित्वात्तिस्र इत्युक्तम् । तेन त्रित्वाभावेऽपि वासो भवत्येव ॥

ते देवा अब्रुवंस्त्रीकामा वै गन्धर्वा-
स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रि-
यमेकहायनीं कृत्वा तया निरक्री-
णंस्सा रोहिद्रूपं कृत्वा गन्धर्वेभ्यः

क्रीतः । सोमः । वसति । [10]ते । देवाः । अब्रुवन् । स्त्रीकामा इति स्त्री–कामाः । वै । गन्धर्वाः । स्त्रि-या । निरिति । क्रीणाम । इति । ते । वाचम् । स्त्रियम् । एकहायनीमित्येक–हायनीम् । कृत्वा । तया । निरिति । अक्रीणन् । [11]सा । रोहित् ।

---

[10]एकहायन्या क्रीणातीति विधास्यन् तदर्थमाह—ते देवा इत्यादि ॥ ते देवाः गन्धर्वेण परिमुषितसोमाः तन्निष्क्रयोपायं विमृशन्तः इत्थमब्रुवन्—गन्धर्वा नाम स्त्रीकामा भवन्ति, तस्मात् स्त्रिया निष्क्रयणभूतया कया चित् सोमं निष्क्रीणामेति । पञ्च-मषष्ठयोरन्यतरस्मिन् लकारे आडागमः । स्त्रीं कामयन्त इति स्त्रीकामाः, 'शीलिकामिभिक्षाचरिभ्यो णः,' 'पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' इति णः । ते वाचमित्यादि । ते तथाकृता-ध्यवसाया देवाः वाचं वाङ्मयाभिमानिनीं एकहायनीमेकवर्षां स्त्रियं कृत्वा तया सोमं निरक्रीणन् निष्क्रीतवन्तः । 'दामहायना-न्ताच्च' इति ङीप् ॥

[11]इदानीं वाचा सोमं निष्क्रीयतामपि देवा वाचं गन्धर्वेभ्यः आहूतवन्त इति दर्शयितुमाह—सेत्यादि ॥ सा वागपाक्रमीत्

॥ ४३ ॥ अपक्रम्यांतिष्ठत्तद्रोहितो जन्म ते देवा अंब्रुवन्नपं युष्मदक्रमीन्नास्मानुपावर्तते विह्वयामहा इति ब्रह्म गन्धर्वा अवंदन्नगांयन्देवास्सा देवान्गायंत उपावंर्तत तस्मा-

रूपम् । कृत्वा । गन्धर्वेभ्यंः ॥ ४२ ॥ अपक्रम्येत्यंप-क्रम्यं । अतिष्ठत् । तत् । रोहितंः । जन्मं ते । देवाः । अब्रुवन् । अपेतिं । युष्मत् । अक्रमीत् । न । अस्मान् । उपावंर्तत इत्युंप-आवंर्तते । वीतिं । ह्वयामहै । इतिं । ब्रह्मं । गन्धर्वाः । अवंदन् । अगांयन् । देवाः । सा । देवान् । गा-

---

अपक्रान्ता । 'नेटि' इति वृद्धिप्रतिषेधः । अस्मांश्च नोपावर्तते अस्मत्समीपं च न गच्छति मध्ये तिष्ठति, तस्मात् यूयं च वयं च इमां विह्वयामहै विविधमाह्वयामः । 'त्यदादीनां यत्परं तच्छिष्यते' इत्यस्मदः शेषः, 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् । ततो ब्रह्म मन्त्रमाह्वानसाधनं गन्धर्वा अवदन्, देवा अगायन् । सेत्यादि । सा रोहित् गायतो देवानुपावर्तत उपागच्छत् । तस्मात्ततःप्रभृति गायन्तं स्त्रियः कामयन्ते । अथ य एवमुक्तप्रकारमर्थं वेद एनं कामुकाः स्त्रियो भवन्ति । 'लषपत' इत्यादिना कमेस्ताच्छीलिक उकञ्, 'नलोकाव्यय' इति षष्ठीप्रतिषेधः । अथो इति । अपिचेत्यर्थः । कन्याया वरितारो

द्गायन्तꣳ स्त्रियः कामयन्ते कामुका
एनꣳ स्त्रियो भवन्ति य एवं वेदाथो
य एवं विद्वानपि जन्येषु भवति ते-
भ्यं एव ददत्युत यद्बहुतया ः ॥४४॥

यंतः । उपावर्तततेत्युप–आवर्तत । तस्मात् । गायं-
न्तम् । स्त्रियः । कामयन्ते । कामुकाः । एनम् ।
स्त्रियः । भवन्ति । यः । एवम् । वेद । अथो इति ।
यः । एवम् । विद्वान् । अपीति । जन्येषु । भवति ।
तेभ्यः । एव । ददति । उत । यत् । बहुतया इति

---

जन्याः, तेष्वपि मध्ये एवं विद्वानपि कश्चिद्भवति, तेभ्य एव कन्यां ददति सत्स्वेवान्येषु वरेषु गुणान्तरवत्सु । एतदुक्तं भवति—ऊर्वास्मात्युता? तन्मध्ये एवं विद्वान् कोपि भवति, तेऽपि कन्यामर्हन्ति न केवलमेवंविद्वान्, तस्मात्तेभ्य एव ददति कन्याम् । उत यत् यद्यपीत्यर्थः । यद्यपि बहुतया बहुविधगुणान्तरशालिनो न्येषु (ता) बहवो विद्यन्ते, अथापि तेभ्य एव ददति एषामेवं विद्वानेकोपि भवति । अन्य आहुः—एवं विद्वानेकोपि यदि जन्येषु भवति तेभ्य एव ददति, किंपुनः यद्बहुतया भवन्ति तेभ्यो ददतीति । अपरे ब्रुवते—जनेभ्यो हितानि जन्यानि जनपदानि । 'उगवादिभ्यो यत्' । 'यतो नावः' इत्याद्युदात्तत्वम् । समानमन्यत् । 'बहुगुणवतुडतिसंख्या' इति संख्यात्वात् 'संख्याया अवयवे तयप्' इति तयप् ॥

भवन्त्येकंहायन्या क्रीणाति वाचैवै-
नꣳ सर्वया क्रीणाति तस्मादेकंहा-
यना मनुष्या वाचं वदन्त्यकूटया-
ऽकर्णयाऽकाणयाऽश्लोणयाऽसंप्तश-
फया क्रीणाति सर्वयैवैनं क्रीणाति

बहु-तयाः ॥ ४४ ॥ भवन्ति । [12]एकंहायन्येत्येकं-हायन्या । क्रीणाति । वाचा । एव । एनम् । सर्वया । क्रीणाति । तस्मात् । एकंहायना इत्येकं-हायनाः । मनुष्याः । वाचम् । वदन्ति । [13]अकूटया । अकर्णया । अकाणया । अश्लोणया । असंप्तशफयेत्यसंप्त-शफया । क्रीणाति । सर्वया । एव ।

---

[12]एकहायन्येत्यादिविधिः ॥ वाचैवेति । सर्वा हि वागेकहायन्यभवत् । तस्मादिति । एकहायनमुपादाय वाचः प्रादुर्भूताः ॥

[13]अकूटयेत्यादिविधिः ॥ कुटिलशृङ्गी कूटा । एकशृङ्गीत्यन्ये । भग्नशृङ्गीत्यपरे । अकर्णा खण्डितकर्णा । अकाणा प्रसिद्धा । श्लोणा शून्या । अशिक्षिताङ्गीति केचित् । कुष्ठव्याधिदूषितेत्यन्ये । सप्तशफा द्युन[ऊन]खुरा या अष्टशफा न भवति सा सप्तशफेति कथ्यते । एताः कूटादयः पर्युदस्यन्ते—सर्वयैवेति । सर्वया अन्यूनया वाचा एनं सोमं क्रीणाति ॥

यच्छ्वे॒तयां॑ क्री॒णी॒याद्दु॒श्चर्मा॒ यज॑मा-
न॒स्स्या॒द्यत्कृ॒ष्णया॑ऽनु॒स्तर॑णी स्या-
त्प्र॒मायु॑को॒ यज॑मानस्स्या॒द्यद्द्वि॒रू॒पया॑
वार्त्र॒घ्नी स्या॒त्स वा॒ऽन्यं जि॑नी॒यात्तं

ए॒न॒म् । क्री॒णा॒ति॒ । [14]यत् । श्वे॒तया॑ । क्री॒णी॒यात् । दु॒श्चर्मेति॑ दुः॒-चर्मा॑ । यज॑मानः । स्या॒त् । यत् । कृ॒ष्णया॑ । अ॒नु॒स्त॒र॒णीत्य॑नु॒-स्तर॑णी । स्या॒त् । प्र॒मा॒यु॑क॒ इति॑ प्र॒-मायु॑कः । यज॑मानः । स्या॒त् । यत् । द्वि॒रू॒पयेति॑ द्वि॒-रू॒पया॑ । वा॒र्त्र॒घ्नीति॒ वा॒र्त्र॒-घ्नी । स्या॒त् । सः । वा॒ । अ॒न्यम् । जि॒नी॒यात् । तम् ।

[14]यदित्यादि ॥ यदि श्वेतवर्णया क्रीणीयात्, दुश्चर्मा यजमानः स्यात् । यत्कृष्णयेति । क्रीणीयादित्येव । अनुस्तरणी मृतविषया इयं स्यात् । मरणानन्तरमास्तीर्यते हिंस्यते इत्यनुस्तरणी । यथा 'मृतायानुस्तरणीं घ्नन्ति'* इति । ततश्च प्रमायुको मरणशील यजमानस्स्यात् । छान्दस उकञ् । यदि द्विरूपया व्यामिश्रवर्णया क्रीणीयात् वार्त्रघ्नी शत्रुघ्नी स्यात्, वृत्रस्य हन्तुरियमिति, उत्सादित्वादञ् । अत एव हि हननशीलानामियं स्वभूता स्यात् । ततश्चानया साधनभूतया वाचा यजमानः अन्यं जिनीयात् मारयेत् । ज्या वयोहानौ, ग्रहिज्यादिना संप्रसारणम्, 'चवायोगे प्रथमा' इति प्रथमा

* सं. ६-६-७.

वाऽन्यो जिनीयादरुणया पिङ्गाक्ष्या क्रीणात्येतद्वै सोमस्य रूपꣳ स्वयैवै-नं देवतया क्रीणाति ॥ ४५ ॥

वा । अन्यः । जिनीयात् । अरुणया । पिङ्गाक्ष्येति पिङ्ग—अक्ष्या । क्रीणाति । एतत् । वै । सोमस्य । रूपम् । स्वया । एव । एनम् । देवतया । क्रीणा-ति ॥ ४५ ॥

निष्क्रीणीष्व दक्षिणाभिश्च वदन्ति मन्यन्ते गन्धर्वेभ्यो बहुतया: पिङ्गाक्ष्या दश च ॥ ६ ॥

---

तिङ्विभक्तिर्न निहन्यते, या सुट्, उदात्तत्वम् । शत्रौ हन्तव्ये को हनिष्यते को हनिष्यतीति न ज्ञायते, ततश्चाविशेषाद्यजमा-नोपि हन्तव्यस्संभाव्येत, तस्मात् पाक्षिकदोषपरिहारार्थं द्विरूपया न क्रीणीयात् । तस्मादरुणया सन्ध्यावर्णया पिङ्गाक्ष्या सोमं क्रीणातीति विधिः । 'बहुव्रीहौ सक्थ्यक्ष्णो.' इति षच् समा-सान्तः, 'षिद्गौरादिभ्यश्च' इति ङीषि 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । एतदित्यादि । अरुणं पिङ्गाक्षं चेति सोम-स्यौषधीशस्य रूपम्, तस्मात्स्वयैव देवतया एनं वल्लीसोमं क्रीणाति ॥

इति षष्ठे प्रथमे षष्ठोनुवाकः.

तद्धिरंण्यमभवत्तस्मांदद्भ्यो हिरंण्यं
पुनन्ति ब्रह्मवादिनों वदन्ति कस्मां-

[1]तत् । हिरंण्यम् । अभवत् । तस्मांत् । अद्भ्य इत्यंत्-भ्यः । हिरंण्यम् । पुनन्ति । [2]ब्रह्मवादिन इतिं ब्रह्म-वादिनंः । वदन्ति । कस्मांत् । सत्यात् । अनस्थिकेंन । प्रजा इतिं प्र-जाः । प्रवीयंन्त

[1]स्रुक्स्थे घृते हिरण्यमवधायाहवनीये होष्यतो हिरण्यं विशिष्टोत्पत्तितया स्तौति—तद्धिरण्यमभवदिति ॥ अत्र तदित्यस्य साकांक्षत्वाद्ब्राह्मणशेषेणास्य भवितव्यम् । कः पुनस्सः? उच्यते—'आपो वरुणस्य पत्नय आसन्' इति* । वरुणस्य पत्नीरपोग्निरभ्यध्यायत् अकामयत । ततस्तास्समभवत् मिथुनीभूयाभुङ्क्त । तस्याग्नेः रेतः परापतत् । तद्धिरण्यमभवदिति ब्राह्मणान्तरप्रसिद्धां हिरण्योत्पत्तिं बोधयितुं तत्रस्थं पदत्रयमुपादत्ते—तस्मादिति । यस्मादप्सु हिरण्यमुत्पन्नं, तस्मादद्भ्यो हिरण्यं पुनन्ति शोधयन्ति न भस्मादिना । 'सुपां सुपो भवन्ति' इति तृतीयार्थे पञ्चमी, हेतौ वा । 'ऊडिदम्' इति भ्यस उदात्तत्वम् ॥

[2]ब्रह्मवादिन इति ॥ कस्मात्कारणात् अनस्थिकेन अस्थिरहितेन प्रजनेन प्रजाः प्रवीयन्ते गर्भार्थमन्तः प्रक्षिप्यन्ते । वेतिः प्रजननकर्मा । प्रजननो गर्भग्रहणम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अस्थन्वतीः अस्थिमत्यः जायन्ते प्रजाः इति प्रश्नं वदन्ति ब्रह्मवादिनः । 'छन्दस्यपि दृश्यते' इत्यनङ्,

*सं. ५-५-४.

त्सत्यादनास्थिकेन प्रजाः प्रवीयन्ते-
ऽस्थन्वतीर्जायन्त इति यद्धिरण्यं घृ-
तेऽवधायं जुहोति तस्मादनास्थिकेन
प्रजाः प्र वीयन्तेऽस्थन्वतीर्जायन्त
एतद्वा अग्नेः प्रियं धाम यद्घृतं ते-
जो हिरण्यमियं ते शुक्र तनूरिदं

इति प्र–वीयन्ते । अस्थन्वतीरित्यस्थन्न्–वतीः ।
जायन्ते । इति । [3]यत् । हिरण्यम् । घृते । अव-
धायेत्यव–धाय । जुहोति । तस्मात् । अनस्थि-
केन । प्रजा इति प्र–जाः । प्रेति । वीयन्ते । अ-
स्थन्वतीरित्यस्थन्न्–वतीः । जायन्ते । [4]एतत् ।
वै । अग्नेः । प्रियम् । धाम । यत् । घृतम् । तेजः ।

---

'अनो नुट्', 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥

[3]अत्रोत्तरं—यदित्यादि ॥ यस्मात्कारणाद्धिरण्यं रेतस्थानीयं घृते प्रजननस्थानीये अवधाय जुहोति तस्मादेतदेवं भवति ॥

[4]इदानीं 'इयं ते शुक्र तनूः'* इति हिरण्यावधानमन्त्रं व्याख्यातुमाह—एतदिति ॥ यद्घृतं नाम एतत् अग्नेः प्रिया इष्टा

---

* सं. १-२-४.[1]

वर्च इत्याह सतेजसमेवैनꣳ सतं-
नुम् ॥ ४६ ॥ करोत्यथो सं भर-
त्येवैनं यदबद्धमवदध्याद्गर्भाः प्रजा-

हिरण्यम् । इयम् । ते । शुक्र । तनूः । इदम् ।
वर्चः । इति । आह । सतेजसमिति स—तेजसम् ।
एव । एनम् । सतनुमिति स—तनुम् ॥ ४६ ॥
करोति । अथो इति । समिति । भरति । एव ।
एनम् । [5]यत् । अबद्धम् । अवदध्यादित्यव—दध्यात् ।
गर्भाः । प्रजानामिति प्र—जानाम् । परापातुका

तनूः । हिरण्यं नामाग्निस्तेजः । तस्मात् 'इयं ते शुक्र तनूः' इत्यादि यदाह, तेन हेतुना एनमग्निं सतेजसं तेजसा युक्तं सतनुं शरीरयुक्तं च करोति । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अथो अपि च सम्भरत्येवैनं एनद्धिरण्यं तेजोरूपं शरीरेणैकीकरोति यद्धृते हिरण्यमवदधाति, यद्वा 'तया संभव'* इति मन्त्र आह । अत्र मन्त्रे हिरण्यस्य शुक्रं तनूरुच्यते घृतं तेजः । ब्राह्मणे तु अग्नेर्घृतं तनूः, हिरण्यं तेजः । ततः अग्नेः तत्तेजसश्च हिरण्यस्याभेदविवक्षया मन्त्रब्राह्मणयोर्विरोधः परिहार्यः ॥

[5]यदबद्धमित्यादि ॥ यदि हिरण्यं सूत्रेणाबद्धं हि स्रुच्यवदध्यात् प्रजानां गर्भाः परापातुकाः परापतनशीलास्स्युः । गर्भस्थानीयस्य हिरण्यस्याबद्धत्वात् । 'लषपत' इत्यादिना उकञ्,

*सं. १-२-४.१

नां परापातुंकास्स्युर्बद्धमवं दधाति गर्भाणां धृत्यैं निष्टर्क्यं बध्नाति प्रजानां प्रजननाय वाग्वा एषा यत्सोमक्रयणी जूरसीत्यांह यद्धि म-

इतिं परा-पातुंकाः । स्युः । बद्धम् । अवेतिं । दधाति । गर्भाणाम् । धृत्यैं । [6]निष्टर्क्यम् । बध्नाति । प्रजानामितिं प्र-जानांम् । प्रजननायेतिं प्र-जननाय । [7]वाक् । वै । एषा । यत् । सोमक्रयणीतिं सोम-क्रयणी । जूः । असि । इतिं । आह । यत् ।

---

कृदुत्तरपदप्रकृतिस्वरत्वम् । तस्माद्बद्धमवदधातीति विधिः । बद्धं हिरण्यं स्रुच्यवदधाति गर्भाणां धृत्यै धारणाय भवति ॥

[6]निष्टर्क्यं बध्नातीति विधिः ॥ संबद्ध्य पाशं अमुक्त्वैव ग्रन्थिमाकृष्टे मुच्यते [तथा] बध्नाति । 'छन्दसि निष्टर्क्य' इति कृत्ये ण्यति निपात्यते । 'निष्टर्क्ये व्यत्ययं विद्यान्निसष्षत्वं निपातनात्' इति । एवं बद्धं प्रजानां प्रजननाय भवति । अन्यथा अनुत्पत्तिस्स्यात् ॥

[7]अत्राहवनीये 'जूरसि'* इति हूयते । अनेन मन्त्रेण सोमक्रयणी प्रतिपाद्यते इति दर्शयितुमाह—वाग्वा इत्यादि ॥ वाचा हि सोमं देवा निरक्रीणन् । तस्माद्वाक् सोमक्रयणी । सोमः क्रीयते अनयेति करणे ल्युट्, कृदुत्तरपदप्रकृतिस्वरत्वम्, तेन

*सं, १-२-४.[2]

नंसा जवंते तद्वाचा वदंति धृता मनसेत्यांह मनंसा हि वाग्धृता जुष्टा विष्णंव इत्यांह ॥ ४७ ॥ यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यांस्ते सत्यसंवसः प्रसव इत्यांह

हि । मनंसा । जवंते । तत् । वाचा । वदंति । धृता । मनंसा । इतिं । आह । मनंसा । हि । वाक् । धृता । [8]जुष्टां । विष्णंवे । इतिं । आह ॥४७॥ यज्ञः । वै । विष्णुः । यज्ञायं । एव । एनाम् । जुष्टांम् । करोति । तस्यांः । ते । सत्यसंवस इतिं सत्य–सवसः । प्रसव इतिं प्र–सवे । इतिं ।

---

लित्स्वरः । तस्मादेनां वाग्रूपेण वर्णयन्तीति ब्राह्मणाभिप्रायः । एतदेव प्रकटयति—जूरसीत्यादि । यद्धि मनसा जवते गच्छति तद्वाचा वदति । मनसो जवः पाटवम् । यतो जवं करोति तस्मात् जूरिति मन उच्यते, प्रत्यर्थं गन्तृ इत्यर्थः । जोर्गतिकर्मणः 'क्विब्वचि' इत्यादिना क्विब्दीर्घौ । यस्मादेवं तस्माज्जूरसीति सोमक्रयणीं मन्त्र आहेत्यर्थः । धृता मनसेति । यस्मान्मनसा वाग्धृता तदिच्छातस्तत्प्रवृत्तेः तस्माद्धृता मनसेति सोमक्रयणीमाह ॥

[8]विष्णव इति ॥ व्यापकत्वाद्यज्ञ उच्यते । तस्यास्त इति । सत्यसवास्सविता, तस्य प्रसवे अनुज्ञाता[या]मिति यदाह तस्मा-

सवितृप्रसूतामेव वाचमवं रुन्धे का-
ण्डेकाण्डे वै क्रियमाणे यज्ञꣳ र-
क्षाꣳसि जिघाꣳसन्त्येष खलु वा
अरक्षोहतः पन्था योऽग्नेश्च सूर्यस्य
च सूर्यस्य चक्षुराऽरुहमग्नेरक्षणः क-

आह । सवितृप्रसूतामिति सवितृ-प्रसूताम् । एव । वाचम् । अवेति । रुन्धे । [१]काण्डेकाण्ड इति काण्डे-काण्डे । वै । क्रियमाणे । यज्ञम् । रक्षाꣳसि । जिघाꣳसन्ति । एषः । खलु । वै । अरक्षोहत इत्यरक्षः-हतः । पन्थाः । यः । अग्नेः । च । सूर्यस्य । च । सूर्यस्य । चक्षुः । एति । अरुहम् ।

त्सवितृप्रसूतां सवित्राऽनुज्ञातां वाचमवरुन्धे । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[१]हिरण्यमन्तर्धाय यजमानमादित्यमुद्वीक्षयति—सूर्यस्येति ॥ तदभिप्रायमाह—काण्डेकाण्डे इति ॥ काण्डं पर्व अवयव इति पर्यायाः । सर्वस्मिन् यज्ञावयवे क्रियमाणे आरभ्यमाणे यज्ञं रक्षांसि हन्तुमिच्छन्ति । तस्मादनेनारक्षोहतं पन्थानमारूढेन वर्तितव्यमित्याह—एष खल्विति । अरक्षोहतः रक्षोभिरहतः हन्तुमशक्यः अग्नेश्च सूर्यस्य च पन्थाः । तस्मादयं 'सूर्यस्य चक्षुरारुहम्'* इत्याद्याह । तेनारक्षोहतं पन्थानमारूढो भवति यथा

*सं. १-२-४.[4]

नीनिकामित्याह य एवारक्षोहतः पन्थास्तꣳ समारोहति ॥ ४८ ॥ वाग्वा एषा यत्सोमक्रयणी चिदसि

अग्नेः । अक्ष्णः । कनीनिकाम् । इति । आह । यः । एव । अरक्षोहत इत्यरक्षः—हतः । पन्थाः । तम् । समारोहतीति सं—आरोहति ॥ ४८ ॥ [10]वाक् । वै । एषा । यत् । सोमक्रयणीति सोम—क्रयणी । चित् । असि । मना । असि । इति ।

---

रक्षोभिर्न बाध्यते । सूर्यस्य संबन्धि सर्वेषां चक्षुस्थानीयं अग्नेरक्ष्णः कनीनिकास्थानीयं मण्डलमारूढोस्मीति मण्डलान्तर्गतेन पुरुषेण सह स्वात्मन एकीभावभावनया न केन चिदपि बाध्यते इति मन्त्रेण प्रतिपाद्यते इति ब्राह्मणाभिप्रायः । मण्डलरेखाऽरक्षोहतः पन्थाः, तद्धि सूर्येणाग्निना चारूढः पन्था इति । यथा 'उद्यन्तं वावादित्यमग्निरनु समारोहति'* इति ॥

[10]अथ सोमक्रयण्यनुमन्त्र्यते—चिदिति ॥ तत्र वाग्रूपेण सोमक्रयणी वर्ण्यते इति प्रतिपादयितुमाह—वाग्वा इत्यादि । यथोक्तं 'ते वाचं स्त्रियम्'† इत्यादि । चिदसि मनाऽसीत्याहेति । 'चिदसि' इत्यारभ्य 'पुनरेहि सह रय्या'‡ इत्यन्तं यदाह एतदेनां सोमक्रयणीं वाग्रूपां शास्ति शिक्षयति ईदृशी त्वमसि, इत्थं त्वया कर्तव्यमिति बोधयति । यद्वा—एतस्मिन् काले यज्ञे

---

*ब्रा. २-१-२. †सं. ६-१-६.[10] ‡सं. १-२-४.[5]

मनाऽसीत्याह शास्त्येवैनामेतत्त-
स्माच्छिष्टाः प्रजा जायन्ते चिद-
सीत्याह यद्धि मनसा चेतयते त-
द्वाचा वदति मनाऽसीत्याह यद्धि
मनसाऽभि गच्छति तत्करोति धी-

आह । शास्ति । एव । एनाम् । एतत् । तस्मात् ।
शिष्टाः । प्रजा इति प्र—जाः । जायन्ते । [11]चित् ।
असि । इति । आह । यत् । हि । मनसा । चे-
तयते । तत् । वाचा । वदति । मना । असि । इ-
ति । आह । यत् । हि । मनसा । अभिगच्छती-
त्यभि—गच्छति । तत् । करोति । धीः । असि ।

---

एवैनां शास्ति । सप्तम्या अलुक् । तस्मात् शिष्टाः शिक्षिता एव प्रजा जायन्ते ॥

[11]इदानीं शिक्षाविशेषानेकैकशः आचष्टे—चिदसीत्याहेति ॥ मनसा चेतनीयं ज्ञातव्यं हि वाचा वदति, तस्माच्चित्कार्यत्वात् चिदिति वागुच्यते । मनसा चेतनीयाभावे वाचोनुत्पत्तेः । तस्माच्चिदसीति वाग्धर्मेण सोमक्रयण्युच्यते । मनाऽसीत्याहेति । यद्धि मनसाऽभिगच्छति अध्यवस्यति तत्करोति वदतीत्यर्थः । कर्मेन्द्रियत्वादेवमुक्तम् । इन्द्रियकार्यत्वान्मनेति वागुच्यते । धीरिति । यन्मनसा ध्यायति प्रजानाति तद्वाचा वदति । तस्माद्धीकार्यत्वाद्धीरित्युच्यते । एवं

रसीत्याह यद्धि मनसा ध्यायति
तद्वाचा ॥ ४१ ॥ वदति दक्षिणाऽ-
सीत्याह दक्षिणा ह्येषा यज्ञियाऽसी-
त्याह यज्ञियामेवैनां करोति क्षत्रि-
याऽसीत्याह क्षत्रिया ह्येषाऽदिति-
रस्युभयतश्शीर्ष्णीत्याह यदेवादित्यः

इति । आह । यत् । हि । मनसा । ध्यायति । तत् । वाचा ॥ ४१ ॥ वदति । दक्षिणा । असि । इति । आह । दक्षिणा । हि । एषा । यज्ञिया । असि । इ-ति । आह । यज्ञियाम् । एव । एनाम् । करोति । क्षत्रिया । असि । इति । आह । क्षत्रिया । हि । एषा । अदितिः । असि । उभयतश्शीर्ष्णीत्युभयतः–शीर्ष्णी । इति । आह । यत् । एव । आदित्यः । प्राय-

---

चित्चेत्यचित्तत्रितयात्मना वर्तमानत्व[नस्त्व]मेव यागं निर्वर्तयसीति स्तुतिः । दक्षिणा शीघ्रकारिणी ह्येषा । यद्वा—दानसामान्यात् दक्षिणोक्ता । यज्ञियां यज्ञार्हामेनां करोति यज्ञकर्मार्हाम् । 'यज्ञर्त्विग्भ्यां तत्कर्मार्हति' इति यः । क्षत्रियेति । क्षतात्त्राणसमर्थे बले भवा यज्ञद्वारेणापत्यत्वविवक्षया 'क्षत्राद्घः' । अदितिरस्युभयतश्शीर्ष्णी यस्मादादित्यः अदितिदेवत्यः प्रायणीयश्चोदयनीयश्च यज्ञानाम् । तस्मादेवमुभयतश्शीर्ष्णीत्येतामाह । उभयतो यज्ञा-

प्रायणीयो यज्ञानामादित्य उदयनी-
यस्तस्मादेवमाह यदबद्धा स्यादयं-
ता स्याद्यत्पदिबद्धाऽनुस्तरणी स्या-
त्प्रमायुको यजमानस्स्यात् ॥ ५० ॥

णीय इति प्र-अयनीयः। यज्ञानाम् । आदित्यः ।
उदयनीय इत्युत्-अयनीयः । तस्मात् । एवम् ।
आह । [12]यत् । अबद्धा । स्यात् । अयता । स्यात् ।
यत् । पदिबद्धेति पदि-बद्धा । अनुस्तरणीत्यनु-
स्तरणी । स्यात् । प्रमायुक इति प्र-मायुकः ।
यजमानः । स्यात् ॥ ५० ॥ यत् । कर्णगृहीतेति

---

नामाद्यन्तयोः शिरस्स्थानीयौ प्रायणीयोदयनीयाख्यौ चरू यस्या-
स्सा तथोक्तेति ॥

[12]यदित्यादि ॥ यदि नयनकाले एकहायनी अबद्धा स्यात्
अयता अनियमिता स्यात् । उभयत्राप्यव्ययपूर्वपदप्रकृतिस्वरत्वम् ।
यदि पादिबद्धा पादेन बद्धा स्यात्, अनुस्तरणी स्यादित्यादि।
व्याख्यातम्* । 'तत्पुरुषे कृति बहुलम्' इत्यलुक्, 'पद्दन्'
इति पद्भावः । यदि कर्णे गृहीता स्यात्, वार्त्रघ्नी स्यादित्यादि।
व्याख्यातम्* । तस्मात् 'मित्रस्त्वा'† इत्यादिवचनेन देवतानां मध्ये
शिवेन मित्रेणैव एनां पादे बध्नाति, तस्मादुक्तदोषाप्रसंग इत्यवयवस्तुतिः ।
'ऊडिदम्' इति सप्तम्युदात्तत्वम् । एवं 'पूषाऽध्वनः'† इति

*सं. ६-१-६.[14] †सं. १-२-४.[5]

यत्कर्णगृहीता वार्त्रघ्नी स्यात्स वाऽ-
न्यं जिनीयात्तं वाऽन्यो जिनीया-
न्मित्रस्त्वा पदि बंध्नात्वित्याह मित्रो
वै शिवो देवानां तेनैवैनां पदि
बंध्नाति पूषाऽध्वनः पात्वित्याहेयं
वै पूषेमामेवास्या अधिपामकस्स-
मंष्ट्या इन्द्रायाध्यक्षायेत्याहेन्द्रमेवा-

कर्ण–गृहीता । वार्त्रघ्नीति वार्त्र–घ्नी । स्यात् । सः । वा । अन्यम् । जिनीयात् । तम् । वा । अन्यः । जिनीयात् । मित्रः । त्वा । पदि । बध्नातु । इति । आह । मित्रः । वै । शिवः । देवानाम् । तेन । ए-व । एनाम् । पदि । बध्नाति । पूषा । अध्वनः । पातु । इति । आह । इयम् । वै । पूषा । इमाम् । एव । अस्याः । अधिपामित्यधि–पाम् । अकः । समंष्ट्या इति सं–अष्ट्यै । इन्द्राय । अध्यक्षायेत्य-धि–अक्षाय । इति । आह । इन्द्रम् । एव । अस्याः ।

---

मन्त्रैकदेशवचनेन पूषशब्दवाच्यां पृथिवीमेव अस्या एकहायन्याः अधिपां अधिकं पालयित्रीमकः करोति । 'छन्दसि लुङ्लङ्लिटः' इति लुङ्, 'मन्त्रे घस' इति च्लेर्लुक् । इदमोन्वादेशोनु-दात्तः । अधिकं पातीति 'आतो मनिन्' इति विच् । एवं

स्या अध्यंक्षं करोति ॥ ५१ ॥ अनुं त्वा माता मंन्यतामनुं पितेत्याहानुं-मतयैवैनंया क्रीणाति सा देंवि देव मच्छेहीत्यांह देवी ह्येषा देवस्सोम इन्द्रांय सोममित्याहेन्द्रांय हि सोमं आह्रियते यदेतद्यजुर्न ब्रूयात्परांच्ये-

अध्यंक्षमित्यधि–अक्षम् । करोति ॥५१॥ अन्विति । त्वा । माता । मन्यताम् । अन्विति । पिता । इति । आह । अनुंमतयेत्यनुं–मतया । एव । एनया । क्रीणाति । सा । देवि । देवम् । अच्छं । इहि । इति । आह । देवी । हि । एषा । देवः । सोमः । इन्द्रांय । सोमंम् । इति । आह । इन्द्रांय । हि । सोमंः । आह्रियत इत्यां–ह्रियते । [1] यत् । एतत् । यजुंः । न । ब्रूयात् । परांची । एव । सोमक्रयणीति

पूष्ण आधिपत्यकरणं समष्ट्यै सम्यगवाप्त्यै भवति अस्याः । अक्षोतेः क्तिनि 'तितुत्र' इतीट्प्रतिषेध, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । इन्द्रमेवेत्यादि । सुबोधम् । अनुमतयैव मात्रादिभिः । देवी ह्येषा सोमक्रयणी । देवस्सोमः । तस्मात्सा देवि देवमच्छेहीत्याह ॥

[13]यदेतदिति ॥ 'रुद्रस्त्वाऽऽ वर्तयतु'* इति यदेतद्यजुर्न ब्रूयात्

* सं. १-२-४.[5]

व सोमक्रयणीयाद्रुद्रस्त्वाऽऽवर्तयु-
त्वित्याह रुद्रो वै क्रूरः ॥ ५२ ॥ दे-
वानां तमेवास्यै पुरस्ताद्दधात्यावृत्त्यै
क्रूरमिव वा एतत्करोति यद्रुद्रस्य
कीर्तयति मित्रस्य पथेत्याह शान्त्यै

सोम–क्रयणी । इयात् । रुद्रः । त्वा । एति । वर्त-
यतु । इति । आह । रुद्रः । वै । क्रूरः ॥५२॥ दे-
वानाम् । तम् । एव । अस्यै । पुरस्तात् । दधाति ।
आवृत्त्या इत्या–वृत्त्यै । क्रूरम् । इव । वै । एतत् ।
करोति । यत् । रुद्रस्य । कीर्तयति । मित्रस्य ।

पराची अनिवर्तमानैव सोमक्रयणीयात् गच्छेत् । पराङ्मुखी अञ्च-
तीति ऋत्विगादिना क्विनि 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्,
'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् । तस्मादेतस्य
यजुषो वचनेन देवानां मध्ये क्रूरं अप्रधृष्यं पुरस्तादग्रतो दधाति
स्थापयति आवृत्त्यै आवृत्त्यर्थमेवास्या एतत् भवति । अप्रधृष्यं
देवमग्रतो दृष्ट्वा भयादावर्तते, न पराची गच्छतीत्यर्थः । 'तादौ
च' इति गतेः प्रकृतिस्वरत्वम् । क्रूरमिवेति । कर्मणि षष्ठी ।
यद्रुद्रं कीर्तयति क्रूरमेव तत्करोति क्रूरस्य कीर्तितमिति, तस्मात्
'मित्रस्य पथा'* इति यदाह तदेवास्य शान्त्यै भवति निजकी-

* सं. १-२-४.5

वाचा वा एष वि क्रीणीते यस्सो-
मक्रयंण्या स्वस्ति सोमंसखा पुन-
रेहिं सह रय्येत्याह वाचैव विक्रीय

पथा । इतिं । आह । शान्त्यैं । [14]वाचा । वै । ए-
षः । वीतिं । क्रीणीते । यः । सोमक्रयण्येतिं सो-
म-क्रयंण्या । स्वस्ति । सोमंसखेति सोमं-सखा ।
पुनंः । एतिं । इहि । सह । रय्या । इतिं । आह ।
वाचा । एव । विक्रीयेतिं वि-क्रीयं । पुनंः । आ-

तेनापराधमनादृत्य मित्रस्य पथा प्रस्थानेन आवर्तयतीत्याशास्ते ॥

[14]वाचा वा एष इत्यादि ॥ विरूपक्रयो विक्रयः, अयुक्त-रूपत्वात् । अयमर्थः—सोमक्रयण्या सोमं क्रीणाति, एष यजमानः वाचा विक्रीणीते अयुक्तरूपं क्रयं करोति; एकहायन्याः वाक्त्वात् वाचो व्ययस्यायुक्तत्वात् । सोमः क्रीयतेऽनयेति सोमक्रयणी, तेन यः सोमक्रयण्या क्रीणाति तेनेति गम्यते । न हि क्रयकरणेन विक्रयः क्रियते । तस्मात् स्वस्तीत्यादिवचनेन कृत्वापि वाचारूपं क्रयं पुनरात्मन्येष धत्ते; पुनरादास्यमानत्वात् । वाचमपि दत्वा सोमस्तावत्क्रीयते इति । यद्वा—विशिष्टः क्रयो विक्रयः आलस्यादिश्लाघ्यत्वात् । अयमर्थः—यस्सोमक्रयण्या क्रीणाति एष खलु वाचा विक्रीणीते वाचमपि प्रदाय विशिष्टं क्रयं करोति, तस्मात्क्रयस्य वैशिष्ट्यार्थं वाचमेव तावद्दत्वा क्रयः क्रियते । पुनः क्रीते सोमे स्वस्त्यादिवचनेन आत्मनि वाचं धत्ते, क्रयश्च

पुनरात्मन्वाचं धत्तेऽनुपदासुकाऽस्य
वाग्भवति य एवं वेद ॥५३॥
षट्पदान्यनु नि क्रामति षडहं वा-

त्मन् । वाचम् । धत्ते । अनुपदासुकेत्यनुप-दासु-का । अस्य । वाक् । भवति । यः । एवम् । वेद ॥ ५३ ॥

सतनु विष्णव इत्याह समारोहति ध्यायति
तद्वाचा यजमानस्स्यात्करोति क्रूरो वेद॥७॥

[1]षट् । पदानि । अनु । नीति । क्रामति । षडहमिति षट्-अहम् । वाक् । न । अतीति । वद-

विशिष्टो भवति, वाचश्च व्ययो न कृतो भवति । एवमेतदर्थरूपं यो वेद तस्यानुपदासुका वाग्भवति उपक्षयशीला कदाचिदपि न भवति । दसु उपक्षये, छान्दस उकञ् । 'परिव्यवेभ्यः क्रियः' इति क्रीणातेरात्मनेपदम् । 'सावेकाचः' इति वाचस्तृतीयाया उदात्तत्वम् ॥

इति षष्ठे प्रथमे सप्तमोनुवाकः.

---

[1]षट्पदान्यनु नि क्रामतीति विधिः ॥ सोमक्रयणीं गच्छन्तीमनुनिक्रामति अनुक्रमेण गच्छति 'वस्व्यसि'* इत्यादिभिष्षड्भिर्मन्त्रैः ।

*सं. १-२-५.1—6

ङ्नाति वदत्युत संवत्सरस्यायने या-
वत्येव वाक्तामव रुन्धे सप्तमे पदे
जुहोति सप्तपदा शक्करी पशवश्श-
क्करी पशूनेवाव रुन्धे सप्त ग्राम्याः

ति । उत । संवत्सरस्येति सं–वत्सरस्य । अयने । यावती । एव । वाक् । ताम् । अवेति । रुन्धे । [2]सप्तमे । पदे । जुहोति । सप्तपदेति सप्त–पदा । शक्करी । पशवः । शक्करी । पशून् । एव । अवेति । रुन्धे । सप्त । ग्राम्याः । पशवः । सप्त ।

---

यस्मादेवं तस्मात् षडहं प्रष्ठचं वाङ्नातिवदति स्तुतशास्त्रव्यतिरेकेण न प्रवर्तते; अपि च संवत्सरस्यायने सांवत्सरिके यस्मात् एकहायनीवाग्रूपां षट्पदानि यजमानो न विसृजति तस्मात्षडहं वाङ्न विसृज्यते इति । तस्मात् षट्पदानुगमनेन यावत्येव वाक्तां सर्वामवरुन्धे ॥

[2]सप्तमे पदे जुहोतीति विधिः ॥ सप्तसंख्यान्वयेन पशुसाधनभूतसप्तपदशक्करीलाभात् पशूनवरुन्धे । सप्त पादा अस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य' इति लोपे 'टाबृचि' इति टापि 'पादः पत्' इति पद्भावः । सप्तसंख्याकानां ग्राम्याणामारण्यानां च पशूनां छन्दसां च गायत्र्यादिजगत्यन्तानां प्रधानानां लाभाय भवति । गवादयो ग्राम्याः । 'ग्रामाद्यखञौ' इति यः । कृष्णादय आरण्याः । उभयस्येति । ग्राम्यारण्यानेकीकृत्य ।

पशवस्सप्तारण्यास्सप्त छन्दाꣳस्यु-
भयस्यावरुध्यै वस्व्यसि रुद्राऽसी-
त्याह रूपमेवास्या एतन्महिमानम्
॥५४॥ व्याचष्टे बृहस्पतिस्त्वा सुम्ने
रण्वत्वित्याह ब्रह्म वै देवानां बृह-

आरण्याः । सप्त । छन्दाꣳसि । उभयस्य । अव-
रुध्या इत्यव—रुध्यै । [3]वस्वी । असि । रुद्रा । अ-
सि । इति । आह । रूपम् । एव । अस्याः । ए-
तत् । महिमानम् ॥५४॥ व्याचष्ट इति वि—आ-
चष्टे । [4]बृहस्पतिः । त्वा । सुम्ने । रण्वतु । इति ।
आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्म-

---

छन्दोभिरुभयं भवति पशूनां छन्दसां चावरुद्ध्यै इति । उभा-
ववयवावस्य 'उभादुदात्तो नित्यम्' इत्ययजाद्युदात्तः, 'तादौ च'
इति गतेः प्रकृतिस्वरत्वम् ॥

[3]इदानीं निष्क्रमणमन्त्रप्रभृति व्याचष्टे—वस्व्यसीत्यादि ॥ वस्वा-
दिमतो यज्ञस्य साधनभावलक्षणमस्य महिमानमेतन्मन्त्रस्वरूपमेव
व्याचष्टे । न किंचिद्व्याख्येयम् ॥

[4]'बृहस्पतिस्त्वा'* इति सप्तपदाभिग्रहणमन्त्रं व्याचष्टे ॥ बृहस्पति-
शब्दो वनस्पत्यादिः, पारस्करादिश्च । ब्रह्मणैवास्मै यजमानाय

*सं. १-२-५.7

स्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे रु-
द्रो वसुभिरा चिकेत्वित्याहावृत्त्यै पृ-
थिव्यास्त्वा मूर्धन्ना जिघर्मि देवयज-
न इत्याह पृथिव्या ह्येष मूर्धा यद्दे-

णा । एव । अस्मै । पशून् । अवेति । रुन्धे । रु-
द्रः । वसुभिरिति वसु-भिः । एति । चिकेतु ।
इति । आह । आवृत्त्या इत्या-वृत्त्यै । [5]पृथिव्याः ।
त्वा । मूर्धन् । एति । जिघर्मि । देवयजन इति देव-
यजने । इति । आह । पृथिव्याः । हि । एषः ।
मूर्धा । यत् । देवयजनमिति देव-यजनम् । इडा-

---

पशूनवरुन्धे । अस्मा इत्यन्वादेशोऽशनुदात्तः । आवृत्त्या इति । आवृत्तिरविनाशः । पराचीयागान्मावर्ततामित्येतदर्थं रुद्रो वसुभिस्सह क्रियमाणं सप्तमं पदमाचिकेतु अनुजानातु यः पशूनां पतिरिति मन्त्रेणाशास्यते, तेन तदनुज्ञालाभादावर्तते अविनाशा वर्तते । अन्यथा रुद्रोभिमन्येत तत् पराच्येव गच्छेदिति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[5]अथ 'पृथिव्यास्त्वा'* इति पदे जुहोति, तद्व्याचष्टे— पृथिव्या ह्येष इति ॥ यद्देवयजनं यत्र देवा इज्यन्ते एष हि पृथिव्या मूर्धा शिरस्थानीयं स्थानं प्रधानभूतमिति पृथिव्या मूर्ध-

---

*सं. १-२-५.8

वयजंनमिडांयाः पुद इत्याहेडांयै ह्येतत्पुदं यत्सोंमुक्रयंण्यै घृतवंति स्वाहां ॥ ५५ ॥ इत्यांह यदेवास्यै पुदाद्घृतमपींड्यत तस्मांदेवमांह य-

याः । पुदे । इतिं । आह । इडांयै । हि । एतत् । पुदम् । यत् । सोमुक्रयंण्या इतिं सोम-क्रयंण्यै । घृतवतीतिं घृत-वति । स्वाहां ॥ ५५ ॥ इतिं । आह । यत् । एव । अस्यै । पुदात् । घृतम् । अपींड्यत । तस्मांत् । एवम् । आह । [6]यत् । अध्व-

---

स्थानयिदेवतायजनरूपेण सप्तमं पदं स्तूयते । यद्वा—पृथिव्या ह्येष मुर्धा मूर्धस्थानीयं सप्तमं पदम् । कोस्य विशेष इत्याह—यद्देवयजनमिति । 'उदात्तयणः' इति पृथिव्या विभक्तेरुदात्तत्वम् । इडायै ह्येतदिति । इडा सोमक्रयणी । 'पशवो वा इडा'* इति तस्मादेतदिडायाः पदं यत्सोमक्रयण्याः पदम् । षष्ठ्यर्थे चतुर्थी । यदेवास्या इति । सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यतेति । यस्मादस्याः पदाद्घृतमपीड्यत तस्मादेवमाह 'इडायाः पदे घृतवति'† इति ॥

[6]'हिरण्यमुपास्य जुहोति'‡ इति विधास्यन् आह—यदध्वर्युरित्यादि॥ अनग्नौ अग्निरहिते देशे । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । आ-

---

*स. २-६-८.[1] †सं. १-२-५.[8] ‡सं. ६-१-८.[6]

दंध्वर्युरंनग्नावाहुंतिं जुहुयादन्धोंऽ-
ध्वर्युस्स्याद्रक्षांꣳसि यज्ञꣳ हंन्युर्
हिरंण्यमुपास्यं जुहोत्यग्निवत्येव जुं-
होति नान्धोंऽध्वर्युर्भवंति न यज्ञꣳ
रक्षांꣳसि घ्नन्ति काण्डेंकाण्डे वै क्रि-
यमांणे यज्ञꣳ रक्षांꣳसि जिघांꣳस-

र्युः । अनग्नौ । आहुंतिमित्या-हुतिम् । जुहुयात् । अन्धः । अध्वर्युः । स्यात् । रक्षांꣳसि । यज्ञम् । हन्युः । हिरंण्यम् । उपास्येत्युंप-अस्यं । जुहोति । अग्निवतीत्यंग्नि-वतिं । एव । जुहोति । न । अन्धः । अध्वर्युः । भवंति । न । यज्ञम् । रक्षांꣳसि । घ्नन्ति । [7]काण्डेंकाण्ड इति काण्डें-काण्डे । वै । क्रियमांणे । यज्ञम् । रक्षांꣳसि । जिघांꣳसन्ति । परिंलिखितमिति परिं-लिखितम् । रक्षः ।

---

हुतिशब्दे 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । अध्वर्योरान्ध्ये सति निर्बाधानि रक्षांसि यज्ञं हन्युः, तस्माद्धिरण्यमुपास्योपधाय जुहोतीति विधिः । एवं सति अग्निवत्येव पदे जुहोति । ततश्चोक्तदोषद्वयाप्रसंगः ॥

[7]काण्डेकाण्ड इति ॥ व्याख्यातम्* । पदपरिलेखनेन रक्षः-

---

*स. ६-१-७,९

न्ति परिलिखित॒ꣳ रक्षः॒ परिलिखिता॒
अरातय॒ इत्याह॒ रक्षसा॒मप॑हत्यै ॥५६
इ॒दम॒हꣳ रक्षसो ग्रीवा अपि कृ-
न्तामि॒ योऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि-
ष्म इत्याह॒ द्वौ वाव पुरु॑षौ॒ यं चै॒व
द्वेष्टि॒ यश्चै॒नं॒ द्वेष्टि॒ तयो॑रे॒वान॑न्तरायं

परिलिखिता॒ इति॒ परि—लि॒खि॒ताः॒ । अरातयः । इति । आ॒ह॒ । रक्षसाम् । अप॑हत्या॒ इत्यप—ह॒त्यै॒ । ॥ ५६ ॥ [१]इ॒दम् । अ॒हम् । रक्षसः । ग्रीवाः । अ-पीति । कृ॒न्ता॒मि॒ । यः । अ॒स्मान् । द्वेष्टि । यम् । च॒ । व॒यम् । द्विष्मः । इति । आ॒ह॒ । द्वौ । वाव । पुरु॑षौ । यम् । च॒ । ए॒व । द्वेष्टि । यः । च॒ । ए॒-न॒म् । द्वेष्टि । तयोः । ए॒व । अन॑न्तरा॒यामित्यन॑-

---

प्रभृतेः परितो नाशितत्वात् एतद्वचनं रक्षसामपहत्यै भवति । पूर्व-वद्गतेः प्रकृतिस्वरत्वम् ॥

[१]द्वौ वावेति ॥ द्वावेतौ पुरुषौ यं च यजमानो द्वेष्टि, यश्चैनं यजमानं द्वेष्टि; एवं यजमानसंबन्धिनौ द्वेष्यद्वेष्टारौ यस्मिन्नित्यात्मसंबन्धितया अध्वर्युराहेति मन्त्राभिप्रायतया ब्राह्मणमाह । अत्रात्मनो द्वेष्टा प्रथमं मन्त्रे निर्दिष्टः, ब्राह्मणे तु द्वेषचः । तत्र मृग्यो हेतुः । तयोरिति । तयोः द्वेष्यद्वेष्ट्रोः एतेन मन्त्रे-

ग्रीवाः कृन्तति पशवो वै सोमक्र-
यण्यै पदं यावत्त्मूतꣳ सं वपति प-
शूनेवाव रुन्धेऽस्मे राय इति सं व-
न्तः—आयम् । ग्रीवाः । कृन्तति । [१]पशवः । वै ।
सोमक्रयण्या इति सोम—क्रयण्यै । पदम् । याव-
त्त्मूतमिति यावत्—त्मूतम् । समिति । वपति ।
पशून् । एव । अवेति । रुन्धे । अस्मे इति । रा-

णास्येति प्रत्येकविवक्षया एकवचनं प्रयुक्तमिति दर्शयति अस्य द्वेष्टुः द्वेष्यस्य चेति । अनन्तरायमिति । अव्यधानेन द्वयोरपि ग्रीवाः कृन्तति, अप्रत्यूहं वा । एतेन च 'अपि कृन्तामि' इत्यपिशब्द-स्यार्थो दर्शितः । अनेन हि कर्तनविषयः कामचार उच्यते । तृतीयार्थे द्वितीया, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बहुव्रीहौ वा व्यत्ययेन 'नञ्सुभ्याम्' इति न प्रवर्तते । ग्रीवाशब्दो धम-निवचनः; तासां बहुत्वात् बहुवचनम् । यथा 'ग्रीवाभ्यस्ते'* इति । कृन्तति छिनत्ति । कृती छेदने, 'शे मुचादीनाम्' इति नुम् ॥

[१]पशवो वा इति ॥ यागद्वारेण पशुहेतुत्वात्, सत्त्वस्य वा शाक्करस्य शाक्करपशुसाधनत्वात् । यावत्त्मूतं संवपतीति विधिः । यावत्प्रदेशः त्मूतः आज्येन सिक्तः तावत्संवपति गृहीत्वा मृत् धरण्यां क्षिपति, पशूनवरुन्धे । मव बन्धने, निष्ठायां 'ज्वर-त्वर' इत्यादिना ऊठादेशः, जस्त्वाभावश्छान्दसः, अनुनासिका-भावश्च । अस्मे राय इति संवपतीति मन्त्रविधिस्स्तुत्यर्थः । आत्मा-

*ऋक्सं. १०-१६३-२.

पत्यात्मानमेवाध्वर्युः ॥ ५७ ॥ प-
शुभ्यो नान्तरेति त्वे राय इति य-
जमानाय प्र यच्छति यजमान एव
रयिं दधाति तोते राय इति पत्निया
अर्धो वा एष आत्मनो यत्पत्नी य-

यः । इति । साम्ऽइति । वपति । आत्मानम् । एव ।
अध्वर्युः ॥ ५७ ॥ पशुभ्य इति पशुऽभ्यः । न ।
अन्तः । एति । त्वे इति । रायः । इति । यजमा-
नाय । प्रेति । यच्छति । यजमाने । एव । रयिम् ।
दधाति । तोते । रायः । इति । पत्निये । अर्धः ।
वै । एषः । आत्मनः । यत् । पत्नी । यथा । गृहे-

नमेवेति । नान्तरेति न व्यवदधाति आत्मानमेव पशुमन्तं करोति ।
तस्मादस्मे रायः पशुलक्षणानि धनानि सन्त्वित्यात्मार्थमेवाऽध्वर्युः
प्रार्थयते; न यजमानार्थं, तस्य 'त्वे रायः' इति प्रार्थयिष्य-
माणत्वात् । त्वे राय इत्यादिविधिः । यजमान एव रयिं
पशुलक्षणं दधाति स्थापयति । तोते राय इति पत्निया इति
विधिः । प्रयच्छतीत्येव । त्वया ऊतं तोतमिति गृहमुच्यते ।
तत्र रायो धनानि सन्त्विति पत्न्यै प्रयच्छति । तत्ता गृहेषु
निदधाति । अर्धो वा इति । आत्मन एवैकदेशः पत्नी; नेदृशं
विस्रंभपात्रमस्ति । तस्माद्यथा गृहेष्वात्मीयेषु निधत्ते भूमावप्रकाशं

थां गृहेषु नि धत्ते तादृगेव तत्त्व-
ष्टीमती ते सपेयेत्याह त्वष्टा वै प-
शूनां मिथुनानाꣳ रूपकृद्रूपमेव प-
शुषु दधात्यस्मै वै लोकाय गार्-

षु । निधत्त इति नि-धत्ते । तादृक् । एव । तत् । [10]त्वष्टीमती । ते । सपेय । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप-कृत् । रूपम् । एव । पशुषु । दधाति । [11]अस्मै । वै । लोकाय । गार्हपत्य इति गार्ह-पत्यः । एति ।

---

स्थापयति तादृगेव तत् पत्न्यै प्रत्तं धनम्, अविनाशि च भवति, काले चोपयुज्यते ॥

[10]'त्वष्टीमती '* इत्यादिना पत्नी यजमानमीक्षते, तद्व्याचष्टे—त्वष्टा वा इति ॥ त्वष्टुर्व्यापारः विविधप्रजारूपनिर्माणशक्तयः, तद्वत्यहं त्वया सपेय मिथुनीभवेयमिति यस्मादनेन मन्त्रेणाशास्ते त्वष्टा च पशूनां मिथुनानां रूपकृत् तस्मादनेन वचनेन पशुषु रूपं यथाऽनुरूपं दधाति पत्नी ॥

[11]अस्मा इत्यादि ॥ अस्मै लोकाय अस्मिन् लोके यदीप्सितं तत्सिद्ध्यै हेतुः गार्हपत्य आधीयते उत्पाद्यते । 'गृहपतिना संयुक्ते ञः' इति ञः । अमुष्मै आमुष्मिकफलसिद्ध्यै आहवनीयः आधीयते । आहूयतेऽस्मिन्नित्याहवनीयः, 'कृत्यल्युटो

---

*सं. १-२-५.[1]

र्हपत्य आ धीयतेऽमुष्मा आहवनी-
यो यद्गार्हपत्य उपवपेदस्मिन्लो-
के पशुमान्स्याद्यदाहवनीयेऽमुष्मिं-
न्लोके पशुमान्स्यादुभयोरुप वप-
त्युभयोरेवैनं लोकयोः पशुमन्तं क-
रोति ॥ ५८ ॥

धीयते । अमुष्मै । आहवनीय इत्या–हवनीयः । यत् । गार्हपत्य इति गार्ह–पत्ये । उपवपेदित्युप–वपेत् । अस्मिन्न् । लोके । पशुमानिति पशु–मान् । स्यात् । यत् । आहवनीय इत्या–हवनीये । अमुष्मिन्न् । लोके । पशुमानिति पशु–मान् । स्यात् । उभयोः । उपेति । वपति । उभयोः । एव । एनम् । लोकयोः । पशुमन्तमिति पशु–मन्तम् । करोति ॥ ५८ ॥

महिमानꣳ स्वाहाऽपहत्या अध्वर्यु-
र्धीयते चतुर्विꣳशतिश्च ॥ ८ ॥

---

बहुलम्' इत्यधिकरणे अनीयर्, 'उपोत्तमं रिति' इत्युपोत्तमस्योदात्तत्वम् । यदित्यादि । यदि गार्हपत्य एवोपवपेत्पदपांसून्, अस्मिन्नेव लोके पशुमांत्स्याद्यजमानः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । यद्याहवनीय एव, अमुष्मिन्नेव पशुमांत्स्यात् । तस्मादुभयोरुपवपतीति विधिः । उभयोर्लोकयोरेनं यजमानं पशुमन्तं करोतीति ॥

इति षष्ठे प्रथमे अष्टमोनुवाकः.

ब्रह्मवादिनो वदन्ति विचित्यस्सो-
मा ३ न विचित्या ३ इति सोमो
वा ओषधीनाꣳ राजा तस्मिन् य-
दापन्नं ग्रसितमेवास्य तद्यद्विचिनु-
याद्यथाऽऽस्याद्ग्रसितं निष्खिदति ता-

[1]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । वि-
चित्य इति वि-चित्यः । सोमा ३ः । न । विचि-
त्या ३ इति वि-चित्या ३ः । इति । सोमः । वै ।
ओषधीनाम् । राजा । तस्मिन्न् । यत् । आपन्न-
मित्या-पन्नम् । ग्रसितम् । एव । अस्य । तत् ।
यत् । विचिनुयादिति वि-चिनुयात् । यथा । आ-
स्यात् । ग्रसितम् । निष्खिदतीति निः-खिदति ।

---

[1]ब्रह्मवादिन इत्यादि ॥ विचित्यः विवेचनीयः तृणादिभ्यः सोमः; किं वा न विचित्यः; इति विचारं वदन्ति ब्रह्मवादिनः । विपूर्वाच्चिनोतेः छान्दसः क्यप्, कृदुत्तरप्रकृतिस्वरत्वेन धातुस्वरः । सोमशब्दो मन्प्रत्ययान्त आद्युदात्तः । तस्य टेः 'विचार्यमाणानाम्' इत्युदात्तः प्लुतः, तस्यासिद्धत्वाद्वर्ज्यमानस्वर-प्रवृत्तिः । एवं न विचित्यः इत्यत्रापि । कुतः पुनस्संशय इत्याह—सोमो वा इति । आपन्नं प्रविष्टं सोमव्यतिरिक्तं तदस्य ग्रसितमेव अनेनौषधिराजेन भुक्तमेव तत् । संबन्धसामान्यवि-

दृगेव तद्यन्न विचिनुयाद्यथाऽक्षन्ना-
पन्नं विधावति तादृगेव तत्क्षोधुंको-
ध्वर्युस्स्यात्क्षोधुंको यजमानस्सोमं-
विक्रयिंत्सोमꣳ शोधयेत्येव ब्रूयाद्य-

तादृक् । एव । तत् । यत् । न । विचिनुयादिति वि-चिनुयात् । यथा । अक्षन् । आपन्नमित्या-पन्नम् । विधावतीति वि-धावति । तादृक् । एव । तत् । क्षोधुंकः । अध्वर्युः । स्यात् । क्षोधुंकः । यजमानः । [2]सोमविक्रयिन्निति सोम-विक्रयिन् । सोमम् । शोधय । इति । एव । ब्रूयात् । यदि ।

---

वक्षया षष्ठी । 'ग्रसितस्कभित' इति निपात्यते । आपन्नशब्दे अकर्मण्यपि क्ते व्यत्ययेन गते प्रकृतिस्वरत्वम् । एवं स्थिते यदि विचिनुयात्, यथा आस्याद्ग्रसितं निष्खिदति निष्कर्षति भुक्तं तादृगेव तत् । खिद दैन्ये, तौदादिकः । अथैष दोषो मा भूदिति यदि न विचिनुयात, यथाऽक्षन् अक्षणि आपन्नं प्रविष्टं तूलादिकं विधावति अक्षिणी विविधमाकलयति पीडयति तादृगेव तत् । अक्ष्णस्सप्तम्याः 'सुपां सुलुक्' इति लुक्, 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेध । तस्मादवश्यं विचेतव्य एव । ततश्च क्षोधुकः क्षुच्छील अध्वर्युर्यजमानश्च स्यात् । छान्दस उकञ् । तस्माद्भवति संशय इति ॥

[2]उत्तरमाह—सोमविक्रयिन्निति ॥ हे सोमविक्रयिन् सोमं शोधय

दीतंरम् ॥ ५१ ॥ यदीतंरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात्सो-मविक्रयी क्षोधुकोऽरुणो ह स्माहौ-पंवेशिस्सोमक्रयंण एवाहं तृतीयस-

इतंरम् ॥ ५१ ॥ यदि । इतंरम् । उभयेन । एव । सोमविक्रयिणमिति सोम-विक्रयिणम् । अर्पयति । तस्मात् । सोमविक्रयीति सोम-विक्रयी । क्षोधुकः । [3]अरुणः । ह । स्म । आह । औपवेशिरित्यौप-वेशिः । सोमक्रयंण इति सोम-क्रयंणे । एव । अह-

---

विचिनुयास्त्वमित्येवमेनं ब्रूयात् । 'कर्मणीनिविक्रयः' इति इनिप्रत्ययः । न तु स्वयं विचिनुयात् । एवमुक्ते स यदि विचिनुयात्, यदि वा न विचिनुयात्, उभयथाऽपि यावेवान्यतर-पक्षे संभावितौ दोषावुक्तौ ताभ्यामुभाभ्यां सोमविक्रयिणमर्पयति प्रापयति । व्यावर्तयतीत्यन्ये । तेन च अवश्यं शोधयेति वच-नाद्विचेतव्यम् । तस्मात्सोमविक्रयी क्षोधुको भवति । 'नेतरा-च्छन्दसि' इत्यडादेशाभावः । अर्तेर्णिचि 'अर्तिह्री' इत्यादिना पुगागमः ॥

[3]इदानीं कांश्चिद्गुणान् विधास्यन् प्रवर्तयिष्यन् तदर्थमाह—अरुणो ह स्मेति ॥ उपवेशस्यापत्यमौपवेशिः । अत इञ् । उपवेशपुत्रो-ऽरुणो नाम आह स्म अब्रवीत् । 'लट् स्मे' इति लट् । कथ-माह स्म? सोमक्रयण एव यदा सोमो विक्रीयते तदानीमेवाहं

वनमवं रुन्ध इतिं पशूनां चर्मन्मिमी-
ते पशूनेवावं रुन्धे पशवो हि तृतीयꣳ
सर्वनं यं कामयेतापशुस्स्यादित्यृं-
क्षतस्तस्यं मिमीतर्क्षं वा अपशव्य-

म् । तृतीयसवनमितिं तृतीय–सवनम् । अवेतिं । रुन्धे । इतिं । पशूनाम् । चर्मन्नं । मिमीते । पशून् । एव । अवेतिं । रुन्धे । पशवंः । हि । तृतीयम् । सवंनम् । [4]यम् । कामयेत । अपशुः । स्यात् । इतिं । ऋक्षतः । तस्यं । मिमीत । ऋक्षम् । वै । अपशव्यम् । अपशुः । एव । भवति । यम् । का-

---

तृतीयसवनमवरुन्धे समापयामि । स एवमुपायमाह । पशूनामित्यादिविधिः । पशूनां चर्मणि सोमो मीयते पशूनवरुन्ध एव । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । चर्मन्निति । लुगादि पूर्ववत् । ननु तृतीयसवनावरोधः प्रतिज्ञातः, तत्किमुच्यते पशूनवरुन्धे इत्यत आह—पशवो हि तृतीयसवनम्; पशुसाधनत्वात् । ततश्च पश्ववरोधेन तृतीयसवनमवरुद्धं भवतीति प्रतिज्ञातसिद्धिः ॥

[4]यमित्यादि ॥ नास्य पशवस्सन्तीत्यपशुः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ऋक्षतः ऋक्षलोमान्ते चर्मणोवकाशे तस्य सोमं मिमीत । सीयुटो यकारस्य वलिलोपः । ऋक्षशब्दात् 'आद्यादिभ्यस्तसिः' इति तासिप्रत्ययः । अपशव्यं पशुभ्यो

मंपशुरेव भंवति यं कामयेंत पशु-
मांस्स्यांत् ॥ ६० ॥ इतिं लोमत-
स्तस्यं मिमीतैतद्वै पंशूनाꣳ रूपꣳ
रूपेणैवास्मैं पशूनवं रुन्धे पशुमाने-
व भंवत्यपामन्तें क्रीणाति सरंस-
मेवैनं क्रीणात्यमात्योसीत्यांहामैवैनं

मयेंत । पशुमानितिं पशु-मान् । स्यात् ॥ ६० ॥
इतिं । लोमतः । तस्यं । मिमीत । एतत् । वै । प-
शूनाम् । रूपम् । रूपेणं । एव । अस्मै । पशून् ।
अवेतिं । रुन्धे । पशुमानितिं पशु-मान् । एव ।
भवति । [5]अपाम् । अन्तें । क्रीणाति । सरंसमिति
स-रसम् । एव । एनम् । क्रीणाति । अमात्यः ।
असि । इतिं । आह । अमा । एव । एनम् । कु-

---

हितं न भवतीति 'उगवादिभ्यो यत्' 'ययतोश्चातदर्थे' इत्यु-
त्तरपदान्तोदात्तत्वम् । पशुमान् बहुपशुः । 'ह्रस्वनुड्भ्यां मतुप्'
इति मतुप उदात्तत्वम् । लोमतः लोम्नि । पूर्ववत्तसिः । एतद्वा
इत्यादि । अस्मै यजमानाय पशूनवरुन्धे; ततः पशुमान् भवति
यजमानः ॥

[5]अपामित्यादिविधिः ॥ अन्ते समीपे क्रीणाति, तथा सति
सरसं सरसः क्रीतो भवति । 'अमात्यः' इत्यादिकः सोमाभिमर्श-

कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो
ह्यस्य ग्रहोऽनसाऽच्छं याति महिमा-
नमेवास्याच्छं यात्यनसा ॥ ६१ ॥
अच्छं याति तस्मादनोवाह्यꣳ समे
जीवनं यत्र खलु वा एतꣳ शीर्ष्णा

रुते । शुक्रः । ते । ग्रहः । इति । आह । शुक्रः ।
हि । अस्य । ग्रहः । [6]अनसा । अच्छं । याति ।
महिमानम् । एव । अस्य । अच्छं । याति ।
अनसा ॥६१॥ अच्छं । याति । तस्मात् । अनोवा-
ह्यमित्यनः-वाह्यम् । समे । जीवनम् । यत्र । खलु ।
वै । एतम् । शीर्ष्णा । हरन्ति । तस्मात् । शीर्ष-

---

नमन्त्रैकदेशः । अमैव सहैव एनं सोमम् यजमानेन । अमा भवतीत्यमात्यः इति कृत्वा । शुक्र इति । शुक्रो हिरण्यं यस्मादस्य सोमस्य ग्रहः ग्रहणसाधनं तस्मादुच्यते शुक्रस्ते ग्रह इति ॥

[6]अनसेत्यादिविधिः ॥ अनसा शकटेन सोममच्छ याति आभिमुख्येन याति महिमानं महत्त्वमेवास्य सोमस्याभिमुख्येन याति, महत्त्वस्याविक्रियमाणत्वात् । अनसेत्यादिद्वितीयविधानमर्थान्तरप्रतिपादनार्थम् । तस्मादित्यादि । अनसोह्यते इष्टदेशः प्राप्यते इत्यनोवाह्यम् । समे अविषमे जीवनं जीवनसाधनं धान्यादिकं यस्मादस्मिन् समे देशे यजेतेति विहिते अनसा वोढुं सोममच्छ

हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवनमभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छ-

हार्यमिति शीर्ष–हार्यम् । गिरौ । जीवनम् । [7]अभीति । त्यम् । देवम् । सवितारम् । इति । अतिच्छन्दसेत्यति–छन्दसा । ऋचा । मिमीते । अतिच्छन्दा इत्यति–छन्दाः । वै । सर्वाणि । छन्दाꣳसि । सर्वेभिः । एव । एनम् । छन्दोभिरिति छन्दः–भिः ।

---

याति, तस्मादनोवाह्यं समे धान्यादिकम् । अनेनैव न्यायेन, यत्र खल्वेतं सोमं विक्रेतारः क्रयस्थानप्राप्तेः पूर्वं शिरसा तत्र गिरौ पर्वतादौ गृहीत्वा विषमे स्थाने तस्मादेव कारणात् शीर्षहार्यं जीवनहेतुद्रव्यम् । कस्मात्? यस्मात्तत्र शिरसा हरन्ति सोमं विक्रेतार इति । यद्वा—व्यत्ययेन पञ्चम्यर्थे त्रल् । यतः खल्वेतं सोमं पर्वतादौ गृहीत्वा विक्रेतारश्शीर्ष्णा हरन्ति क्रयस्थानं प्रापयन्ति; तस्मात्पर्वतादौ धान्यादिकं शिरसा ह्रियते । यस्माच्च क्रयस्थानमानीतं अनसाऽऽच्छ याति, तस्मादनोवाह्यं समे धान्यादिकमिति ॥

[7]अभि त्यं देवमिति अतिच्छन्दसो विधिः ॥ जगत्याः पराण्यतिच्छन्दांसि । तत्रेयमष्टिष्षोडशाक्षरपदा । सर्वाणि छन्दांसीति ।

न्दोभिर्मिमीते वर्ष्म वा एषा छन्द-
सां यदतिच्छन्दा यदतिच्छन्दसर्चा
मिमीते वर्ष्मैवैनꣳ समानानां करो-
त्येकयैकयोत्सर्गम् ॥६२॥ मिमीते-

मिमीते । वर्ष्म । वै । एषा । छन्दसाम् । यत् । अतिच्छन्दा इत्यति–छन्दाः । यत् । अतिच्छन्दसे-त्यति–छन्दसा । ऋचा । मिमीते । वर्ष्म । एव । एनम् । समानानाम् । करोति । [8]एकयैकयेत्येकया–एकया । उत्सर्गमित्युत्–सर्गम् ॥ ६२ ॥ मि-

---

सर्वेषां व्यापकत्वात् । सर्वेभिः । 'बहुलं छन्दसि' इत्यैसभावः । वर्ष्मेत्युच्छ्रयः, समानानामेनं यजमानमुच्छ्रितं करोति ॥

[8]एकयेति विधिः ॥ एकया अङ्गुल्या उत्सृज्योत्सृज्य मिमीते । 'नित्यवीप्सयोः' इति द्विर्वचनम्, 'अनुदात्तं च' इति परस्यानुदात्तत्वम् । एकयैकयेति एकत्वविधिः, उत्सर्गमित्यङ्गुल्युत्सर्गविधिः । आभीक्ष्ण्ये छान्दसो णमुल्, तेनैव गतत्वादाभीक्ष्ण्यस्य द्विर्वचनं न क्रियते । एवमयातयाम्न्या अगतसारया अङ्गुल्या सोमो मितो भवति । पूर्ववद्विर्वचनादि । यद्यनुत्सृज्य मिमीते पुनरुक्ता गतसारैव स्यात् पूर्वेण मानेन । तस्मात् नानावीर्याः पृथग्वीर्या अङ्गुलयः ; पृथङ्मानसाधनत्वात् । सर्वास्वङ्गुलीषु अङ्गुष्ठमुपनिगृह्णाति समीपे नियमेन प्रापयति । तस्मादङ्गुष्ठोऽन्याभिरङ्गुलीभिः समावद्वीर्यस्तुल्यवीर्यः । समादावतुप्प्रत्ययः । तस्मात्सर्वाभिस्तुल्यवीर्यत्वात्

ऽयातयाम्नियाऽयातयाम्नियैवैनं मि-
मीते तस्मान्नानावीर्या अङ्गुलयस्स-
र्वास्वङ्गुष्ठमुप नि गृह्णाति तस्मात्स-
मावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात्स-
र्वा अनु सं चरति यत्सह सर्वाभि-
र्मिमीत सꣳश्लिष्टा अङ्गुलयो जा-
येरन्नेकयैकयोत्सर्गं मिमीते तस्मा-

मीते । अयातयाम्नियाऽयातयाम्नियेत्ययातयाम्नि-
या—अयातयाम्निया । एव । एनम् । मिमीते ।
तस्मात् । नानावीर्या इति नाना—वीर्याः । अङ्गु-
लयः । सर्वासु । अङ्गुष्ठम् । उप । नीति । गृह्णा-
ति । तस्मात् । समावद्वीर्य इति समावत्—वीर्यः ।
अन्याभिः । अङ्गुलिभिरित्यङ्गुलि—भिः । तस्मात् ।
सर्वाः । अनु । सामिति । चरति । यत् । सह ।
सर्वाभिः । मिमीत । सꣳश्लिष्टा इति सं—श्लिष्टाः ।
अङ्गुलयः । जायेरन् । एकयैकयेत्येकया—एकया ।
उत्सर्गमित्युत्—सर्गम् । मिमीते । तस्मात् । विभं-

---

सर्वा अङ्गुलीः अनुसंचरति तत्कार्यकरणायानुक्रमेण सञ्चरति । अथ यदि सर्वाभिस्सहभूताभिः लौकिककार्यवत्तस्य मानं कुर्यात्

द्विभक्ता जायन्ते पञ्च कृत्वो यजुंषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीम् ॥ ६३ ॥ दश सं पद्यन्ते दशाक्षरा

क्ता इति वि–भक्ताः । जायन्ते । [9]पञ्च । कृत्वः । यजुंषा । मिमीते । पञ्चाक्षरेति पञ्च–अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । [10]पञ्च । कृत्वः । तूष्णीम् ॥ ६३ ॥ दश । समिति । पद्यन्ते । दशाक्षरेति दश–अक्षरा । वि-

---

संश्लिष्टाः परस्परं लग्नाः अङ्गुलयो जायेरन् प्रजानाम् । पूर्ववद्वृतेः प्रकृतिस्वरत्वम् । तस्मात्—एकयेत्यादि । गतम् ॥

[9]पञ्च कृत्व इत्यादिविधिः ॥ क्रियाभ्यावृत्तिगणने शब्दान्तरमेवेदमाद्युदात्तं न तु प्रत्ययः । यजुषा 'अभि त्यम्'* इत्यादिना । अनवसानत्वाद्यजुष्ट्वम् । पञ्चत्वसंख्यान्वयात्पाङ्क्तो यज्ञः अवरुद्धो भवति । पङ्क्तिशब्दे उत्सादित्वादञि ञित्वादाद्युदात्तत्वम् ॥

[10]पञ्च कृत्वस्तूष्णीमिति ॥ मिमीते इत्येव । दश दशमुष्टयस्संपद्यन्ते । ततश्च दशसंख्यान्वयात् दशाक्षरा विराट्परिगृहीता भवति । सा च छन्दोलक्षणा विराट्परिगृहीता अन्नात्मिकामपि विराजं प्रतिलम्भयतीति । तथा अन्नाद्यमवरुन्धे । यद्वा—अन्नं

---

*सं. १-२-६[2]

विराडन्नं विराड्विराजैवान्नाद्यमवं रुन्धे यद्यजुंषा मिमींते भूतमेवावं रुन्धे यत्तूष्णीं भंविष्यद्यद्वै तावांनेव सो- मस्स्याद्यावंन्तं मिमींते यजंमान-

राडितिं विराट्। अन्नंम्। विराडितिं वि-राट्। वि- राजेतिं वि-राजा। एव। अन्नाद्यमित्यंन्न-अद्यंम्। अवेतिं। रुन्धे। यत्। यजुंषा। मिमींते। भू- तम्। एव। अवेतिं। रुन्धे। यत्। तूष्णीम्। भविष्यत्। [11]यत्। वै। तावान्। एव। सोमंः। स्यात्। यावंन्तम्। मिमींते। यजंमानस्य। एव। स्यात्।

---

विराट् अन्नहेतुर्विराडित्यर्थः । तस्माद्विराजा अन्नाद्यमवरुन्धे । विविधं राजतीति विराट् । 'सत्सूद्विष' इति क्विप्, व्रश्चादिना षत्वम्, कृदुत्तरपदप्रकृतिस्वरत्वम् । अन्नस्यादनमन्नाद्यम्, अन्नादनसामर्थ्यम् । छान्दसो भावे क्यप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यदित्यादि । यस्माद्यजुषा मिमीते तस्माद्भूतमुत्पन्नमवरुन्धे व्यपदेश्यम् । यस्मा- त्तूष्णीं मिमीते इत्येतस्माद्भविष्यदवरुन्धे अव्यपदेश्यम्, उत्पत्स्यमा- नमव्यपदेश्यम् ॥

[11]अथोपसमूहनं विधास्यन् आह—यद्वा इति ॥ यदि ताव- न्मात्र एव सोमस्स्यात्, यावन्तं दशमुष्टिमात्रं मिमीते । 'यत्त- देतेभ्यः' इति वतुप्, 'आ सर्वनाम्नः' इत्यात्वम् । तथा सति

स्यैव स्यान्नापिं सदस्यांनां प्रजाभ्य-
स्त्वेत्युप समूंहति सदस्यांनेवान्वाभं-
जति वाससोपं नह्यति सर्वदेवत्यं
वै ॥ ६४ ॥ वासस्सर्वाभिरेवैनं देव-
ताभिस्समर्धयति पशवो वै सोमः

न । अपीतिं । सदस्यांनाम् । प्रजाभ्य इतिं प्र-
जाभ्यः । त्वा । इतिं । उपं । समितिं । ऊहति ।
सदस्यान् । एव । अन्वाभंजतीत्यंनु-आभंज-
ति । [12]वाससा । उपेतिं । नह्यति । सर्वदेवत्यमि-
तिं सर्व-देवत्यम् । वै ॥ ६४॥ वासः । सर्वाभिः ।
एव । एनम् । देवताभिः । समितिं । अर्धयति ।
[13]पशवः । वै । सोमः । प्राणायेतिं प्र-अनाय ।

यजमानस्यैव स्यात्, न सदस्यानामपि । तस्मात् 'प्रजाभ्यस्त्वा'* इत्युपसमूहति तमतिरिक्तं चैकराशीकरोतीति विधिः । सदस्यानन्वाभजति तानप्यत्रान्वाशिनः करोति ॥

[12]वाससोपनह्यति बध्नातीति विधि ॥ सर्वदेवत्यमित्यादि विधिः । 'अग्नेस्तूषाधानम्'† इत्यत्र सर्वदेवत्यत्वमस्योक्तम् । सर्वाभिर्देवताभिरेनं समृद्धं करोति ॥

[13]पशवो वा इति ॥ पशूनां कारणत्वात् । प्राणाय त्वेति । वाससोपनह्यतीति विधिः । प्राणः पशुष्वेव स्थापितो भवति ।

*सं. १-२-६³ †ब्रा ६-१-१¹²

प्राणाय त्वेत्युपं नह्यति प्राणमेव
पशुषु दधाति व्यानाय त्वेत्यनु शृन्थ-
ति व्यानमेव पशुषु दधाति तस्मा-
थ्स्वपन्तं प्राणा न जंहति ॥ ६५ ॥

त्वा । इतिं । उपेतिं । नह्यति । प्राणमितिं प्र-अनम् । एव । पशुषु । दधाति । व्यानायेतिं वि-अनार्य । त्वा । इतिं । अन्वितिं । शृन्थति । व्यानमितिं वि-अनम् । एव । पशुषु । दधाति । तस्मात् । स्वपन्तम् । प्राणा इतिं प्र-अनाः । न । जहति ॥ ६५ ॥

इतरं पशुमांथ्स्यांद्यात्यनंसोथ्सर्गं तूष्णीꣳ
सर्वदेवत्यं वै त्रयस्त्रिꣳशच्च ॥ ९ ॥

---

व्यानाय त्वेत्यनुशृन्थाति श्लथयति बन्धमिति विधिः । श्रथि शैथिल्ये, छान्दसं संप्रसारणम्, शृन्थिर्वा द्रष्टव्यः, सर्वथा व्यत्ययेन परस्मैपदम् । व्यानमेव पशुषु दधाति । ननु श्लथने क्रियमाणे कथं व्यानस्य स्थापनं भवति? प्रत्युत च्युतिर्व्यानस्य स्यात् । अयं भावः—मध्यमा खल्वियमवस्थाऽनेन विधीयते । न दृढं बध्नाति, न च सर्वथा मुञ्चति, किन्तु बद्धाबद्धं स्थापयति मध्यमश्च व्यानः प्राणापानयोः । तस्मात् व्यानं पशुषु दधातीत्युक्तम् । तस्मात्स्वपन्तं प्राणा न जहति न त्यजन्ति । यदि हि दृढं बध्नीयात् निरुच्छ्वासः प्राणी म्रियते, सर्वात्मना मोक्षे निर्गच्छेयुरेव सर्वात्मना प्राणाः । बद्धस्थानीयश्चायं सुप्त इति स्वपन्तमित्युक्तम् ॥

इति षष्ठे प्रथमे नवमोनुवाकः.

यत्कलयां ते शफेनं ते क्रीणानीति
पणेतागोअर्घꣳ सोमं कुर्यादगोअर्घं
यजमानमगोअर्घमध्वर्युं गोस्तु मं-

[1]यत् । कलया । ते । शफेन । ते । क्रीणानि । इति । पणेत । अगोअर्घमित्यगो—अर्घम् । सोमम् । कुर्यात् । अगोअर्घमित्यगो—अर्घम् । यजमानम् । अगोअर्घमित्यगो—अर्घम् । अध्वर्युम् । गोः । तु । महिमानम् । न । अवेति । तिरेत् ।

---

[1]यत्कलयेत्यादि ॥ यदि 'कलया ते क्रीणानि' इति 'शफेन ते क्रीणानि' इत्यादिशाखान्तरीयैः मूल्यपदैः सोमं पणेत । अगोअर्घं अगोमूल्यं सोमं कुर्यात् ऊनमूल्यं सोमं कुर्यात् । गौरर्घो मूल्यं यस्य स गोअर्घः गवा समानमहिमा । 'सर्वत्र विभाषा गोः' इति प्रकृतिभावः, न गोअर्घ अगोअर्घः ततो न्यून-मूल्यम्, तादृशं सोमं कुर्यात् तत्संबन्धाद्यजमानमध्वर्युं च । तस्मादन्यथा पणितव्यं—गवा ते क्रीणानीति । तत्रापि दोष-माह—गोस्त्विति । तुशब्दस्तत्रारुचिं द्योतयति । तदन्यथा पणेत। गोर्महिमानं महत्त्वं नावतिरेत् नावशेषयेत् सोममहिम्नः गोर्महि-मानं नातिरेचयेदित्यर्थः । ततश्च सोममूल्यभूताया गोः महत्त्वं न प्रतिपादितं स्यात् । कलयेत्यादिना तु पणने गवैकदेशमूल्यता सोमस्य प्रतिपाद्यत इति गोर्महिमातिरेकस्सूचितो भवति, तन्मू-

हिमानं नावं तिरेद्गवा ते क्रीणानी-
त्येव ब्रूयाद्गोअर्घमेव सोमं करोति
गोअर्घं यजमानं गोअर्घमध्वर्युं न
गोर्महिमानमवं तिरत्यजया क्री-

[2]गवा । ते । क्रीणानि । इति । एव । ब्रूयात् । गोअर्घमिति गो-अर्घम् । एव । सोमम् । करोति । गोअर्घमिति गो-अर्घम् । यजमानम् । गोअर्घमिति गो-अर्घम् । अध्वर्युम् । न । गोः । महिमानम् । अवेति । तिरति । [3]अजया । क्रीणाति ।

---

ल्यत्वात्सोमस्य माहात्म्यमाविष्कृतं भवति । एवं च द्वयोरपि पक्षयोर्दोषावुक्तौ ॥

[2]अधुनाऽभिमतं पक्षं परिगृह्णाति—गवा ते क्रीणानित्येव ब्रूयात् । अयमेव पक्षो ज्यायान् । एवं हि सोमादयः गोअर्घाः कृता भवन्ति । ननूक्तं गोस्तु महिमानं नावतिरेदिति । सत्यमुक्तं, न गोर्महिमानमवतिरति नावशेषयति सोमाद्गोमहिमातिरेको नास्त्येवेति । तस्मान्न तत्प्रतिपादनाय यतितव्यमिति । तुल्यमहिमानावेतौ गौश्च सोमश्चेत्यभिप्रायः । 'त्रिचक्रादीनामन्तः' इति गोअर्घशब्दे उत्तरपदान्तोदात्तत्वम् ॥

[3]अजयेत्यादयो विधयः ॥ सतपसं सयज्ञमेव सोमं क्रीणाति । मन्त्रे 'तपसस्तनूः'* इत्यजाया अभिधानात् । हिरण्येनेति । स-

---

*सं १-२-७[3]

णाति सतंपसमेवैनं क्रीणाति हिरं-
ण्येन क्रीणाति सशुंक्रमेव ॥ ६६ ॥
एनं क्रीणाति धेन्वा क्रीणाति साशि-
रमेवैनं क्रीणात्यृषभेणं क्रीणाति से-
न्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति व-
ह्निर्वा अनड्वान् वह्निनैव वह्निं यज्ञस्यं

सतंपसमिति स—तपसम् । एव । एनम् । क्रीणा-
ति । हिरंण्येन । क्रीणाति । सशुंक्रमिति स—शु-
क्रम् । एव ॥ ६६ ॥ एनम् । क्रीणाति । धेन्वा ।
क्रीणाति । साशिरमिति स—आशिरम् । एव ।
एनम् । क्रीणाति । ऋषभेणं । क्रीणाति । सेन्द्र-
मिति स—इन्द्रम् । एव । एनम् । क्रीणाति । अ-
नडुहा । क्रीणाति । वह्निः । वै । अनड्वान् । वह्नि-
ना । एव । वह्निं । यज्ञस्यं । क्रीणाति । मिथुना-

---

शुक्रं सरसम् । धेन्वेति । साशिरं सप्रोळम् । ऋषभेणेति ।
सेन्द्रम् । इन्द्रो हि देवर्षभः वर्षिता च कामानाम् । अनडु-
हेति । वह्निर्वा अनड्वान् । अनो वहतीत्यनड्वान्, पृषोदरादिः ।
वह्निना अनोवोढ्रा अनडुहा यज्ञस्य वोढारं सोमं क्रीणाति ।
'सुपां सुलुक्' इति द्वितीयाया लुक् । मिथुनाभ्यामिति । गत-
म् । वाससेति । सर्वदेवत्यत्वमुक्तम् । सर्वाभ्यो देवताभ्यः

क्रीणाति मिथुनाभ्यां क्रीणाति
मिथुनस्यावरुध्यै वाससा क्रीणाति
सर्वदेवत्यं वै वाससस्सर्वाभ्य एवैनं
देवताभ्यः क्रीणाति दश सं पद्यन्ते
दशाक्षरा विराडन्नं विराड्विराजैवा-
न्नाद्यमव रुन्धे ॥६ ७॥ तपसस्तनूरसि

भ्याम् । क्रीणाति । मिथुनस्य । अवरुध्या इत्यव-
रुध्यै । वाससा । क्रीणाति । सर्वदेवत्यमिति सर्व-
देवत्यम् । वै । वासः । सर्वाभ्यः । एव । एनम् ।
देवताभ्यः । क्रीणाति । दश । समिति । पद्यन्ते ।
दशाक्षरेति दश-अक्षरा । विराडिति वि-राट् ।
अन्नम् । विराडिति वि-राट् । विराजेति वि-राजा ।
एव । अन्नाद्यमित्यन्न-अद्यम् । अवेति । रुन्धे ॥
६ ७ ॥ [1]तपसः । तनूः । असि । प्रजापतेरिति

---

सर्व देवतार्थमेनं क्रीणाति । यद्वा—सर्व देवतासकाशादेनं क्रीणाति ।
दश संपद्यन्ते इत्यादि । गवा वत्सेन च सह दश भवन्त्यजादयः ।
दशाक्षरेत्यादि । व्याख्यातम् *॥

[4]पशुभ्य एवेति ॥ 'तपसस्तनूः'† 'प्रजापतेर्वर्णः'† इति च

---

*सं. ६-१-९.[10] †सं १-२-७[3]

प्रजापतेर्वर्ण इत्याह पशुभ्य एव
तदध्वर्युर्निं ह्नुत आत्मनोनाव्रस्काय
गच्छति श्रियं प्र पशूनाप्नोति य
एवं वेद शुक्रं ते शुक्रेण क्रीणामी-

प्रजा—पतेः । वर्णः । इति । आह । पशुभ्य इति
पशु—भ्यः । एव । तत् । अध्वर्युः । नीति । ह्नुते ।
आत्मनः । अनाव्रस्कायेत्यना—व्रस्काय । गच्छति ।
श्रियम् । प्रेति । पशून् । आप्नोति । यः । एवम् ।
वेद । [5]शुक्रम् । ते । शुक्रेण । क्रीणामि । इति ।

---

अजया क्रीणन् अध्वर्युः यस्मादेवं रूपयति तदध्वर्युः अजया क्रयं पशुभ्यः निह्नुते तिरस्करोति । आत्मनोनाव्रस्काय पशूनामविच्छेदाय तद्भवति । एवं विद्वान् गच्छति श्रियं, पशूंश्च प्राप्नोति । व्रश्चतेः घञ्, 'चजोः कुघिण्यतोः' इति कुत्वम्, ततो निमित्ताभावाच्छत्वं निवर्तते ॥

[5]यथायजुरिति ॥ उभयोरपि शुक्रादिगुणवत्त्वात् । यद्वा— 'शुक्रेण क्रीणामि'* इति हिरण्येन यत्क्रयणं 'अस्मे चन्द्राणि'* इति हिरण्यस्य च यदादानं तदुभयथा यजु.प्रसिद्धमेवेति आदानमन्त्रानुसारेण क्रयमन्त्र उत्कृष्य व्याख्यायते एवं ब्राह्मणं दृष्ट्वा ।

---

*स १-२-७[1-2]

त्याह यथायजुरेवैतद्देवा वै येन हिरण्येन सोममक्रीणन्तदभीषहा पुनराऽददत को हि तेजसा वि क्रेष्यत इति येन हिरण्येन ॥ ६८ ॥ सोमं क्रीणीयात्तदभीषहा पुनरा ददीत

आह । यथायजुरिति यथा–यजुः । एव । एतत् । [6]देवाः । वै । येन । हिरण्येन । सोमम् । अक्रीणन् । तत् । अभीषहेत्यभि–सहा । पुनः । एति । अददत । कः । हि । तेजसा । विक्रेष्यत इति वि–क्रेष्यते । इति । येन । हिरण्येन ॥ ६८ ॥ सोमम् । क्रीणीयात् । तत् । अभीषहेत्यभि–सहा । पुनः । एति । ददीत । तेजः । एव । आत्मन् । धत्ते ।

---

सर्वान्ते हिरण्यादानमन्त्रं दृष्ट्वा तु अजया क्रयात्प्रागेव हिरण्येन क्रीयते तदानीमेव तदानीयते इति प्रतिभाति ॥

[6]देवा वा इत्यादि ॥ अभीषहा अभिभवेन प्रसह्य तद्धिरण्यमाददत आर्जितवन्तः । सहतेः क्विपि 'नहिवृति' इत्यादिनोपसर्गस्य दीर्घत्वम् । को हीत्यादि । को नाम तेजसा तेजो विक्रेष्यते विक्रीतं कुर्यादिति मन्यमानास्तदाददत । 'परिव्यवेभ्यः क्रियः' इत्यात्मनेपदम्, 'हि च' इति निघाताभावः । तस्मात् येनेत्यादिविधिः । आत्मन्येव तेजो धत्ते । पूर्ववत् हेर्लोपः, नलोपप्रतिषेधश्च ॥

तेज॑ ए॒वात्मन्ध॑त्ते॒ऽस्मे ज्योति॑स्सो-
मविक्र॒यिणि॒ तम॒ इत्या॑ह॒ ज्योति॑रे॒व
यज॑माने दधाति॒ तम॑सा सोमविक्र॒-
यिणं॑मर्पयति॒ यद॑नु॒पग्रथ्य ह॒न्याद्द॒-
न्द॒शूका॒स्ता॑ꣳ समा॑ꣳ स॒र्पास्स्यु॑रि॒द-

[7]अ॒स्मे इति॑ । ज्योति॑ः । सो॒म॒वि॒क्र॒यि॒णीति॑ सोम–वि॒क्र॒यिणि॑ । तम॑ः । इति॑ । आ॒ह॒ । ज्योति॑ः । ए॒व । यज॑माने । द॒धा॒ति॒ । तम॑सा । सो॒म॒वि॒क्र॒यि॒णमि॒ति॑ सोम–वि॒क्र॒यिणं॑म् । अ॒र्प॒य॒ति॒ । [8]यत् । अ॒नु॒प॒ग्र॒थ्येत्यनु॑प–ग्र॒थ्य॒ । ह॒न्यात् । द॒न्द॒शूका॑ः । ताम् । समा॑म् । स॒र्पाः । स्यु॒ः । इ॒दम् । अ॒हम् । स॒र्पा-

[7]अस्मे इत्यादि ॥ शुक्लामूर्णास्तुकां यजमानाय प्रयच्छन् ‘अस्मे ज्योतिः’* इति यदाह तेन यजमाने ज्योतिर्दधाति । कृष्णामूर्णास्तुकां सोमविक्रयिणे प्रयच्छन् ‘सोमविक्रयिणि तमः’* इति यदाह तेन तमसा सोमविक्रयिणमर्पयति तमसा अप्रकाशेन प्राप्तं करोति । ‘गतिबुद्धि’ इत्यादिना कर्मत्वं व्यत्ययेन न प्रवर्तते । यद्वा—अर्पयति आर्तिं गमयति । अर्तेर्णौ पुगागमः ॥

[8]यदित्यादि ॥ यदि कृष्णोर्णुकामनुपग्रथ्य अबद्ध्वा तया यदि सोमविक्रयिणं हन्यात् तां समां तं वत्सरं प्रजा दन्दशूका दंशनशीलाः सर्पाः स्युः । दंशेर्यङ्लुगन्तात् ‘यजजपदशाम्’ इत्युकञ्प्र-

*सं १-२-७०—7

महꣳ सर्पाणां दन्दशूकानां ग्रीवा उपं ग्रन्थामीत्याहादंन्दशूकास्ताꣳ समाꣳ सर्पा भंवन्ति तमंसा सोम-विक्रयिणं विध्यति स्वानं ॥ ६१ ॥

भ्राजेत्यांहैते वा अमुष्मिन्लोके सो-मंमरक्षन्तेभ्योधि सोममाऽहंरन् यदे-

णाम् । दन्दशूकानाम् । ग्रीवाः । उपेति । ग्रथ्ना-मि । इति । आह । अदंन्दशूकाः । ताम् । समाम् । सर्पाः । भवन्ति । तमंसा । सोमविक्रयिणमिति सोम-विक्रयिणंम् । विध्यति । [9]स्वानं ॥ ६१ ॥

भ्राजं । इति । आह । एते । वै । अमुष्मिन्न् । लोके । सोमंम् । अरक्षन्न् । तेभ्यः । अधीति । सोमंम् । एति । अहरन्न् । यत् । एतेभ्यः । सोम-क्रयणानिति सोम-क्रयणान् । न । अनुदिशेदि-

---

त्ययः । तस्मात् इदमहमित्यादिमन्त्रविधिः । अहं सर्पाणां दन्दशूकानां प्रजादंशनशीलानां ग्रीवाः धमनीः इदमुपग्रथ्नामीत्य-नेन कृष्णोर्णकया उपग्रथनेन उपसंगृह्य बध्नामि यथा ते दष्टुं न शक्नुवन्ति इत्येवं वदता यदुपग्रथ्नाति तेन ते अदन्दशूका भवन्ति; सोमविक्रयिणमेव तमसा मूर्छनालक्षणेन विध्यति पीडयति॥

[9]स्वानेत्यादि ॥ स्वानादयोमुष्मिन् लोके सोमस्य रक्षितारः। तस्मात्तेभ्योधिसोममाहरन् आहरन्ति तदनुज्ञानादेव यजमानाः सोम-

तेभ्यस्सोमक्रयणान्नानुदिशेदक्रीतो-
स्य सोमस्स्यान्नास्यैतेऽमुष्मिन्लोके
सोमꣳ रक्षेयुर्यदेतेभ्यस्सोमक्रयणा-
ननुदिशति क्रीतोस्य सोमो भव-
त्येतेऽस्यामुष्मिन्लोके सोमꣳ रक्ष-
न्ति ॥ ७० ॥

त्यनु-दिशेत् । अक्रीतः । अस्य । सोमः । स्यात् । न । अस्य । एते । अमुष्मिन्न् । लोके । सोमम् । रक्षेयुः । यत् । एतेभ्यः । सोमक्रयणानिति सोम-क्रयणान् । अनुदिशतीत्यनु-दिशति । क्रीतः । अस्य । सोमः । भवति । एते । अस्य । अमु-ष्मिन्न् । लोके । सोमम् । रक्षन्ति ॥ ७० ॥

सशुक्रमेव रुन्ध इति येन हिरण्येन स्वान्
चतुश्चत्वारिꣳशच्च ॥ १० ॥

---

मात्मसात्कुर्वन्ति । एवं हि कर्तुं युज्यते । तस्मात्स्वानेत्यादिना यदेतेभ्य आकाशः तेभ्यस्सोमक्रयणान् गवादीन्नानुदिशेत् अनुक्रमेण न निर्दिशेत् । यद्वा—क्रयानन्तरमेव नानुदिशेत् । अस्य यजमानस्य अ-क्रीत एव सोमस्स्यात् रक्षकविसंवादात् । न चास्य सोममेतेऽमुष्मिन् लोके रक्षेयुः । अमुष्मिन् लोके सोमसंबन्धोस्य न स्यात् । तस्मात् यदेतेभ्य इत्यादि । गतम् ॥

इति षष्ठे प्रथमे दशमोनुवाकः.

वारुणो वै क्रीतस्सोम उपनद्धो मि-
त्रो न एहि सुमित्रधा इत्याह शा-
न्त्या इन्द्रस्योरुमा विश दक्षिणमि-
त्याह देवा वै यꣳ सोममक्रीणन्त-
मिन्द्रस्योरौ दक्षिण आऽसादयन्नेष
खलु वा एतर्हीन्द्रो यो यजते त-

[1]वारुणः । वै । क्रीतः । सोमः । उपनद्ध इत्युप-नद्धः । मित्रः । नः । एति । इहि । सुमित्रधा इति सुमित्र-धाः । इति । आह । शान्त्यै । [2]इन्द्रस्य । ऊरुम् । एति । विश । दक्षिणम् । इति । आह । देवाः । वै । यम् । सोमम् । अक्रीणन् । तम् । इन्द्रस्य । ऊरौ । दक्षिणे । एति । असादयन् । एषः । खलु । वै । एतर्हि । इन्द्रः । यः ।

---

[1]वारुण इत्यादि ॥ यदा सोमः क्रीतः उपनद्धो बद्धो भवति तदा एनं वरुणो गृह्णाति तस्मात्तदाऽसौ वारुणः, वरुणस्यायं वारुणः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । तस्मान्मित्रो भूत्वाऽस्मानेहि आगच्छेति वचनं तस्य शान्त्यै भवति ॥

[2]इन्द्रस्योरुमित्यादि ॥ देवास्सोमं क्रीत्वा इन्द्रस्य दक्षिणे ऊरावासादयन् । अस्मिंश्च काले अयमिन्द्रः यो यजते । तस्मात्

स्माद्देवमाहोदायुषा स्वायुषेत्याह दे-
वता एवान्वारभ्योत् ॥ ७१ ॥ ति-
ष्ठत्युर्वन्तरिक्षमन्विहीत्याहान्तरिक्ष-
देवत्यो[2] ह्येतर्हि सोमोऽदित्यास्सदो-

यजते । तस्मात् । एवम् । आह । [3]उदिति । आ-
युषा । स्वायुषेति सु-आयुषा । इति । आह । दे-
वताः । एव । अन्वारभ्येत्यनु-आरभ्य । उदिति ।
॥ ७१ ॥ तिष्ठति । [4]उरु । अन्तरिक्षम् । अन्वि-
ति । इहि । इति । आह । अन्तरिक्षदेवत्य इत्य-
न्तरिक्ष-देवत्यः । हि । एतर्हि । सोमः । [5]अदि-

---

'इन्द्रस्योरुमाविश'* इति मन्त्रमाह । 'इदमोर्हिल्' 'एतेतौ रथोः' इत्येतादेशः ॥

[3]उदायुषेति ॥ यस्मात् 'अमृताननु'† इत्यस्मिन् मन्त्रे उच्यते तस्माद्देवता अन्वारभ्यावष्टभ्योत्तिष्ठति ॥

[4]उर्वन्तरिक्षमिति ॥ यदाऽन्तरिक्षेण सोमे इच्छति [मो गच्छति] अस्मिन् कालेऽयमन्तरिक्षदेवत्यः । तस्मादात्मीयानां देवानां अन्तरिक्षं विस्तीर्णमन्विहि अनुगच्छेति मन्त्राभिप्राय इत्यर्थः । 'देवतान्तात्तादर्थ्ये यत्', 'तित्स्वरितम्' इति स्वरितत्वम्, 'उदात्तस्वरितयोर्यणः' इति हिशब्दात्पर एकारस्स्वर्यते ॥

[5]अदित्यास्सद इत्यादि ॥ कृष्णाजिनस्यादित्यास्सदनतुल्यत्वात् यजुर्यथा वदति तथैवैतादित्यर्थः ॥

---

*सं १-२-६.[9] †सं. १-२-८.[1]

स्यदित्यास्सद आ सीदेत्याह यथा-
यजुरेवैतद्वि वा एनमेतदर्धयति य-
द्वारुणꣳ सन्तं मैत्रं करोति वारुण्य-
र्चा सादयति स्वयैवैनं देवतया सम-
र्धयति वाससा पर्यानह्यति सर्वदेव-

त्याः । सदः । असि । अदित्याः । सदः । एति । सीद । इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । [6]वीति । वै । एनम् । एतत् । अर्धयति । यत् । वारुणम् । सन्तम् । मैत्रम् । करोति । वारुण्या । ऋचा । एति । सादयति । स्वया । एव । एनम् । देवतया । समिति । अर्धयति । वाससा । पर्यानह्यतीति परि–आनह्यति । सर्वदेवत्यमिति सर्व–देवत्यम् । वै । वासः । सर्वाभिः । एव ।

---

[6]वि वा एनमिति ॥ एनं सोमं विवर्धयति वृद्धिं करोति खल्वेतत् यद्वारुणं सन्तं मैत्रं करोति 'मित्रो न एहि'* इति मन्त्रेण मैत्रतामापादयति । वरुणपरित्यागेन व्यृद्धस्स्यात्, तस्माद्वारुण्यर्चा 'वरुणोसि धृतव्रतः'† इत्यनया आसादयति । स्वयैवैनं देवतया अप्रच्युतया एनं समर्धयति । वाससा पर्यानह्यति सर्वतो बध्नाति सोममिति विधिः । सर्वदेवत्यमित्यादि ।

---

*सं. १-२-७[8] †सं १-२-१०[10]

त्यं वै वासस्सर्वाभिरेव ॥ ७२ ॥
एनं देवताभिस्समर्धयत्यथो रक्षसा-
मपहत्यै वनेषु व्यन्तरिक्षं तताने-
त्याह वनेषु हि व्यन्तरिक्षं ततान
वाजमर्वथ्स्वित्याह वाजꣳ ह्यर्वथ्सु
पयो अघ्नियास्वित्याह पयो ह्यघ्नि-

॥ ७२ ॥ एनम् । देवताभिः । समिति । अर्धय-
ति । अथो इति । रक्षसाम् । अपहत्या इत्यप-
हत्यै । [7]वनेषु । वीति । अन्तरिक्षम् । ततान । इति ।
आह । वनेषु । हि । वीति । अन्तरिक्षम् । तता-
न । वाजम् । अर्वत्स्वित्यर्वत्-सु । इति । आह ।
वाजम् । हि । अर्वत्स्वित्यर्वत्-सु । पयः । अघ्नि-
यासु । इति । आह । पयः । हि । अघ्नियासु ।

---

गतम्* । अथो अपिच रक्षसामपहत्यै भवति अपहननाय संपद्यते, सोमस्य हन्तुमशक्यत्वात् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[7]वनेष्विति ॥ यस्माद्वनेषु वृक्षेषु वा अन्तरिक्षं वितताान वि-विधं स्थापितवान् तस्मादेवमाह । वाजं गतिं वेगं वा । यस्मा-दर्वत्सु अश्वेषु विततानित्येव । यागद्वारेण† सर्वोऽपीयं व्यवस्था।

---

*सं. ६-१-९.[12] †ग—णवा.

यासु हृत्सु क्रतुमित्याह हृत्सु हि
क्रतुं वरुणो विक्ष्वग्निमित्याह वरुणो
हि विक्ष्वग्निं दिवि सूर्यम् ॥ ७३ ॥
इत्याह दिवि हि सूर्यꣳ सोममद्रावि-
त्याह ग्रावाणो वा अद्रयस्तेषु वा
एष सोमं दधाति यो यजते तस्माद्-

हृत्स्विति हृत्-सु । क्रतुम् । इति । आह । हृत्स्विति
हृत्-सु । हि । क्रतुम् । वरुणः । विक्षु । अग्निम् । इति ।
आह । वरुणः । हि । विक्षु । अग्निम् । दिवि । सूर्यम् ॥ ७३
इति । आह । दिवि । हि । सूर्यम् । सोमम् । अद्रौ ।
इति । आह । ग्रावाणः । वै । अद्रयः । तेषु । वै ।
एषः । सोमम् । दधाति । यः । यजते । तस्मात् ।

---

पयः क्षीरादिकं अघ्नियासु गोषु विततान । हृत्सु क्रतुं ज्ञानं विततान । वरुणः विश्वस्य वारयिता । विश्वेन त्वावृतो देवो व्यवस्थाः सर्वा एताः कृतवानिति । विक्षु मनुष्येषु अग्निं वैश्वानरं विततान । दिवि अन्तरिक्षे सूर्यमदधात् दधाति धारयति यागद्वारेणैव । दिव्येव हि सूर्यं दधाति । सोममित्यादि । ग्रावाणो वा अद्रयस्तेषु वा एष सोमं दधाति स्थापयति यो यजते । तस्मात्सोममद्रावदधादित्याह । ग्राव्णां पर्वतत्वमध्यारोप्यैवमाहेति ॥

वमा॑होदु त्यं जा॒तवे॑दस॒मिति॒ सौ॒-
र्य॑र्चा कृ॒ष्णाजि॒नं प्र॒त्यान॑ह्यति॒ रक्ष॑-
सा॒मप॑हत्या॒ उस्रा॒वेतं॒ धू॒र्षाहा॒वि-
त्या॑ह यथाय॒जुरे॒वैतत्प्र च्य॑वस्व भु-
वस्पत॒ इत्या॑ह भू॒ताना॒ꣳ हि ॥७४॥

ए॒वम् । आ॒ह॒ । [8]उदिति॑ । उ॒ । त्यम् । जा॒तवे॑दस॒-
मिति॑ जा॒त-वे॒द॒सम् । इति॑ । सौ॒र्या । ऋ॒चा । कृ॒-
ष्णा॒जि॒नमिति॑ कृ॒ष्ण-अ॒जि॒नम् । प्र॒त्यान॑ह्य॒तीति॑
प्र॒ति-आन॑ह्यति । रक्ष॑साम् । अप॑हत्या॒ इत्यप॑-ह॒-
त्यै॒ । उ॒स्रौ । एति॑ । इ॒तम् । धू॒र्षा॒हा॒विति॑ धूः-
सा॒हौ । इति॑ । आ॒ह॒ । य॒था॒य॒जु॒रिति॑ यथा-य॒-
जुः । ए॒व । ए॒तत् । प्रेति॑ । च्य॒व॒स्व॒ । भु॒वः । प॒-
ते॒ । इति॑ । आ॒ह॒ । भू॒ताना॑म् । हि ॥ ७४ ॥ ए-

---

[8]उदु त्यमिति प्रत्यानह्यति प्रतिबद्धद्वारं सर्वतो बध्नातीति मन्त्रविधिः । उस्रावेतामित्यादियुग्यानयोजनमन्त्रेषु धूर्षाहावित्यादिगुणकथनम् । यथा यजुर्वदति तथा वेदितव्यम् । प्र च्यवस्वेति। भूतानामिति भुव इत्यस्यार्थमाचष्टे । यद्विश्वानि धामानि स्थानानि तेजांसि अभि प्रच्यवते आभिमुख्येन गन्तुमेष प्रारभते तस्मादेवमाह—मा त्वेति । यस्माद्विश्वावसुर्नाम गन्धर्वः परितस्सर्वतः आवृत्य सोमममुष्माल्लोकाद्धायत्र्या आह्रियमाणमपाहरत् तस्मात्परि

एष पतिर्विश्वान्यभि धामानीत्याह विश्वानि ह्ये३षोभि धामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादस्सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्तस्मादेवमाहापरिमोषाय यजमानस्य स्वस्त्य-

षः। पतिः। विश्वानि। अभीति। धामानि। इति। आह। विश्वानि। हि। एषः। अभीति। धामानि। प्रच्यवत इति प्र—च्यवते। मा। त्वा। परिपरीति परि—परी। विदत्। इति। आह। यत्। एव। अदः। सोमम्। आह्रियमाणमित्या—ह्रियमाणम्। गन्धर्वः। विश्वावसुरिति विश्व—वसुः। पर्यमुष्णादिति परि—अमुष्णात्। तस्मात्। एवम्। आह। अपरिमोषायेत्यपरि—मोषाय। यजमानस्य। स्वस्त्ययनीति स्वस्ति—अयनी। अ-

---

मा विदत् पथि पर्यवस्थाता चोरो विश्वावसुर्मा विदत् मा लब्ध, मा गन्धर्वो विश्वावसुः आददत् आत्मसात्कुर्यादिति च मन्त्र आह। अदश्शब्दात्परस्याः पञ्चम्याः 'सुपां सुलुक्' इति लुक्। यद्वा—पर्यमुष्णादिति यददः यदिदं कारणं तस्मादेवमाह। तस्मादपरिमोषाय एतद्वचनं भवति यजमानस्येति। एष हि

यन्यसीत्याह यजमानस्यैवैष यज्ञ-
स्यान्वारम्भोऽनवच्छित्त्यै वरुणो वा
एष यजमानमभ्यैति यत् ॥ ७५ ॥
क्रीतस्सोम उपनद्धो नमो मित्रस्य
वरुणस्य चक्षस इत्याह शान्त्या

सि । इति । आह । यजमानस्य । एव । एषः ।
यज्ञस्य । अन्वारम्भ इत्यनु—आरम्भः । अनव-
च्छित्त्या इत्यनव—छित्त्यै । [9]वरुणः । वै । एषः ।
यजमानम् । अभि । एति । एति । यत् ॥ ७५ ॥
क्रीतः । सोमः । उपनद्ध इत्युप—नद्धः । नमः ।
मित्रस्य । वरुणस्य । चक्षसे । इति । आह । शा-

---

यजमानस्य यज्ञस्यान्वारम्भः यजमानो यज्ञमन्वारभते स्पृशत्येतद्व-
चनेन । तस्मादेतद्वचनं अनवच्छित्त्यै अप्रच्युत्यै भवति यजमा-
नस्य । स्वस्ति अविघ्नेन अयनं प्राप्नोति यज्ञस्य स्वस्त्ययनं
तद्वान् सोमः तत्कारिका असीति ॥

[9]वरुणो वा इत्यादि ॥ योयं क्रीत उपनद्धश्च सोमः एषः
वरुणः यजमानमभ्येति अभिगमनि वित्तमुक्तम् तथा हरणात् वरुण
इवायं स्यात् । ततश्च यजमानो वरुणगृहीतो भवेत्, तस्मात् 'न-
मो मित्रस्य'* इति वचनं शान्त्यै भवति मित्रत्ववचनेन बोधिते ॥

---

*सं १-२-९[5]

आ सोमं वहन्त्यग्निना प्रति ति-
ष्ठते तौ संभवन्तौ यजमानमभि सं
भवतः पुरा खलु वावैष मेधाया-
त्मानमारभ्य चरति यो दीक्षितो
यदग्नीषोमीयं पशुमालभत आत्म-

न्यै । [10]एति । सोमम् । वहन्ति । अग्निना । प्रतीति । तिष्ठते । तौ । सम्भवन्ताविति सं-भवन्तौ । यजमानम् । अभि । समिति । भवतः । पुरा । खलु । वाव । एषः । मेधाय । आत्मानम् । आरभ्येत्या-रभ्य । चरति । यः । दीक्षितः । यत् । आग्नीषोमीयमित्यग्नी-सोमीयम् । पशुम् । आलभत इत्या-लभते । आत्मनिष्क्रयण इत्यात्म-नि-

---

[10]अग्नीषोमीयं पशुं विधास्यन् आह—आ सोममित्यादि ॥ सोमं चानयन्ति आवहन्ति, अग्निना च प्रतितिष्ठते अग्निना च संगच्छति यजमानः । 'समवप्रविभ्यस्स्थः' इत्यात्मनेपदम् । 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । ततश्च तौ सोमश्चाग्निश्च संभवन्तौ यजमानमभि यजमानमेव लक्षीकृत्य संभवतः यजमानमभिभवत एव सह तिष्ठतः । यद्वा—प्रमाणानतिरेकस्संभवः । यजमानमभितो व्याप्य तिष्ठतः । किञ्च—पुरा खलु दीक्षाकाल एव एष मेधाय यज्ञार्थं आत्मानमारभ्य

**निष्क्रयण एवास्य स तस्मात्तस्य**
**नाश्यं पुरुषनिष्क्रयण इव ह्यथो**
**खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृ-**

**ष्क्रयणः । एव । अस्य । सः । तस्मात् । तस्य । न । आश्यम् । पुरुषनिष्क्रयण इति पुरुष–निष्क्रयणः । इव । हि । [11]अथो इति । खलु । आहुः । अग्नीषोमाभ्यामित्यग्नी–सोमाभ्याम् । वै । इन्द्रः ।**

---

आलभ्य नियुज्य आत्मानं दत्वा चरति यो दीक्षितः स्रुक्स्थानीयः परार्थे वर्तते । तस्मादग्नीषोमीयं पशुमालभते तस्यात्मनिष्क्रयणे भवत्येव । आत्मा निष्क्रीयते येन यथोक्तलक्षणाच्चरितादिति करणे ल्युट् । अग्नीषोमौ देवते अस्येति 'द्यावापृथिवी' इत्यादिना छः । अन्यस्त्वाह—तौ संभवन्तौ यजमानमभिसंवभत इत्युक्तम् । तस्माद्यजमानमभिसंभवतः । पुरा खल्वित्यादि । पूर्वं खलु यजमानः मेधायात्मानमालभ्य वर्तते, तस्मादिदमेव कृतं भवति भवत इति ताभ्यामात्मा निष्क्रीयते अग्नीषोमीयपशुनेत्यादि । तस्मादेव कारणात् तस्य पशोस्संबन्धीडादिकमन्नाद्यं न भक्ष्यम् । कस्मादित्याह—पुरुषनिष्क्रयण इव हीति । यस्मादेव पुरुषनिष्क्रयण इव भवति । पुरुषो निष्क्रीयते येन स पुरुषसंमितो भवति तस्य भक्षणं पुरुषस्येव भक्षणं भवति । तस्मान्नाश्यम् । पूर्ववत्करणे ल्युट् ॥

[11]अथो इति ॥ अन्ये खलु पदार्थविदोन्यदाहुः । अग्नीषो-

त्रमहन्निति यदग्नीषोमीयं पशुमाल-
भते वार्त्रघ्न एवास्य स तस्माद्वाश्यं
वारुण्यर्चा परि चरति स्वयैवैनं देव-
तया परि चरति ॥ ७६ ॥

वृत्रम् । अहन् । इति । यत् । अग्नीषोमीयमित्य-ग्नी—सोमीयम् । पशुम् । आलभत इत्या—लभते । वार्त्रघ्न इति वार्त्र—घ्नः । एव । अस्य । सः । तस्मात् । उ । आश्यम् । वारुण्या । ऋचा । परीति । चरति । स्वया । एव । एनम् । देवतया । परीति । चरति ॥ ७६ ॥

अन्वारभ्योत्सर्वाभिरेव सूयं भूतानां ह्येति
यदाहुस्सप्तविंशतिश्च ॥ ११ ॥

---

माभ्यामिन्द्रो वृत्रमहन् हतवान् । तस्मादग्नीषोमीयः पशुः वार्त्रघ्नः एवास्य यजमानस्य न तु पुरुषनिष्क्रयणः, तस्माद्वाश्यमेवेति । उशब्दोवधारणे । वृत्रस्य पापस्य हन्तुर्यजमानस्य संबन्धी वार्त्रघ्नः वृत्रहननार्थ एवेति यावत् । उपस्थानादिकमस्य करोति । अणन्तादपि 'यस्य' इति लोपे उदात्तनिवृत्तिस्वरेण 'उदात्तयणः' इति तृतीयाया उदात्तत्वम् । स्वयैव देवतया वरुणरूपयैनं परिचरति तस्या एवेदं परिचरणं भवतीति आत्मीयदेवताया एवेदं परिचरतीत्यर्थः । यद्वा—स्वया देवतया सहैनं परिचरति ॥

प्राचीनवꣳशं यावन्त ऋक्सामे वाग्वै देवेभ्यो देवा वै देवयजनं कद्रूश्च तद्धिरण्यꣳ षट्पदानि ब्रह्मवादिनो विचित्यो यत्कलया ते वारुणो वै क्रीतस्सोम एकादश ॥ ११ ॥

प्राचीनवꣳशꣳ स्वाहेत्याह येऽन्तश्शरा ह्येष सं तपसा च यत्कर्णगृहीतेति लोमतो वारुणष्षट्त्रिꣳशतिः ॥ ७६ ॥

षष्ठकाण्डे प्रथमप्रपाठकस्समाप्तः.

---

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये षष्ठकाण्डे प्रथमप्रश्ने एकादशोनुवाकः.

समाप्तश्च प्रथमः प्रश्नः.

यदुभौ विमुच्यातिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्याद्यदुभावविमुच्य यथाऽना-गतायातिथ्यं क्रियते तादृगेव तद्वि-मुक्तोन्योनड्वान्भवत्यविमुक्तोन्योथा-

[1]यत् । उभौ । विमुच्येति वि-मुच्य । आति-थ्यम् । गृह्णीयात् । यज्ञम् । वीति । छिन्द्यात् । यत् । उभौ । अविमुच्येत्यवि-मुच्य । यथा । अनागतायेत्यना-गताय । आतिथ्यम् । क्रियते । तादृक् । एव । तत् । [2]विमुक्त इति वि-मुक्तः । अन्यः । अनड्वान् । भवति । अविमुक्त इत्यवि-मुक्तः । अन्यः । अथ । आतिथ्यम् । गृह्णाति ।

---

[1]गतः क्रयः । आतिथ्यः प्रस्तूयते—यदुभावित्यादि ॥ यदु-भावनड्वाहौ विमुच्यातिथ्यं गृह्णीयात् आतिथ्यं हविर्निर्वपेत् । 'अतिथेर्ण्यः' इत्यातिथ्यः प्रारम्भोभिप्रेतः, ग्रहणस्योपलक्षणार्थ-त्वात् । यज्ञं विच्छिन्द्यात् पूर्वोत्तरयोः कर्मणोः परस्परापेक्षायाः प्रतिपादकाभावात् ऐदमर्थ्यस्य दुर्ज्ञानत्वात् मध्ये यज्ञविच्छित्ति-स्स्यात् । अथ यदुभावविमुच्यातिथ्यं गृह्णीयात्, तद्दूषयति—यथाऽ-नागतायातिथ्यं क्रियते तादृगेव तत्स्यात् । आतिथ्यं नामागताय क्रियते । उभयोरविमोके आगमनस्यापरिसमाप्तत्वेन अनागतावस्था-तुल्यत्वात् आगमनसमाप्तिनिमित्तमिदानीमनर्थकं स्यात् ॥

[2]कथं तर्हि कर्तव्यमित्याह—विमुक्त इत्यादिविधिः ॥ एको-

तिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्य-
न्वारंभते पत्नी हि पारीणह्यस्येशे
पत्नियैवाऽनुमतं निर्वपति यद्वै पत्नी

यज्ञस्य । सन्तत्या इति सं-तत्यै । [3]पत्नी । अन्वा-
रंभत इत्यनु-आरंभते । पत्नी । हि । पारीणह्य-
स्येति पारि-नह्यस्य । ईशे । पत्निया । एव । अ-
नुमतमित्यनु-मतम् । निरिति । वपति । यत् ।

---

नड्वान्विमुक्तः कार्यः अनागतत्वनिवृत्तये, एकमविमुक्तं कुर्यात् अवि-च्छेदार्थं कर्मणोऽपेक्षां द्योतयितुम् । अथास्मिन् काले आतिथ्यं गृह्णाति एवं यज्ञस्य सन्तत्यै अविच्छेदाय भवति आगतायैव चातिथ्यं कृतं भवति । 'एकान्याभ्यां समर्थाभ्याम्' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । विमुक्ताविमुक्तसन्ततिशब्दानां पूर्वपदप्रकृति-स्वरत्वमुक्तम् ॥

[3]पत्न्यन्वारभते स्पृशतीति विधिः ॥ यस्मात्पत्नी पारीणह्यस्य धनस्य ईशे ईष्टे । 'लोपस्त आत्मनेपदेषु' इति तलोपः, 'हि च' इति निघाताभावः । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम् । परितस्सर्वतो नह्यते बध्यते इति परिणत् गृहमुच्यते । 'नहिवृति' इति परेर्दीर्घत्वम् । शकटनामिति केचित् । तत्र भवं व्रीह्यादि धनं पारीणह्यम्, छान्दसो ञ्यः । यद्वा—'परिमु-खादिभ्यश्च' इति व्यत्ययेनानव्ययीभावादपि ञ्यः । एवं पत्न्या स्पृष्टे तयाऽनुमतमेव निर्वपति । पूर्ववद्गतेः प्रकृतिस्वरत्वम् । यस्मा-

यज्ञस्य करोति मिथुनं तदथो प-
त्निया एव ॥ १ ॥ एष यज्ञस्यान्वा-
रम्भोऽनवच्छित्त्यै यावद्भिर्वै राजाऽ-
नुचरैरागच्छति सर्वेभ्यो वै तेभ्य

वै । पत्नी । यज्ञस्य । करोति । मिथुनम् । तत् । अथो इति । पत्नियाः । एव ॥ १ ॥ एषः । यज्ञस्य । अन्वारम्भ इत्यनु–आरम्भः । अनवच्छित्या इत्यनव–छित्त्यै । [4]यावद्भिरिति यावत्–भिः । वै । राजा । अनुचरैरित्यनु–चरैः । आगच्छतीत्या–गच्छति । सर्वेभ्यः । वै । तेभ्यः । आतिथ्यम् ।

---

त्पत्न्यपि यज्ञस्य करोति मिथुनं भवति यजमानकर्मणा सह । द्वितीयो गुणः । अथ तृतीयो गुण उच्यते—अथो इति । अपिच पत्न्या अपि यज्ञस्यैव एषोन्वारम्भः यजमानमारभमाणमिवान्वारभते । एवं हि क्रियमाणे यज्ञस्यानवच्छित्त्यै अविरतये भवति । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । थाथादिस्वरेणान्वारम्भशब्दोन्तोदात्तः ॥

[4]यावद्भिरित्यादि ॥ यत्परिमाणैर्भृत्यैस्सह राजा आगच्छति तेभ्यस्सर्वेभ्योप्यातिथ्यं कार्यम्, न पुनः केभ्यश्चिदेव । छन्दांसि च गायत्र्यादीनि सोमस्य राज्ञोनुचराणि, अतस्तेभ्योप्यातिथ्यं कर्तव्यम् । यद्येवं कस्मात्तर्हि 'अग्नेरातिथ्यमसि'* इत्यादिभिर्मन्त्रैः

---

*सं. १-२-१०.

आतिथ्यं क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्यातिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्या-

क्रियते । छन्दाꣳसि । खलु । वै । सोमस्य । राज्ञः । अनुचराणीत्यनु—चराणि । अग्नेः । आतिथ्यम् । असि । विष्णवे । त्वा । इति । आह । गायत्रियै । एव । एतेन । करोति । सोमस्य । आतिथ्यम् । असि । विष्णवे । त्वा । इति । आह । त्रिष्टुभे । एव । एतेन । करोति । अतिथेः । आतिथ्यम् । असि । विष्णवे । त्वा । इति । आह ।

---

अग्न्यादिभ्य एवानुचरेभ्यः क्रियते, न तु गायत्र्यादिभ्य इत्यत आह—गायत्र्या अपि क्रियत एवातिथ्यं, तमग्निर्देवता यागात्मा सोमात्मा वा परमात्मैव वा । स हि विश्वात्मा सोमलतात्मना इदानीं गृहमागच्छति, तस्मै सानुचरायातिथ्यं क्रियते । तत्र 'अग्नेरातिथ्यमसि'* इति यस्मादग्नये क्रियते एतेनैव गायत्र्या अपि क्रियत एवातिथ्यम्; 'तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दः'† इति

---

*सं. १-२-१०।  †सं. ७-१-१.

ह जगत्यै ॥ २ ॥ एवैतेनं करोत्य-
ग्नये त्वा रायस्पोषदावन्ने विष्णवे
त्वेत्याहानुष्टुभं एवैतेनं करोति श्येना-
यं त्वा सोमभृते विष्णवे त्वेत्याह
गायत्रिया एवैतेनं करोति पञ्च कृ-
त्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो

जगत्यै ॥ २ ॥ एव । एतेनं । करोति । अग्नयें ।
त्वा । रायस्पोषदावन्न इति रायस्पोष-दावन्नें ।
विष्णवे । त्वा । इति । आह । अनुष्टुभ इत्यनु-
स्तुभें । एव । एतेनं । करोति । श्येनायं । त्वा ।
सोमभृत इति सोम-भृतें । विष्णवे । त्वा । इति ।
आह । गायत्रियै । एव । एतेनं । करोति । [5]पञ्चं ।
कृत्वः । गृह्णाति । पञ्चाक्षरेति पञ्च-अक्षरा । पङ्क्तिः ।
पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे ।

---

द्वयोरपि प्रजापतेर्मुखजातत्वात्; अग्निग्रहणस्य च मुखजातत्वोप-
लक्षणत्वात् । एवं त्रिष्टुबादीनां सोमादिभिस्संबन्धविशेषोन्वेष्टव्यः,
इदमेव वा वचनं प्रमाणमिति श्रद्धातव्यम् ॥

[5]पञ्च कृत्व इति विधिः ॥ पञ्चाक्षरेत्यादि । व्याख्यातम् *॥

---

*सं. ६-१-९

यज्ञो यज्ञमेवाव रुन्धे ब्रह्मवादिनो वदन्ति कस्मांथ्सत्याद्गायत्रिया उभयतं आतिथ्यस्यं क्रियत इति यदेवादस्सोममा ॥ ३ ॥ अहंरत्तस्माद्गायत्रिया उभयतं आतिथ्यस्यं क्रियते पुरस्तांच्चोपरिंष्टाच्च शिरो वा

[6]ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। कस्मात्। सत्यात्। गायत्रियै। उभयतः। आतिथ्यस्यं। क्रियते। इति। यत्। एव। अदः। सोमम्। एति ॥ ३ ॥ अहः। तत्। तस्मात्। गायत्रियै। उभयतः। आतिथ्यस्यं। क्रियते। पुरस्तात्। च। उपरिष्टात्। च। [7]शिरः। वै। एतत्। यज्ञस्यं।

---

[6]ब्रह्मवादिन इत्यादि ॥ कस्मात्कारणात् गायत्र्या उभयतः क्रियते। किं कारणान्तरेणेत्येवशब्दार्थः। क्रियते इति किं विवक्षितं ब्रह्मवादिनामित्याह—पुरस्ताच्चोपरिष्टाच्चेति। पूर्वस्मिन् काले ऊर्ध्वकाले च। 'अस्ताति च' इति पूर्वशब्दस्य पुरादेशः 'उपर्युपरिष्टात्' इत्यूर्ध्वशब्दस्य निपात्यते ॥

[7]अथ नवकपालत्वं पुरोडाशस्य विधातुमाह—शिरो वा इति ॥ शिर एवैतत् प्रधानमातिथ्यं यज्ञस्य, सोमार्थत्वात्। तस्मात् नवकपाल इत्यादिविधिः। नवसु कपालेषु संस्कृतः इत्युत्पन्न-

एतद्यज्ञस्य यदातिथ्यं नवकपालः पु-
रोडाशो भवति तस्मान्नवधा शिरो
विष्यूतं नवकपालः पुरोडाशो भ-
वति ते त्रयस्त्रिकपालास्त्रिवृता स्तो-

यत् । आतिथ्यम् । नवकपाल इति नव-कपालः ।
पुरोडाशः । भवति । तस्मात् । नवधेति नव-धा ।
शिरः । विष्यूतमिति वि-स्यूतम् । [8]नवकपाल
इति नव-कपालः । पुरोडाशः । भवति । ते ।
त्रयः । त्रिकपाला इति त्रि-कपालाः । त्रिवृतेति त्रि-
वृता । स्तोमेन । संमिता इति सं-मिताः । ते-

---

स्याणः 'द्विगोर्लुक्' इति लुक्, 'इगन्तकाल' इति पूर्वपद-प्रकृतिस्वरत्वम् । पुरो दाशन्ते एनमिति पुरोडाशः, पृषोदरादिः, 'छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्, 'पुरोऽव्ययम्' इति गतित्वात्थाथादिस्वरः प्राप्तो बाध्यते । तस्मादिति । शिरोव्रतस्यातिथ्यस्य नवकपालत्वात् नवधा विष्यूतं परस्परस्यूतं नवकपालखण्डं शिरः प्रजानाम् । सिवेर्निष्ठायां 'च्छ्वोश्शूठ्' इत्यूठ्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

[8]द्वितीयं विधत्ते गुणान्तरं दर्शयितुं—नवकपाल इति ॥ ते इत्याधारभूतानि कपालानि बुद्ध्या निष्कृष्य निर्दिश्यन्ते, वक्ष्यमाणस्वरूपापेक्षया पुंलिङ्गता । तानि नव कपालानि त्रयस्त्रिकपालाः कपालत्रयवन्तः संघातविशेषा इत्यर्थः । यथा मध्ये त्रीणि

मेन संमितास्तेजस्त्रिवृत्तेज एव य-
ज्ञस्य शीर्षन्दधाति नवकपालः

जः । त्रिवृदिति त्रि-वृत् । तेजः । एव । यज्ञस्य ।
शीर्षन् । दधाति । [9]नवकपाल इति नव-कपा-

---

प्राचीनानि, त्रीणि दक्षिणतः, त्रीण्युत्तरतः । त्रीणि कपालानि येषां सन्तीति त्रिकपालाः, मत्वर्थीयोऽकारः, अर्श आदित्वादच्, बहुव्रीहौ वा स्वरव्यत्ययः, त्रिचक्रादिर्वा द्रष्टव्यः । द्विगावेव वा स्वरलिङ्गव्यत्ययः । यस्मादेवं तस्मात्ते त्रिवृता स्तोमेन सम्मिताः तुल्याः । त्रिवृदिति । त्रिभिस्तृचैः नव स्तोत्रिया भवन्ति । तस्मात्तत्सामान्यात् त्रिवृता तुल्यत्वं नवानां कपालानाम् । समुदायस्य तत्तुल्यत्वात्समुदायिनामपि तत्तुल्यत्वमुपचर्यते । एतदुक्तं भवति—कपालत्रयावृत्तनवकपालसंबन्धात् तृचत्रयात्मकेन त्रिवृता तुल्यो नवकपालः पुरोडाश इति । त्रिचक्रादित्वात् त्रिवृत उत्तरपदान्तोदात्तत्वम् । संमिते गतेः पूर्वपदप्रकृतिस्वरत्वं पूर्ववत् । तेजस्त्रिवृदिति । तेजसा सहोत्पन्नत्वात् यथा—'स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत '* इति । तेजस्साधनत्वाद्वा । तस्मात् यज्ञस्य शीर्षन् शिरस्स्थानीये आतिथ्ये तेजो दधाति स्थापयति । 'शीर्षञ्छन्दसि' इति शीर्षादेशः, 'सुपां सुलुक्' इति ङेर्लुक्, 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः ॥

[9]अथ तृतीयं विधत्ते गुणान्तरप्रदर्शनार्थं—नवकपाल इति ॥ पूर्वेणैवावगतप्रायमिदम्, प्राणेन साम्यं प्रतिपाद्यते इति विशेषः ।

---

*सं. ७-१-१.

पुरोडाशो भवति ते त्रयस्त्रिकपाला-
स्त्रिवृता प्राणेन संमितास्त्रिवृद्वै ॥४॥
प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञ-
स्य शीर्षन्दधाति प्रजापतेर्वा ए-

लः । पुरोडाशः । भवति । ते । त्रयः । त्रिकपाला इति त्रि-कपालाः । त्रिवृतेति त्रि-वृता । प्राणेनेति प्र-अनेन । सम्मिता इति सं-मिताः । त्रिवृदिति त्रि-वृत् । वै ॥ ४ ॥ प्राण इति प्र-अनः । त्रिवृतमिति त्रि-वृतम् । एव । प्राणमिति प्र-अनम् । अभिपूर्वमित्यभि-पूर्वम् । यज्ञस्य । शीर्-षन् । दधाति । [10]प्रजापतेरिति प्रजा-पतेः । वै ।

त्रिवृता त्रिवृत्तुल्येन प्राणेन ते संमिताः; प्राणोपि हि त्रिवृता तुल्यो भवति, नवत्वयोगात्, 'नव वै पुरुषे प्राणाः'* इति नवाधिष्ठानत्वात् । तस्मात्त्रिवृतं नवाधिष्ठानं प्राणं यज्ञस्य प्रधानभूते अस्मिन्नातिथ्ये अभिपूर्वमनुक्रमेण दधाति स्थापयति । अत्रापि त्रिकत्रयात्मकत्वं प्राणस्य द्रष्टव्यम् । त्रयो दक्षिणतस्तिर्यक्स्वर्गं ते, त्रय उत्तरतास्तिर्यक्, त्रय उपर्यधोभावेनेति ॥

[10]प्रस्तरादिविशेषान्विधास्यन् आह—प्रजापतेर्वा इत्यादि ॥ पक्ष्माणि अक्षिरोमाणि । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वर-

*सं. ६-१-१.18

तानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुस्सं

एतानि । पक्ष्माणि । यत् । अश्ववाला इत्यश्व-वालाः । ऐक्षवी इति । तिरश्ची इति । यत् । आश्ववाल इत्याश्व-वालः । प्रस्तर इति प्र-स्तरः । भवति । ऐक्षवी इति । तिरश्ची इति । प्रजापतेरिति प्रजा-पतेः । एव । तत् । चक्षुः । सामिति । भर-

---

त्वम् । अश्ववालाः अश्वस्य पुच्छरोमाणीति केचित् । अन्य आहुः—ऐक्षवी स्या[वीव]त् समुदायप्रसिद्धेश्च । अश्वकर्णादिवत्संज्ञैषा ; तेन काशा उच्यन्ते न प्राजापत्यपक्ष्मतया स्तूयन्त इति । ऐक्षवी इक्षुलतिके तिरश्ची तिरश्चीने प्रजापतेरक्ष्णोश्चर्मपुटिके तिर्यक्क्रुयोगादुच्यते । वक्ष्यति च 'प्रजापतेरेव तच्चक्षुस्सं भरति' इति । 'चौ' इति पूर्वपदान्तोदात्तत्वम् । उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । प्रजापतेर्वा एते अक्ष्णोश्चर्मपुटिके तिरश्च्यौ यदैक्षव्यौ लतिके इत्यर्थः । यदिति । अश्ववालविकार आश्ववालः । 'अनुदात्तादेश्च' इत्यञ् । प्रस्तीर्यते इति प्रस्तरः, 'ऋदोरप्', थाथादिनोत्तरपदान्तोदात्तत्वम् । अत्र तु तिरश्ची इति विधृती उच्येते तिर्यक्क्रुयोगादेव । यस्मादेवं तस्मादाश्ववालः प्रस्तरः कार्यः, ऐक्षवी विधृती इति विधिरनुमीयते ॥

भरति देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन्ते देवाः कार्ष्मर्यमपश्यन्कर्मण्यो वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान्परिधीन् ॥ ५ ॥ अकुर्वत तैर्वै ते रक्षाꣳस्य-

ति । [11]देवाः । वै । याः । आहुतीरित्या–हुतीः । अजुहवुः । ताः । असुराः । निष्कावम् । आदन्न् । ते । देवाः । कार्ष्मर्यम् । अपश्यन्न् । कर्मण्यः । वै । कर्म । एनेन । कुर्वीत । इति । ते । कार्ष्मर्यमयानिति कार्ष्मर्य–मयान् । परिधीनिति परि–धीन् ॥ ५ ॥ अकुर्वत । तैः । वै । ते । रक्षाꣳसि ।

---

[11]देवा वा इत्यादि ॥ निष्कावं निष्कृष्याग्न्यास्यादाच्छिद्याच्छिद्य आदन् अभक्षयन् आहुतिम् । कवति कौति कूव[कुना]-तीनामन्यतमस्तस्मादाभीक्ष्ण्ये णमुल्, द्विर्वचनं तु न क्रियते, अनित्यत्वात् । गतिकर्मा चायमत्र द्रष्टव्यः । यद्वा—निष्कावं अशब्दयित्वा निश्शब्दं, निरिति प्रतिषेधमाचष्टे । ते देवाः कार्ष्मर्यं श्रीपर्णीवृक्षं अपश्यन् शक्तिविशेषं तत्राधातुं विशिष्टसंकल्पात्मिकां दृष्टिं तत्र कृतवन्तः । कथमित्याह—कर्मण्य इत्यादि । एष कर्मण्यः कर्मणि साधुः अभिमतकर्मसाधनयोग्यः । तस्मादेनेन सर्वमभिमतं कर्म कुर्वीत; तत्कारणं वयमित्थं प्रतिजानीमहे इति ।

पाँघ्नत् यत्कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै सꣳ स्पर्शयति रक्षसामनन्ववचाराय न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्त्यूर्ध्वे समिधावा-

अपेति । अघ्नत । यत् । कार्ष्मर्यमया इति कार्ष्मर्य—मयाः । परिधय इति परि—धयः । भवन्ति । रक्षसाम् । अपहत्या इत्यप—हत्यै । [12]समिति । स्पर्शयति । रक्षसाम् । अनन्ववचारायेत्यननु—अवचाराय । न । पुरस्तात् । परीति । दधाति । आदित्यः । हि । एव । उद्यन्नित्युत्—यन् । पुरस्तात् । रक्षाꣳसि । अपहन्तीत्यप—हन्ति । ऊर्ध्वे इति । समिधाविति सं—इधौ । एति । दधाति ।

---

एनादेशोनुदात्तः । ततस्ते देवाः कार्ष्मर्यमयान् कार्ष्मर्यविकारान् परिधीनकुर्वत । 'नित्यं वृद्धशरादिभ्यः' इति मयट् । परितो धीयन्ते इति परिधयः, 'उपसर्गे घोः किः' कृदुत्तरपदप्रकृतिस्वरत्वम् । तैरित्यादि । गतम् ॥

[12]संस्पर्शयतीत्यादि ॥ किमर्थमिदम्, ननु प्रकृतावुक्तमत्रापि भविष्यति? तर्हि साधारणविधानार्थमिदं, तेन यद्यत्प्राप्तं तदर्थं भविष्यति । तेन उपसत्सु विस्रंभयति संस्पर्शयति परिधीनिति

दंधात्युपरिष्टादेव रक्षाꣳस्यपं हन्ति यजुंषाऽन्यां तूष्णीमन्यां मिथुनत्वाय द्वे आदंधाति द्विपाद्यजंमानः प्रतिष्ठित्यै ब्रह्मवादिनों वदन्ति ॥ ६ ॥

उपरिष्टात् । एव । रक्षाꣳसि । अपेति । हन्ति यजुंषा । अन्याम् । तूष्णीम् । अन्याम् । मिथुनत्वायेति मिथुन-त्वायं । द्वे इति । एति । दधाति द्विपादिति द्वि-पात् । यजंमानः । प्रतिंष्ठित्या इति प्रति-स्थित्यै । [13]ब्रह्मवादिन इति ब्रह्म-वादिनः ।

विधिः । अनन्ववचाराय अननुप्रवेशाय । आदित्य एव पूर्वस्यां दिशि परिधिकार्यकारी । ऊर्ध्वे समिधौ आघाराख्ये । उपरिष्टादूर्ध्वायां दिशि स्थितानि रक्षांसि अपहन्ति । यजुषेति । 'वीतिहोत्रं त्वा'* इति गायत्र्यपि अनवसानत्वाद्यजुरुच्यते । दक्षिणां यजुषा उत्तरां तूष्णीम् । मिथुनत्वायेति । द्वैरूप्येण हि मिथुनत्वं भवति । द्वे इति द्वित्वविधिः । द्विपादिति । 'संख्या सुपूर्वस्य' इति लोपस्समासान्तः, 'द्वित्रिभ्यां पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । प्रतिष्ठित्यै भवति यजमानस्य यस्माद्द्विपाद्यजमानः तस्माद्द्वे आदधाति; तस्य प्रतिष्ठित्यै अप्रच्युतस्वरूपत्वाय तद्भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[13]ब्रह्मवादिन इत्यादि ॥ द्वावेतौ देवौ अग्निश्च सोमश्च; तत्कथा केन हेतुना सोमायैवातिथ्यं क्रियते नाग्नय इति प्रश्न-

* सं. १-१-११.[12]

अग्निश्च वा एतौ सोमश्च कथा सोमायातिथ्यं क्रियते नाग्नय इति यदग्नावग्निं मंथित्वा प्रहरंति तेनैवाग्नयं आतिथ्यं क्रियतेऽथो खल्वाहुरग्निस्सर्वा देवता इति यद्धविरासाद्याग्निं

वदन्ति ॥ ६ ॥ अग्निः । च । वै । एतौ । सोमः । च । कथा । सोमाय । आतिथ्यम् । क्रियते । न । अग्नये । इति । यत् । अग्नौ । अग्निम् । मथित्वा । प्रहरतीति प्र–हरंति । तेन । एव । अग्नये । आतिथ्यम् । क्रियते । अथो इति । खलु । आहुः । अग्निः । सर्वाः । देवताः । इति । यत् । हविः ।

---

माहुर्ब्रह्मवादिनः । 'था हेतौ च' इति थाप्रत्ययः । उत्तरम्—यदग्नावित्यादि । योयं मथितस्याग्नेः अग्नौ प्रहारः तेनैवाग्निः कृतातिथ्यो भवति, न पृथक्कर्तव्यमिति । अथो इति । अथ खल्वन्य आहुः—अग्निस्सर्वा देवताः यद्धविरातिथ्यमासाद्याग्निं मन्थति, तत्तस्मै आतिथ्याय हव्याय सर्वा देवता जनयति प्रादुर्भावयति, तस्मादासन्नमातिथ्यं हविः सर्वदेवतार्थं सदग्न्यर्थमपि भविष्यतीति । यदुक्तं 'यदग्नावग्निं मथित्वा प्र हरति तेनैवाग्नय आतिथ्यं क्रियते' इति तेनैतत्समीचीनमुत्तरमिति तेषामभिप्रायः । यद्वा—मथित्वा प्रहरणेनैवाग्निः कृतातिथ्य इत्युक्तम्, इदानीं तदेव मथनं स्तूयते—हविरासादनानन्तरं यदिदं मथितं क्रियते

मन्थति हव्यायैवासन्नाय सर्वा देव-
तां जनयति ॥ ७ ॥

देवासुराः संयत्ता आसन्ते देवा मि-
थो विप्रिया आसन्तेऽन्योन्यस्मै

आसाद्येत्या-साद्य । अग्निम् । मन्थति । हव्याय । एव । आसन्नायेत्या-सन्नाय । सर्वाः । देवताः । जनयति ॥ ७ ॥

पत्निया एव जगत्या आ त्रिवृद्वै परि-
धीन् वदन्त्येकचत्वारिंशच्च ॥ १ ॥

[1]देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन् । ते । देवाः । मिथः । विप्रिया इति वि-प्रियाः । आसन् । ते । अन्यः । अ-

---

तेनैतद्धविरर्थं सर्वा देवता जनयति, तस्मादग्निं मन्थेदिति विधिरनुमीयते । हवमर्हतीति 'छन्दसि च' इति यः ॥

इति षष्ठे द्वितीये प्रथमोनुवाकः.

---

[1]अथ तानूनप्त्रं विधातुमाह—देवासुरा इत्यादि ॥ मिथः परस्परं विप्रियाः विगतप्रिया देवा आसन् । ते ज्यैष्ठ्यार्थमन्योन्यस्मै अतिष्ठमानाः अभिप्रायमप्रकाशयन्तः पञ्चधा व्यक्रामन्

ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यंक्रा-
मन्नग्निर्वसुंभिस्सोमो रुद्रैरिन्द्रो मरु-
द्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवै-
स्तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृ-
व्येभ्यो रध्यामो यन्मिथो विप्रिया-

न्यस्मै । ज्यैष्ठ्याय । अतिष्ठमानाः । पञ्चधेति पञ्च-धा । वीति । अक्रामन् । अग्निः । वसुभिरिति वसु-भिः । सोमः । रुद्रैः । इन्द्रः । मरुद्भिरिति मरुत्-भिः । वरुणः । आदित्यैः । बृहस्पतिः । विश्वैः । देवैः । [2]ते । अमन्यन्त । असुरेभ्यः । वै । इदम् । भ्रातृव्येभ्यः । रध्यामः । यत् । मिथः ।

पञ्चव्यूहविशिष्टा बभूवुः । प्रकाशने तिष्ठतेरात्मनेपदम् । 'श्लाघ-ह्नुङ्स्था' इति संप्रदानत्वादन्यस्मा इति चतुर्थी, 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलम्, यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य' इति 'स्वरितो वाऽनुदात्ते पदादौ' इत्येकारौकारयोस्स्वरितत्वम् । अग्निर्वसुभिरित्यादि । गतम्* । बृहस्पतिशब्दो वनस्पत्यादिः, पारस्करादित्वात्सुट् ॥

[2]ते अमन्यन्त देवाः यद्यस्माद्वयं मिथो विप्रियास्स्मः इदमनेन कारणेन असुरेभ्यो भ्रातृव्येभ्यः शत्रुभावमाचरद्भ्यो रध्यामः राध्यामः तेषामेवाभिमतसिद्धये संपद्यामहे तेषामियमृद्धिः यन्मिथो विप्रियास्स्म इति । रध हिंसाराध्योः, दैवादिकः । 'व्यन् सपत्ने'

*सं. २-२-११.

स्स्मो या नं इमाः प्रियास्तनुवस्ता-
स्समवंद्यामहै ताभ्यस्स निर् ऋं-
च्छाद्यः ॥८॥ नः प्रथमोऽन्योन्यस्मै

विप्रिया इति वि–प्रियाः । स्मः । याः । नः । इमाः । प्रियाः । तनुवंः । ताः । समवंद्यामहा इति सं–अवंद्यामहै । ताभ्यंः । सः । निरिति । ऋ-च्छात् । यः ॥ ८ ॥ नः । प्रथमः । अन्यः । अ-

---

इति भ्रातृव्यशब्दात् व्यन्प्रत्ययः, । तस्मादयुक्तमिदमाचरितम् । अतो या नः इमा अस्माकमिष्टास्तनुवः शरीराणि तास्समवद्यामहै एकत्र सङ्गीकुर्मः समयं कर्तुम् । समयस्वरूपं चाह—ताभ्य इत्यादि इत्यन्तम् । न तु तुभ्यं ततः परं प्रियमिवास्तीति ताभिस्समयः क्रियते । तनुशब्दः उकारान्तोप्यस्ति । न्यर्तेः प्राप्तकाले लिङर्थे लोट्, उपसंवादे व्यत्ययेनात्मनेपदम् । एकत्र सन्निधाप्य समयं ताभिः कुर्म इति । यद्वा—व्यतिहारे आत्मनेपदम् । ताः परस्परं सन्निधापयामः । ताभ्यस्तनूभ्यः स निरृच्छात् निर्गच्छेत्, लेट्याडागमः । मीयतामिति यावत् । क इत्याह—यो नः प्रथमोस्माकं मध्ये प्रथमः प्रथमभावी द्रुह्यात् द्रोहमाचरेत् समयं भिन्द्यात् । आशङ्कायां लेट्, पूर्ववदाडागमः । अन्योन्यस्मै अयं वा तस्मै स वाऽस्मै द्रुह्यादिति । 'क्रुधद्रुहेर्ष्या' इति संप्रदानत्वम्, पूर्ववद्विर्वचनादि । व्यतिहारसामर्थ्याच्च स निरृच्छात् यो यः प्रथमो द्रुह्यादिति गम्यते । न ह्येकस्मिन् अन्योन्यस्मै द्रुह्यादिति संभवति । तस्मादित्यादि ।

द्रुह्यादिति तस्माद्यस्सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्छति य-त्तानूनप्त्रꣳ संमवद्यति भ्रातृव्याभि-भूत्यै भवत्यात्मना परांऽस्य भ्रातृ-

न्यस्मैं । द्रुह्यात् । इतिं । तस्मांत् । यः । सतानू-नप्त्रिणामिति स–तानूनप्त्रिणाम् । प्रथमः । द्रुह्य-ति । सः । आर्तिम् । एतिं । ऋच्छति । [3]यत् । तानूनप्त्रमितिं तानू–नप्त्रम् । समवद्यतीतिं सं–अ-वद्यतिं । भ्रातृव्याभिभूत्या इति भ्रातृव्य–अभिभू-त्यै । भवति । आत्मनां । परेतिं । अस्य । भ्रातृ-

---

अन्यत्वेऽपीत्यर्थः । तनूनपात् तनूनप्ता यस्तनूनां न पातयिता । स चेह शरीरस्थोऽग्निरुच्यते । तद्रक्षणार्थं कर्म तानूनप्त्रं, तद्व-न्तस्तानूनप्त्रिणः, समानास्तानूनप्त्रिणः सतानूनप्त्रिणः । यजमानै-क्येन समानत्वम् । यजमानान्तरविषये दोषो मा भूदिति समा-नत्वेन विशेष्यन्ते । 'समानस्य छन्दसि' इति सभावः, उदा-त्तश्चायं निपात्यते स्वरान्तरबाधनार्थम् । आर्तिमार्छति प्राप्नोति, क्रियते इति यावत् ॥

[3]यदित्यादि ॥ यत्तानूनप्त्रं कर्म समवद्यति एकीभूय संगृह्णाति समयार्थम् । व्यतिहाराभावात् परस्मैपदमेव । प्रत्येकं तानूनप्त्रि-णामन्यतम उच्यते । तद्भ्रातृव्याभिभूत्यै । केन प्रकारेणेत्याह—

व्यो भवति पञ्च कृत्वोऽव द्यति पञ्च-
धा हि ते तथ्संमवाद्यन्ताथो पञ्चा-
क्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव
रुन्ध आपतये त्वा गृह्णामीत्याह

व्यः। भवति। पञ्च। कृत्वः। अवेति। द्यति।
पञ्चधेति पञ्च-धा। हि। ते। तत्। समवाद्यन्तेति
सं-अवाद्यन्त। अथो इति। पञ्चाक्षरेति पञ्च-अ-
क्षरा। पङ्क्तिः। पाङ्क्तः। यज्ञः। यज्ञम्। एव। अव-
इति। रुन्धे। [5]आपतय इत्या-पतये। त्वा। गृ-

भवत्यात्मना। प्रकृत्यादितृतीया। स्वयं भूतिमान् संपद्यते भ्रातृ-
व्यश्चास्य पराभवति विपद्यते। 'व्यन् सपत्ने' इति व्यन्।
पूर्वं द्रोग्धुरार्तिरुक्ता, इदं तु समयकरणस्य फलमिति विवेकः।
यद्वा—येन तानूनप्त्रकर्मार्थमाज्यं समवद्यति एकत्र गृह्णात्यध्वर्युः,
भ्रातृव्याभिभूत्या इति ॥

[4]पञ्च कृत्व इत्यादि ॥ 'आपतये त्वा'* इत्यादिभिः पञ्चभिः।
अभ्यावृत्तिवाचि शब्दान्तरमेवेदं न प्रत्ययः। अवद्यति आज्यं गृह्णाति।
पञ्चधा हीति। पञ्चधा हि सन्तस्ते देवाः तत्तदानीं समवाद्यन्त
एकीभूय समयं कृतवन्तः। अथो इति। अपि च। पञ्चा-
क्षरेत्यादि। गतम्†। पञ्चत्वयोगात्पाङ्क्तस्य यज्ञस्यावाप्त्यै भवति ॥

[5]इदानीं मन्त्रार्थमनुसन्धत्ते—आपतय इत्यादि ॥ आवृत्त्याऽऽभि-
मुख्येन वा पाति पततीति वा आपतिः प्राणः, पातेर्डतिः, पततेः

* सं. १-२-१०,[13—17] † सं. ६-१-६.[9]

प्राणो वै ॥ १ ॥ आपंतिः प्राणमेव प्रीणाति परिपतय इत्यांह मनो वै परिपतिर्मनं एव प्रीणाति तनूनप्त्र इत्यांह तनुवो हि ते तास्संमवाद्यन्त शाक्वरायेत्यांह शक्त्यै हि ते ता-

ह्वामि । इति । आह । प्राण इति प्र–अनः । वै । ॥ १ ॥ आपंतिरित्या–पतिः । प्राणमिति प्र–अनम् । एव । प्रीणाति । परिपतय इति परि–पतये । इति । आह । मनः । वै । परिपतिरिति परि–पतिः । मनः । एव । प्रीणाति । तनूनप्त्र इति तनूं–नप्त्रें । इति । आह । तनुवः । हि । ते । ताः । समवाद्यन्तेति सं–अवाद्यन्त । शाक्वराय । इति । आह । शक्त्यै । हि । ते । ताः । समवाद्यन्तेति

---

'इन् सर्वधातुभ्यः' इतीन्, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । प्राणमेव प्रीणाति स च व्रतसमयस्य परिपालयितारं रक्षति । मनः परिपतिः परितः पालनात्, पातनाद्वा । गतमन्यत् । तनुवो हीति । तनुवः शरीराणि हि ते देवाः ताः प्रियाः समवाद्यन्त एकीकृत्य समयं कृतवन्तः । तस्मात्तत्र तनूनां नप्त्रे तनूनामपतनहेतवे शरीरस्थाग्नये इत्युच्यते । शक्त्यै हीति । शक्तिशीलः शक्वरः, तस्य भावश्शाक्वरम्, शक्तिरेवासुरवधसा-

स्संमवाद्यन्त शक्मन्नोजिंष्ठायेत्याहौ-
जिंष्ठꣳ हि ते तदात्मनंस्समवाद्यन्ता-
नांधृष्टमस्यनाधृष्यमित्याहानांधृष्ट-
ꣳ ह्येतदंनाधृष्यं देवानामोजंः॥१०॥

सं-अवाद्यंन्त । शक्मन्न् । ओजिंष्ठाय । इतिं । आह । ओजिंष्ठम् । हि । ते । तत् । आत्मनंः । समवाद्यन्तेतिं सं-अवाद्यंन्त । [6]अनांधृष्टमित्य-नां-धृष्टम् । असि । अनाधृष्यमित्यंना-धृष्यम् । इतिं । आह । अनांधृष्टमित्यनां-धृष्टम् । हि । एत-त् । अनाधृष्यमित्यंना-धृष्यम् । देवानांम् । ओ-

---

मर्थ्यं, तस्माच्छाक्करशब्देनोक्तमिति प्रतिपादयति । ओजिष्ठं ही-ति । शक्तेषु मध्ये ओजिष्ठं अतिशयेन बलवन्तं प्राणमुद्दि-श्य ते समयं कृतवन्तः । यद्वा—ओजस्वितमं समयं ते कृत-वन्तः । ओजस्विशब्दादिष्ठनि विन्मतोर्लुक्, 'टेः' इति टिलोपः ॥

[6]अथानाधृष्टमित्यादिरवमर्शनमन्त्रो व्याख्यायते—अनाधृष्टमेतत्क-र्म केनचिदपि आधर्षयितुमशक्यं च । 'ययतोश्चातदर्थे' इत्युत्तरपदा-न्तोदात्तत्वम् । देवानां ह्येतदुज्ज्वलं कर्म अन्येभ्यः कर्मभ्यः । तद्धि कर्म अभिशस्तेभ्यः अभिशंसनेभ्यः अभिशापेभ्यः पातीति विचि लिङ्गव्यत्ययः । स्वयं च केनचिदप्यभिशंसनीयम् । एन्य-प्रत्ययस्तुडागमः, उत्तरपदान्तोदात्तत्वं छान्दसम् । यद्वा—अभि-

इत्याह देवानाꣳ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेन्यमित्याहाभिशस्तिपा ह्येतदनभिशस्तेन्यमनु मे दीक्षां दीक्षापतिर्मन्यतामित्याह य-

जुः ॥ १० ॥ इति । आह । देवानाम् । हि । एतत् । ओजः । अभिशस्तिपा इत्यभिशस्ति–पाः । अनभिशस्तेन्यमित्यनभि–शस्तेन्यम् । इति । आह । अभिशस्तिपा इत्यभिशस्ति–पाः । हि । एतत् । अनभिशस्तेन्यमित्यनभि–शस्तेन्यम् । [7]अन्विति । मे । दीक्षाम् । दीक्षापतिरिति दीक्षा–पतिः । मन्यताम् । इति । आह । यथायजु-

---

शंसनमभिशस्तं, तत्रार्हतीति छान्दस एन्यप्रत्ययः । 'नञो गुणप्रतिषेधः' इत्युत्तरपदान्तोदात्तत्वम् ॥

[7]'अनु मे दीक्षाम्'* इत्यादि यजमानं वाचयति, तद्व्याचष्टे—यथायजुरेवैतदिति ॥ दीक्षापतिर्मां अनुमन्यताम् । तपस्पतिश्च तपोनुमन्यताम् । अञ्जसा ऋजुना सत्यं समयं तानूनप्त्राभिमर्शनेन उपगतोस्मि । मां सुविते सूते अपत्ये सुष्टु वा इते अस्मिन् कर्मणि स्थापयेति यथा यजुराह तत्तथा तत्साध्यते एवेति ॥

---

*सं. १-२-१०[19]

थायजुरेवैतद्घृतं वै देवा वज्रं कृत्वा
सोममघ्नन्नन्तिकमिव खलु वा अं-
स्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचरन्त्यꣳ-
शुरꣳशुस्ते देव सोमा प्यायतामि-

रिति यथा–यजुः । एव । एतत् । [8]घृतम् । वै ।
देवाः । वज्रम् । कृत्वा । सोमम् । अघ्नन् । अ-
न्तिकम् । इव । खलु । वै । अस्य । एतत् । च-
रन्ति । यत् । तानूनप्त्रेणेति तानू–नप्त्रेण । प्रच-
रन्तीति प्र–चरन्ति । अꣳशुरꣳशुरित्यꣳशुः–अꣳ-
शुः । ते । देव । सोम । एति । प्यायताम् । इति ।

---

[8]आप्यायनं विधास्यन्नाह—घृतमित्यादि ॥ यदिदं तानूनप्त्र-प्रचरणं, तत्खल्वस्य सोमस्यान्तिकमिव तानूनप्त्रिणश्चरन्ति अव-काशनिरोधेन बाधितुमिव परिवृश्चन्ति घृतवज्रा एते भवन्ति । घृतेन वज्रभूतेन पूर्वं देवैस्सोमो हत आसीत् । तस्मादिवास्य भयं यस्मात् 'अंशुरंशुस्ते'* इत्यादिना आप्यायनं कुर्यादिति । एतेन चाप्यायनेन यदस्य सोमस्यापुवायते पूतीभवति । अपशब्दस्य छा-न्दसो वर्णविकारः । उकारान्तो वा उपसर्गसधर्मा शब्दः । तत्पूर्वकश्च सकर्मको वातिः । वातेः कर्मणि कर्तरि वा लकारः, 'अचः कर्तृयकि' इत्यस्य पाक्षिकत्वात् यक्स्वरः । यद्वा—

---

*सं. १-२-११.[1]

त्याह यत् ॥ ११ ॥ एवास्यापुवाय-
ते यन्मीयते तदेवास्यैतेना प्यायय-
त्या तुभ्यमिन्द्रः प्यायतामा त्व-
मिन्द्राय प्यायस्वेत्याहोभावेवेन्द्रं च
सोमं चा प्याययत्या प्यायय सखीं-

आह । यत् ॥ ११ ॥ एव । अस्य । अपुवायते ।
यत् । मीयते । तत् । एव । अस्य । एतेन । एति ।
प्याययति । [9]एति । तुभ्यम् । इन्द्रः । प्याय-
ताम् । एति । त्वम् । इन्द्राय । प्यायस्व । इति ।
आह । उभौ । एव । इन्द्रम् । च । सोमम् । च ।
एति । प्याययति । एति । प्यायय । सखीन् ।

---

अपुवायते अपशुष्यति । पै ओ वै शोषणे, भौवादिकः, व्य-
त्ययेन शः, आत्मनेपदं च । यच्च मीयते नश्यति क्षीयते
वा, मीङ् हिंसायाम्, दैवादिकः । तत्सर्वमाप्याययति अदुष्टं
करोति ॥

[9]आ तुभ्यमित्यादि ॥ गतम्* । ऋत्विजस्सखायः यजमानस्य
समानख्यानाः, एककार्यत्वात् । आशिषं सुत्यामशीयेत्येतामाशास्ते
इदमेव प्रयोजनमिति । प्र वा एत इति । एते अस्माल्लोका-
त्प्रच्यवन्ते ये सोममाप्याययन्ति यतः अन्तरिक्षदेवत्य आप्या-
यितस्सोमः अन्तरिक्षदेवतार्थः । देवतान्तात्तादर्थ्ये यत् । तस्मा-

---

*सं. १-२-११.1

न्त्सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवा प्याययति स्वस्ति ते देव सोम सुत्यामशीय ॥ १२ ॥ इत्याहाशिषमेवैतामा शास्ते प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये सोममा प्याययन्त्यन्तरिक्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृ-

सन्नया । मेधया । इति । आह । ऋत्विजः । वै । अस्य । सखायः । तान् । एव । एति । प्याययति । स्वस्ति । ते । देव । सोम । सुत्याम् । अशीय ॥ १२ ॥ इति । आह । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । प्रेति । वै । एते । अस्मात् । लोकात् । च्यवन्ते । ये । सोमम् । आप्याययन्तीत्या—प्याययन्ति । अन्तरिक्षदेवत्य इत्यन्तरिक्ष—देवत्यः । हि । सोमः । आप्यायित इत्या—प्यायितः । एष्टः । रायः । प्रेति । इषे । भगाय । इति । आह । द्यावापृथिवी-

---

दाप्यायितोन्तरिक्षप्रधानः अस्य आप्यायितारः अन्तरिक्षप्रधानाः

खलु वा एष प्र विशति योऽवान्तर-
दीक्षामुपैति भ्रातृव्याभिभूत्यै भव-
त्यात्मना परोऽस्य भ्रातृव्यो भवत्या-
त्मानमेव दीक्षया पाति प्रजामवा-
न्तरदीक्षया संतरां मेखलाꣳ समा-

अग्निम् । इव । खलु । वै । एषः । प्रेति । विशति ।
यः । अवान्तरदीक्षामित्यवान्तर–दीक्षाम् । उपै-
तीत्युप–एति । भ्रातृव्याभिभूत्या इति भ्रातृव्य–
अभिभूत्यै । भवति । आत्मना । परेति । अस्य ।
भ्रातृव्यः । भवति । आत्मानम् । एव । दीक्षया ।
पाति । प्रजामिति प्र–जाम् । अवान्तरदीक्षयेत्य-
वान्तर–दीक्षया । सन्तरामिति सं–तराम् । मेख-

दीक्षां मध्ये दीक्षामुपैति । भ्रातृव्याभिभूत्यै इत्यादि । गतम् ।* सेदानीमुच्यते—सन्तरामिति । सन्तरां श्लिष्टतराम् । क्रियाविशेषणम्, ससाधनां क्रियामुपसर्ग आहेति, 'किमेत्तिङव्ययाघात्' इत्यामुप्रत्ययः । मेखलां समायच्छते यमयति सुदृढमाच्छिद्य बध्नाति । 'समुदाङ्भ्यो यमः' इत्यात्मनेपदम् । कारणमाह—प्रजा खल्वात्मनोन्तरतरा; प्रजास्थानीया चावान्तरदीक्षा; तस्मात् समायच्छते इति विधिः, तप्तव्रतं उष्णदुग्धभोजनं, मदन्तीभिस्तप्ताभिः अद्भिर्मार्जयते, अग्निर्हि शीतेन निर्वायति निर्वापितः । व्यत्ययेन श्यन् ।

*सं. ६-२-२,४

यच्छते प्रजा ह्यात्मनोन्तरतरा तप्तव्रं-
तो भवति मर्दन्तीभिर्मार्जयते नि-
र्ह्यग्निश्शीतेन वार्यति समिध्यै या
ते अग्ने रुद्रिया तनूरित्याह स्वयैवै-
नद्देवतया व्रतयति सयोनित्वाय

लाम् । समायच्छत इति सं–आयच्छते । प्रजेति प्र–जा । हि । आत्मनः । अन्तरतरेत्यन्तर–तरा । तप्तव्रत इति तप्त–व्रतः । भवति । मर्दन्तीभिः । मार्जयते । निरिति । हि । अग्निः । शीतेन । वार्यति । समिध्या इति सं–इध्यै । [11]या । ते । अग्ने । रुद्रिया । तनूः । इति । आह । स्वया । एव । एनत् । देवतया । व्रतयति । सयोनित्वायेति सयो-

वायतिर्वा भौवादिकः । तस्मात्तप्तव्रतादिकं अग्नेस्समिद्ध्यै समिन्धनार्थं भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[11]अथ 'या ते अग्ने रुद्रिया तनूः'* इत्यादि व्रतमन्त्रं व्याचष्टे—स्वया देवतया सह एनद्दुग्धं व्रतयति भुङ्क्ते । यद्वा—स्वयैव देवतया देवताभावेन रुद्रिया अग्निरूपेण एतद्भुङ्क्ते । किमर्थम्?—सयोनित्वाय अग्निना योनिभूतेन सहभुक्तिः यथा स्यात् ।

*सं. १-२-११,5

शान्त्यै ॥ १४ ॥

तेषामसुराणां तिस्रः पुर आसन्न-
यस्मय्यवमाऽथ रजताऽथ हरिणी
ता देवा जेतुं नाशक्नुवन्ता उपसदैवा-

नि—त्वार्यं । शान्त्यै ॥ १४ ॥

यो वा ओजं आह यदशीयेति तेऽग्न
एकादश च ॥ २ ॥

[1]तेषाम् । असुराणाम् । तिस्रः । पुरः । आसन् ।
अयस्मयी । अवमा । अथ । रजता । अथ । हरिणी ।
ताः । देवाः । जेतुम् । न । अशक्नुवन् । ताः । उपसदे-

---

एवं हि भुक्तं अग्निना च भुक्तं भवति । ततश्च शान्त्यौ भवति तप्तव्रताद्युपचारेणोद्दीपितोग्निरनेन शान्तसुखो भवति ॥

इति षष्ठे द्वितीये द्वितीयोनुवाकः.

---

[1]उपसदो विधास्यन् आह—तेषामित्यादि ॥ सर्वनाम्नस्सापेक्षत्वात् प्रकृतमत्रापेक्ष्यते, उक्तमिदानीं 'देवासुरास्संयत्ता आसन्ते देवा बिभ्यतोग्निं प्राविशन्'* इत्यादि । तत्र देवा अग्निं वरूथं कृत्वा तदनुप्रविश्य निर्बाधास्सन्तोसुरानभ्यभवन् । अथ तं दृष्टवतां देवैः परिभूतानां ततोप्यधिकं कर्तुं संरब्धवतां तेषामसुराणां

---

*सं. ६-२-२.10

जिगीषन्तस्मादाहुर्यश्चैवं वेद यश्च नो-

त्युप–सदा । एव । अजिगीषन् । तस्मात् । आहुः ।
यः । च । एवम् । वेद । यः । च । न । उपसदे-
त्युप–सदा । वै । महापुरमिति महा–पुरम् । ज-

तिस्रः पुरः पुंसंस्थानान्यधिष्ठानान्यासन् । 'तिसृभ्यो जसः' इति जस उदात्तत्वम् । तासां चोपर्यधोभावेनावस्थितानां अवमा अधरा अयस्मयी अयसा निर्मिता । 'द्व्यचश्छन्दसि' इति मयट्, अयस्मयादित्वाद्भत्वम् । अथानन्तरं तस्या उपरि रजता रूप्यमयी । अथ तस्याश्चोपरि हरिणी सौवर्णा । एतयोः प्रकृतिविकारभावस्याविवक्षितत्वात् विकारप्रत्ययो न कृतः । गुणवचनत्वाद्वा मतुब्विकारप्रत्ययो लुप्यते । 'वर्णादनुदात्तात्' इति हरितशब्दात् ङीप् तकारस्य च नकारः । ततः ताः पुरः देवा जेतुं नाशक्नुवन् तासु स्थितानसुरानित्यर्थः । अग्निनाऽपि वरूथेनेत्यभिप्रायः । अथ देवास्ताः उपसदा उपसदनेन समीपासनेन अजिगीषन् जेतुमैच्छन् । शत्रुबलादिपरीक्षार्थं तत्समीपावस्थानमन्तिकासनमिति प्रसिद्धं उपसच्छब्देनोच्यते । तस्मादाहुः—अद्यत्वेऽपि यश्चैवं देवैः कृतं वेद यश्च न वेद लौकिकश्शूद्रादिः ते सर्वेऽप्याहुः । कथं?—उपसदा उपसदनेनैव महापुरं जयन्ति । यदा शत्रवो महापुरजयाय भवन्ति तदोपसदनमेव तावत्कर्तव्यम्, न सहसोत्थातव्यम् । एवं कृतोपसदनैः सहायादिसामग्रीविशेषसंपन्नैः परिच्छिन्नशात्रवबलैः पश्चादभियोक्तव्याः शत्रव इति सार्वलौकिकमेतदित्यर्थः । 'ऋक्पूरब्धूः' इत्यकारस्समासान्तः, व्यत्ययेन पुंल्लिङ्गता न भवति । पुरशब्दो वा ॥

प्रसदा वै महापुरं जयन्तीति त इ-
षुꣳ समस्कुर्वताग्निमनीकꣳ सोमꣳ
शल्यं विष्णुं तेजनं तेऽब्रुवन्क इमा-
मसिष्यतीति॥१५॥ रुद्र इत्यब्रुवनुद्रो
वै क्रूरस्सोऽस्यत्विति सोऽब्रवीद्वरं वृ-

यन्ति । इति । [2]ते । इषुम् । समिति । अकुर्वत ।
अग्निम् । अनीकम् । सोमम् । शल्यम् । विष्णुम्।
तेजनम् । ते । अब्रुवन्न् । कः । इमाम् । असिष्य-
ति । इति ॥ १५ ॥ रुद्रः । इति । अब्रुवन्न् । रुद्रः।
वै। क्रूरः। सः। अस्यतु । इति । [3]सः। अब्रवीत् । व-

---

[2]अथ ते तथाकृताध्यवसायाः उपसीदन्तो देवाः इषुं सम-स्कुर्वत संस्कृतवन्तः । अग्निमनीकं मुखं तस्याः, सोमं शल्यं शरीरं पुच्छं वा, विष्णुं तेजनं धारां काष्ठं वा इषोः संस्कृत-वन्तः । ततस्ते सर्वे अब्रुवन् क इमामसिष्यति क्षेप्स्यति स्त्री-बालसहितास्वासुरपुरीषु क इत्थं क्रूरं करिष्यतीति । यद्वा—सम्भा-वनायां किंशब्दः, एवमाश्चर्यभूतामिषुं कः क्षेप्तुं प्रभवति न कश्चिदस्मा-स्वित्यर्थः । एवं निरूपयन्तो देवाः सर्वेऽपि रुद्र इत्यब्रुवन् । रुद्रो वै क्रूरस्वभावः । तस्मात्स इमामस्यतु स एवास्मिन् कर्मणि प्राप्तकाल इति अन्यैः कर्तुमशक्यत्वादिति प्राप्तकाले लोट् । यद्वा—महार्थसंहारकारित्वं क्रूर इति विवक्षितं, तत्कारिणोस्य किं नाम कर्तुमशक्यं, तस्मात्सो-स्यत्विति । आशिषि लोट्, स इदं क्रियात् इत्याशास्महे इति ॥

[3]अथ स देव आगत्याब्रवीत् वरं वृणै वरं वरयितुं प्राप्तो-

णा अहमेव पशूनामधिपतिरसानी-

रेम् । वृणे । अहम् । एव । पशूनाम् । अधिपति-

रित्यधि-पतिः । असानि । इति । तस्मात् । रुद्रः ।

---

यं कालः । आह—अहमेव पशूनामधिपतिरसानीति द्विपदां चतुष्पदां चाधिपतिः स्वामी असानि भवानीति । देवैश्च दत्तो वरः, तस्माद्रुद्रः पशूनामधिपतिः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । किंनु भोस्ततः पूर्वं देवः पशूनामधिपतिर्न भवति? भवत्येव । इदं पृच्छामः—'साब्रवीद्वरं वृणै मत्प्रायणा एव वो यज्ञाः'* इत्यादिवरलाभात्पूर्वं किं प्रायणीयोदयनीयौ अदितिदेवत्यौ न भवतः ? । अत्राह—भवत इति, सर्वदा तावादित्यावेव । एवं अस्मिन् देवेऽपि । सर्वदा पशूनां देवोधिपतिरेव, विद्यमानार्थस्यैव द्रढिमानमापादयति श्रुतिरिति सर्वत्र वेदितव्यम् । अनेनैवाभिप्रायेण ततः प्रभृतीति न क्वचिदुच्यते । एवं सर्वदा विद्यमानमेव अवसरे देवो देवान् प्रबोधयति । ततश्चाग्न्यादीनामपि रुद्रस्वभूतत्वख्यापनात् 'या ते अग्ने रुद्रिया तनूः'† इतिमन्त्रादौ क्रियमाणः प्रयोगश्च भवति । अन्य आह—ग्राम्यारण्यानां पशूनामाधिपत्यं देवेन विद्यमानमेव वृतं, तच्च देवैर्दत्तम् । तस्मात्ततः प्रभृति तेषां रुद्रोधिपतिरासीत् । ततस्स वरलाभेन तृप्तः कृतो देवकार्यमकरोदिति तेन पशुविशेषग्रहणे प्रमाणं वक्तव्यम् । तेनाधिपत्यप्रतिपादनस्य चाज्यहविषि क उपयोग इति क्रियमाणसंगताभावात् देवाश्च विश्वाधिपत्यं देवाय दातुं विद्यमानमेव दातुमीशते । ईर्ष्यामात्रमणुरेव (?) । इषुं मोक्तुं न क्रमन्ते इति महच्छ्रू‡ द्धेयम् ॥

---

*सं. ६-१-५.[3] †सं. १-२-११.[5] ‡क. मम हृच्छ्रू.

त्यास्मिन्लोके प्रति तिष्ठन्ति देवा-
सुरास्संयत्ता आसन्ते देवा बिभ्य-
तोऽग्निं प्राविशन्तस्मादाहुरग्निस्सर्वा
देवता इति ते ॥ १३ ॥ अग्निमेव
वरूथं कृत्वाऽसुरानभ्यभवन्नग्निमिव

भ्यामिति द्यावा–पृथिवीभ्याम् । एव । नमस्कृ-
त्येति नमः–कृत्य । अस्मिन्न् । लोके । प्रतीति ।
तिष्ठन्ति । [10]देवासुरा इति देव–असुराः । संयत्ता
इति सं–यत्ताः । आसन्न् । ते । देवाः । भिभ्यतः ।
अग्निम् । प्रेति । अविशन्न् । तस्मात् । आहुः । अग्निः ।
सर्वाः । देवताः । इति । ते । ॥ १३ ॥ अग्निम् । एव ।
वरूथम् । कृत्वा । असुरान् । अभीति । अभवन्न् ।

---

इति अस्माल्लोकात्प्रच्युता भवन्ति । तस्मात् 'एष्टा रायः'* इत्या-
दिना द्यावापृथिवीभ्यां नमस्कृत्य अस्मिन् लोके प्रतितिष्ठन्ति ॥

[10]अवान्तरदीक्षाविधिः—देवासुरा इत्यादि ॥ ते देवा असु-
रेभ्यो बिभ्यतः अग्निं प्राविशन्, तस्मादित्याहुः । ते देवाः अग्निमेव
वरूथं कृत्वा वारुणं प्राकारं कृत्वा असुरानभ्यभवन् । यद्वा—अग्निं
वरूथं गृहं कृत्वा तत्र प्रविश्य निर्बाधाश्च सन्तः असुरानभ्य-
भवन्निति । तस्मादद्यत्वेऽपि अग्निमेव खल्वेष प्रविशति योवान्तर-

---

*सं. १-२-११.३

ति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ
रुद्रोवासृजत्स तिस्रः पुरो भित्वैभ्यो
लोकेभ्योसुरान्प्राणुदत यदुपसद उ-
पसद्यन्ते भ्रातृव्यपराणुत्यै नान्या-

पशूनाम् । अधिपतिरित्यधि–पतिः । [4]ताम् । रुद्रः । अवेति । असृजत् । सः । तिस्रः । पुरः । भित्वा । एभ्यः । लोकेभ्यः । असुरान् । प्रेति । अनुदत । यत् । उपसद इत्युप–सदः । उपसद्यन्त इत्युप–सद्यन्ते । भ्रातृव्यपराणुत्या इति भ्रातृव्य–पराणुत्यै । [5]न । अन्याम् । आहुतिमित्या–हुतिम् । पुर-

---

[4]अथ देवो देवैः प्रार्थितः देवांश्चात्मनो विश्वाधिपत्यं बोधयित्वा तां अन्यैर्मोक्तुमशक्यां इषुमवासृजदमुञ्चत् । अथ सोवसृष्टशरो देवः त्रिस्रः पुरो भित्त्वा नाशयित्वा एभ्यो लोकेभ्योसुरान् प्राणुदत अपनीतवान् । 'उदात्तयणः' इति तिसृभ्यो विभक्तिरुदात्ता । यदुपसदः संरोधस्थानीयाः उपसद्यन्ते नीयन्ते भ्रातृव्यपराणुत्यै शत्रूणामपनयनाय भवतीत्युपसदां विधिः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥

[5]अत्राग्निसोमविष्णूनां तिस्र आहुतयो होतव्याः अयाशयादितनुमते विशिष्टायाग्नये एकाहुतिरोपसदिका । तासां क्रमं विधातुमाह—नान्यामिति ॥ प्रसिद्ध्यभावादौपसदी आहुतिरन्येत्युच्यते । तामाहुतिं पुरस्तात्प्रथमं अग्न्याद्याहुतिभ्यः पूर्वं न जुहुयात् ।

माहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं
पुरस्ताज्जुहुयात् ॥ १६ ॥ अन्यन्मु-
खं कुर्याथ्स्रुवेणाघारमा घारयति य-
ज्ञस्य प्रज्ञात्यै पराङतिक्रम्य जुहो-
ति परांच एवैभ्यो लोकेभ्यो यजं-

स्तात् । जुहुयात् । यत् । अन्याम् । आहुतिमि-
त्या—हुतिम् । पुरस्तात् । जुहुयात् ॥ १६ ॥ अ-
न्यत् । मुखम् । कुर्यात् । [6]स्रुवेण । आघारमि-
त्या—घारम् । एति । घारयति । यज्ञस्य । प्रज्ञा-
त्या इति प्र—ज्ञात्यै । [7]पराङ् । अतिक्रम्येत्यति—
क्रम्य । जुहोति । परांचः । एव । एभ्यः । लोके-

---

अन्यन्मुखं कुर्यात् प्रसिद्धोऽग्निर्देवताभिमुखः तमविधायाप्रसि-
द्धमुखं कुर्यात् । ततश्च यज्ञत्वहानिः । तस्मात् अग्न्यादिभ्य
एव पुरस्तादाहुतयो होतव्याः यज्ञत्वायेति विधिर्गम्यते ॥

[6]किंचेत्याह—स्रुवेणेति विधिः ॥ प्रज्ञात्यै प्रत्यभिज्ञानार्थं यज्ञ-
त्वमासां यथा प्रत्यभिज्ञायेतेति तत्पूर्वकत्वप्रसिद्ध्यै यज्ञानाम् । 'ता-
दौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[7]पराङित्यादिविधिः ॥ पराङ् अपुनरावृत्त एव अतिक्रम्या-
ग्निसोमविष्णून् जुहोति । 'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृति-
स्वरत्वम् । पराच इत्यादि । पराचः अपुनरावृत्तानेव भ्रातृ-

मानो भ्रातृव्यान्प्रणुदते पुनरत्या-
क्रम्योपसदं जुहोति प्रणुद्यैवैभ्यो
लोकेभ्यो भ्रातृव्याञ्जित्वा भ्रातृव्य-
लोकमभ्यारोहति देवा वै याः

भ्यः । यजमानः । भ्रातृव्यान् । प्रेति । नुदते ।
[8]पुनः । अत्याक्रम्येत्यति-आक्रम्य । उपसदमित्यु-
प-सदम् । जुहोति । प्रणुद्येति प्र-नुद्य । एव ।
एभ्यः । लोकेभ्यः । भ्रातृव्यान् । जित्वा । भ्रातृ-
व्यलोकमिति भ्रातृव्य-लोकम् । अभ्यारोहतीत्यभि-
भि-आरोहति । [9]देवाः । वै । याः । प्रातः । उ-

---

व्यान् प्रणुदते । 'अञ्चतेश्छन्दसि' इति विभक्त्युदात्तत्वम्, 'चौ' इति पूर्वपदान्तोदात्तत्वं च परत्वाद्बाधित्वा 'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृतिस्वरत्वं प्रवर्तते । 'ऊडिदम्' इतीदमो विभक्तिरुदात्ता ॥

[8]पुनरत्याक्रम्येति विधिः ॥ पुनरावृत्त्याद्यदेशं आगत्य 'या ते अग्ने'* इत्याहुतिं स्रुवेण जुहोति । एभ्यो लोकेभ्यः भ्रातृव्यान् प्रणुद्य अपनीय भ्रातृव्यलोकं शत्रूणां स्थानं च जित्वा आत्मीयं कृत्वा तमभ्यारोहति अधितिष्ठति भ्रातृव्यलोकम् ॥

[9]देवा वै या इत्यादि ॥ प्रातस्तनीभिरुपसद्भिः अह्नोऽसुरान् प्राणुदन्त । यास्सायमुपसद उपासीदन्नित्येव । ताभिः रात्रियै

---

*सं. १-२-११.[5]

प्रातरुपसद उपासीदन्नहस्ताभिर-
सुरान्प्राणुदन्त यास्सायꣳ रात्रियै
ताभिर्यथ्सायंप्रातरुपसदः ॥ १७ ॥
उपसद्यन्तेऽहोरात्राभ्यामेव तद्यज-
मानो भ्रातृव्यान्प्रणुदते याः प्रातर्या-
ज्यास्स्युस्तास्सायं पुरोऽनुवाक्याः

पसद इत्युप-सदः । उपासीदन्नित्युप-असीदन् । अहः । ताभिः । असुरान् । प्रेति । अनुदन्त । याः । सायम् । रात्रियै । ताभिः । यत् । सायंप्रातरिति सायम्-प्रातः । उपसद इत्युप-सदः ॥१७॥ उपसद्यन्त इत्युप-सद्यन्ते । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । एव । तत् । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । याः । प्रातः । याज्याः । स्युः । ताः । सायम् । पुरोनुवाक्या इति पुरः-अनुवाक्याः । कुर्यात् । अयातयामत्वायेत्ययात-

---

रात्र्या असुरान् प्राणुदन्तेत्येव । यत्सायं प्रातरित्यादि । गतम् । तस्य सायंप्रातरुपसदनं कर्तव्यमिति विधिः । सायंप्रातश्शब्दः कार्तकौजपादिषु द्रष्टव्यः । याः प्रातरग्न्यादीनां याज्यास्स्युः तास्सायं पुरोनुवाक्याः तेषां कुर्यात् अयातयामत्वाय अगलितसारत्वाय ॥

कुर्यादयातयामत्वाय तिस्र उपस-
द उपैति त्रय इमे लोका इमानेव
लोकान्प्रीणाति षट्थ्सं पद्यन्ते षड्वा ऋ-
तव ऋतूनेव प्रीणाति द्वादशाहीने
सोम उपैति द्वादश मासास्संवत्स-
रस्संवत्सरमेव प्रीणाति चतुर्विंशश-

याम–त्वाय । [10]तिस्रः । उपसद इत्युप–सदः ।
उपेति । एति । त्रयः । इमे । लोकाः । इमान् ।
एव । लोकान् । प्रीणाति । षट् । समिति । प-
द्यन्ते । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणा-
ति । द्वादश । अहीने । सोमे । उपेति । एति ।
द्वादश । मासाः । संवत्सर इति सं–वत्सरः । सं-
वत्सरमिति सं–वत्सरम् । एव । प्रीणाति । चतु-

[10]तिस्र उपसद उपैतीति विधिः ॥ तिस्रः स्थितीरुपसदः उ-
पैति उपचारवतीर्नयति । त्रय इत्यादि । गतम् ।* षट् संपद्यन्त इति ।
तस्मात्सायन्तन्यः तिस्रः प्रातस्तन्यश्च तिस्र इति षडुपसदः उपस-
त्तव्यास्संपद्यन्ते । षड्वा इत्यादि । गतम् ।* द्वादशेत्यादि । अ-
हीने अह्नां समुदायात्मनि सोमे द्विरात्रादौ द्वादशोपसद्भिस्तिसृभि-
रुपैति । द्वौ च दश च द्वादश, 'संख्या' इति पूर्वपदप्रकृतिस्व-
रत्वम् 'अह्नः खः क्रतौ' इति खस्समूहे । द्वादशेति । गतम् ।†

*सं. ६-१-१.[18] †सं. २-५-११.[13]

तिस्सम् ॥१८॥ पद्यन्ते चतुर्विंशतिरर्धमासा अर्धमासानेव प्रीणात्याराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन्मे लोकेऽर्धुकं स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा

विंशतिरिति चतुः–विंशतिः । समिति ॥१८॥ पद्यन्ते । चतुर्विंशतिरिति चतुः–विंशतिः । अर्धमासा इत्यर्ध–मासाः । अर्धमासानित्यर्ध–मासान् । एव । प्रीणाति । [11]आराग्रामित्यारा–अग्राम् । अवान्तरदीक्षामित्यवान्तर–दीक्षाम् । उपेति । इयात् । यः । कामयेत । अस्मिन् । मे । लोके । अर्धुकम् । स्यात् । इति । एकम् । अग्रे । अथ । द्वौ । अथ । त्रीन् । अथ । चतुरः । एषा ।

---

चतुर्विंशतिरित्यादि । तस्मात्सायंप्रातरुपसत्तव्याः, चतुर्विंशतिरुपसदस्संपद्यन्ते । पूर्ववत्समासस्वरश्च । अर्धानि मासानां अर्धमासाः ॥

[11]आराग्रामित्यादि ॥ संज्ञेयमन्वर्था । आरमल्पमग्रमुपक्रमो यस्यास्सा आराग्रा । तादृशीमवान्तरदीक्षां पूर्वोक्तामुपेयात् यः कामयेत मम यज्ञफलमर्धुकमृद्धिशीलं स्यादिति । तस्यास्स्वरूपमाह—एकमित्यादि । एकं स्तनमग्रे प्रथमेऽह्नि उपैति भू[व्र]तम् । अथ अनन्तरेऽह्नि द्वावित्यादिवक्ष्यमाणम् । 'चतुरश्शासि' इति चतु-

यज्ञस्य करोति मिथुनं तदथो प-
त्निया एवैष यज्ञस्यान्वारम्भोनव-
च्छित्त्यै वर्त्मना वा अन्वित्य यज्ञꣳ
रक्षाꣳसि जिघाꣳसन्ति वैष्णवी-
भ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै
विष्णुर्यज्ञादेव रक्षाꣳस्यप हन्ति य-

तत्। अथो इति। पत्निया। एव। एषः। यज्ञस्य। अन्वारम्भ इत्यनु-आरम्भः। अनवच्छित्त्या इत्य-नव-छित्त्यै। [3]वर्त्मना। वै। अन्वित्येत्यनु-इत्य। यज्ञम्। रक्षाꣳसि। जिघाꣳसन्ति। वैष्णवीभ्याम्। ऋग्भ्यामित्यृक्-भ्याम्। वर्त्मनोः। जुहोति। यज्ञः। वै। विष्णुः। यज्ञात्। एव। रक्षाꣳसि। अपेति। हन्ति। [4]यत्। अध्वर्युः। अनग्नौ। आ-

---

[3]वर्त्मनेत्यादि ॥ वर्त्मना शकटमार्गेण अन्वित्यानुप्रविश्य यज्ञं रक्षांसि जिघांसन्ति हन्तुमिच्छन्ति तस्माद्वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति 'इदं विष्णुः',* 'इरावती धेनुमती'* इति द्वाभ्यां वर्त्मनोर्जुहोति। प्राधान्याद्दक्षिणस्योभयोः। उभयोर्वैकैकस्मिन्। यज्ञो वा इत्यादि। अयमेव वर्त्महोमलक्षणो यज्ञो विष्णुमन्त्रयोरुच्यते। तस्मादस्मादेव यज्ञान्निमित्ताद्रक्षांस्यपहन्ति ॥

[4]यदध्वर्युरित्यादि ॥ गतम्† ॥

---

*सं. १-२-१३.[4-5] †सं. ६-१-८.[6]

परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्ने -
वास्मै लोकेऽर्धुकं भवति ॥ १९ ॥
सुवर्गं वा एते लोकं यन्ति य उ-

रोवरीयसीति परः—वरीयसी । अवान्तरदीक्षेत्यवा-न्तर—दीक्षा । अमुष्मिन्न् । एव । अस्मै । लोके । अर्धुकम् । भवति ॥ १९ ॥

असिष्यतीति जुहुयात्सायंप्रातरुपसदश्च-
तुर्विंशतिस्स्तनं चतुरोग्रे षोडश च ॥३॥

[1]सुवर्गमिति सुवः—गम् । वै । एते । लोकम् । यन्ति । ये । उपसद इत्युप—सदः । उपयन्ती-

---

प्रतिषिध्यते । अन्ये तु—पूर्वानुसारेण स्वरूपलक्षणत्वेन व्याचक्षते, परो[पूर्व]वरीयसीमति वक्तव्ये परोवरीयसीमाचक्षते परोक्षेणेति । परस्तात्पूर्वस्मिन्नहनि वरीय उरुतरं व्रतं यस्याः । 'पूर्वाधर' इति पूर्वशब्दस्यासिप्रत्ययः परादेशश्च । ननु बह्वतिशयनीयत्वादीयसुना न भाव्यम्, न हि वीप्सिष्यते पूर्वंपूर्वं परस्माद्वरीयो यस्यामिति । तस्यास्स्वरूपमाह—चतुरोग्र इत्यादि । गतम्* । अयमपि सुजघनव्रतानुवादः ॥

इति षष्ठे द्वितीये तृतीयोनुवाकः

---

[1]उक्तमुपसत्सु स्तनव्रतं, तत्राशक्तविषये कथं कर्तव्यमित्याह—सुवर्गमित्यादि ॥ द्वादशाहविषयमेवेति केचित् । य उपसद उ-

---

*सं. ६-२-३,[11]

प्रसदं उपयन्ति तेषां य उन्नयते ही-
यंत एव स नोदंनेषीति सूंन्नीयमि-

त्युप-यन्ति । तेषांम् । यः । उन्नयंत इत्युंत्-
नयंते । हीयंते । एव । सः । [2]न । उदिति । अने-

---

पयन्ति उपगच्छन्ति स्वर्गं खल्वेते यन्ति प्राप्नुवन्ति न तुच्छसु-
खान्तरं, तस्मादेभिर्मात्राऽपि नापचरितव्या । अवहितैरेव विहितक-
रणाय भवितव्यम् । एवं स्थिते तेषां मध्ये य उन्नयते उत्क्र-
म्य नयते नयनं देहयात्रा अशनमिति यावत् । यथोक्तं स्तन-
व्रतमतिक्रम्य ओदनादिना देहं धारयतीत्यर्थः । यद्वा—स्तन्यं
य उन्नयते उपरि नयते ओदनादेरुपर्युन्नीय भुङ्क्ते एवमपि
स्तन्यमुपकृतं भवतीति । हीयत एव स इति । सः तत्कारी
हीयत एव फलात्स्वर्गप्राप्तिलक्षणात् । विहितकरणात् तस्मान्नो
हीयते इति ॥

[2]इदानीमशक्तैः कथं प्रतिपत्तव्यमित्याह—नोदनेषीति सून्नीय-
मिवेति ॥ नोदनेषि नोन्नयनं करोमि नोन्नयनमकार्षमित्येव वा
यथा वक्तुं शक्यते तथा सून्नीयं साधून्नेतव्यं तथाऽशितव्यं
साध्वेवाशक्तैरित्यभिप्रायः, 'श्रान्तो हीयते' इति दृष्टान्तदर्शनात्।
'छन्दसि निष्टर्क्य' इत्यादिना उन्नीयशब्दो निपात्यते, ततः
प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'स्वरितो वाऽनुदात्ते
पदादौ' इति स्वरितत्वम् । केचिदाहुः—उदञ्चनेषु सकृदिति
कृत्वा सून्नेतव्यं भूय उन्नेतव्यं; तदयुक्तं, उन्नयनविशेषणत्वे
गतित्वेन कृदुत्तरपदप्रकृतिस्वरत्वप्रसंगादिति । नयतेर्लुङि सिचि

**व॒ यो वै स्वा॒र्थेतां॑ य॒तां श्रा॒न्तो हीय॑त उ॒त स नि॒ष्ठ्याय॑ स॒ह व॑सति तस्मा॑थ्स॒कृदु॒न्नीय॒ नाप॑र॒मुन्न॑येषि। इति॑। सू॒न्नीय॒मिति॑ सु-उ॒न्नीय॒म्। इ॒व। [3]यः। वै। स्वा॒र्थेता॒मिति॑ स्वार्थ-इताम्। य॒ताम्। श्रा॒न्तः। हीय॑ते। उ॒त। सः। नि॒ष्ठ्याय॑। स॒ह। व॒स॒ति॒। [4]तस्मा॑त्। स॒कृत्। उ॒न्नीयेत्यु॑त्-नीय॑।**

---

गुणे च कृते उदनेषीति रूपम्। उन्नयननिवृत्तिरेव साधीयसीति प्रदर्शनार्थमुन्नयतेररुचिं द्योतयितुमिवेत्युक्तम्॥

[3]अथ योऽशक्तानामनुग्रह उक्तः तं लौकिकेन दृष्टान्तेन द्रढयितुमाह—यो वा इत्यादि॥ स्वार्थेतां स्वार्थं गच्छतां आत्मीयं प्रयोजनं साधयितुं गच्छताम्। एतेन एतेरनुदात्तेतो भाव उक्तः। एतेः क्विप्। यतां यतमानानाम्, यतेः क्विप्, 'सावेकाचः' इति विभक्तेरुदात्तत्वम्। एतेनालस्याभाव उक्तः। यद्वा—स्वार्थेतां स्वप्रयोजनमुपगतानां यतां स्वप्रयोजनं साधयितुं गच्छताम्। एतेश्शतरि 'शतुरनुमः' इति विभक्तेरुदात्तत्वम्। ईदृशानां मध्ये यः कश्चिच्छ्रान्तो हीयते स्वार्थात्प्रच्युतो भवति, उत सोपि निष्ट्याय स्वार्थान्निर्गत्य विश्राम्य च सह वसति पुनस्स्वार्थैनैकीभूतः शेषं कार्यं सह करोति। स्त्यायतेर्ल्यपि कृदुत्तरपदप्रकृतिस्वरत्वम्। स यथा स्वार्थान्न हीयते एवमयमपि फलान्न हीयते इति॥

[4]तर्हि कथमुन्नयने कृते नोदनेषीति वक्तुं शक्यते इत्याह—

त दुध्नोन्नयेतैतद्वै पंशूनाꣳ रूपꣳ रूपे-
णैव पुशूनवं रुन्धे ॥२०॥ युज्ञो दे-
वेभ्यो निलांयत विष्णूं रूपं कृत्वा स
पृंथिवीं प्राविशत्तं देवा हस्तान्त्सꣳ-
रभ्यैच्छन्तामिन्द्रं उपर्युपर्यत्यंक्राम-

न । अपंरम् । उदितिं । नयेत । दुध्ना । उदितिं ।
नयेत । एतत् । वै । पुशूनाम् । रूपम् । रूपेणं ।
एव । पुशून् । अवेतिं । रुन्धे ॥ २० ॥ [5]युज्ञः ।
देवेभ्यंः । निलांयत । विष्णुंः । रूपम् । कृत्वा ।
सः । पृथिवीम् । प्रेतिं । अविशत् । तम् । देवाः ।
हस्तान् । सꣳरभ्येतिं सं-रभ्यं । ऐच्छन् । तम् ।
इन्द्रंः । उपर्युपरीत्युपरिं-उपरिं । अतीतिं । अक्रा-

---

तस्मात्सकृदित्यादि ॥ यस्मादेवमुन्नेतव्यश्च भवति तस्मात्सकृदेकवा-
रमुन्नीय नापरं न पुनर्द्वितीयमुन्नयेत । तद्धि नैवोन्नीतं नैवानु-
न्नीतम् । उन्नयनेऽशक्तो म्रियते, अनुन्नयने विहिताकरणदोषप्रसङ्गात् ।
दध्नोन्नयेतेत्यादि । गतम् । 'अस्थिदधि' इत्यादिनानङ्, अल्लोपे
उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् 'नामन्यतरस्याम्' इति
नामउदात्तत्वम् ॥

[5]अथ सौमिकीं विधास्यन्नाह—यज्ञो देवेभ्य इत्यादि ॥ निला-
यत निरगच्छत् । अयतेर्लङि 'उपसर्गस्यायतौ' इति लत्वम् ।

थ्सो॑ऽब्रवी॒त्को मा॒ऽयमु॒पर्यु॑प॒र्यत्य॑क्र-
मी॒दित्य॒हं दु॒र्गे ह॒न्तेत्यथ॒ कस्त्वमित्य॒हं
दु॒र्गादा॑ह॒र्तेति॒ सो॑ऽब्रवीद्दु॒र्गे वै ह॒न्ता॑ऽ-
वोचथा व॒राहो॒ऽयं वा॑मम्मो॒षः ॥२१॥

म॒त् । [6]सः । अ॒ब्र॒वी॒त् । कः । मा॒ । अ॒यम् । उ॒प-
र्यु॑प॒रीत्यु॒परि॑–उ॒प॒रि॒ । अती॒ति॑ । अ॒क्र॒मी॒त् । इति॑ ।
अ॒हम् । दु॒र्ग इति॑ दुः–गे । ह॒न्ता॑ । इति॑ । अथ॑ ।
कः । त्वम् । इति॑ । अ॒हम् । दु॒र्गादिति॑ दुः–गात् ।
आ॒ह॒र्तेत्या–ह॒र्ता॒ । इति॑ । सः । अ॒ब्र॒वी॒त् । दु॒र्गे
इति॑ दुः–गे । वै । ह॒न्ता॑ । अ॒वो॒च॒थाः । व॒रा॒हः ।
अ॒यम् । वा॒म॒म्मो॒ष इति॑ वा॒म–मो॒षः ॥२१॥ स॒प्ता-

---

विष्णुर्भूत्वा रूपं च वैष्णवं व्यापनशीलमव्यक्तलक्षणं कृत्वा देवेभ्यः अगच्छत् । ततस्स पृथिवीं प्राविशत् । तं यज्ञं देवाः इन्द्रादयः हस्तान् संरभ्य अन्योन्यस्य गृहीत्वा वेष्टित्वा तमैच्छन् । यद्वा—हस्तान् संरभ्य संसृष्टान् वितत्य तं ग्रहीतुमैच्छन् । इन्द्रस्तु तं यज्ञमुपर्युपरि यत्रयत्र गतः तत्रतत्रोपर्यत्यक्रामत् अतिक्रम्य स्थितः । 'उपर्यध्यधस्सामीप्ये' इति द्विर्वचनम्, 'अनुदात्तं च' इति द्वितीयस्यानुदात्तत्वम् ॥

[6]स यज्ञोऽब्रवीत्—को यज्ञं मामुपर्युपर्यत्यक्रमीदिति । अद्यतनत्वाल्लङ् भवति । लुङि 'नेटि' इति वृद्ध्यभावः । अथोचे—

सप्तानां गिरीणां परस्ताद्वित्तं वेद्य-
मसुराणां बिभर्ति तं जहि यदि
दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य
सप्त गिरीन्भित्वा तमहंथ्सोऽब्रवीद्दुर्गा-
द्वा आहर्ताऽवोचथा एतमा हरेति त-
मेभ्यो यज्ञ एव यज्ञमाऽहरद्यत्तद्वित्तं

नाम् । गिरीणाम् । परस्तात् । वित्तम् । वेद्यम् । असुराणाम् । बिभर्ति । तम् । जहि । यदि । दुर्ग इति दुः—गे । हन्ता । असि । इति । सः । दर्भपुञ्जीलमिति दर्भ—पुञ्जीलम् । उद्वृह्येत्युत्—वृह्य । सप्त । गिरीन् । भित्वा । तम् । अहन्न् । सः । अब्रवीत् । दुर्गादिति दुः—गात् । वै । आहर्तेत्या—हर्ता । अवोचथाः । एतम् । एति । हर । इति । तम् । एभ्यः । यज्ञः । एव । यज्ञम् । एति । अहरत् । यत् । तत् । वित्तम् । वेद्यम् । असुराणाम् । अविन्दन्त ।

---

अहं दुर्गे हन्ता यत्रान्येन केन चिद्गन्तुं न शक्यते तत्रागन्तुं तत्र न्यञ्चं गन्तुं शक्तोहं कश्चिदिति । ‘सुदुरोरधिकरणे’ इति डः । हन्तेस्साधुकारिणि तृन् । एवमुक्त्वा इन्द्र एव पुनरूचे—अथ कस्त्वमिति । अथ यज्ञ ऊचे—अहं तादृशाद्दुर्गादाहर्तेति दुर्गादिष्टमाहर्तुं समर्थोहं कश्चिदिति । पूर्ववत् तृनि

वेद्यमसुराणामविन्दन्त तदेकं वेद्यै

तत् । एकम् । वेद्यै । वेदित्वमिति वेदि–त्वम् ।

---

'तादौ च' इति गतेः प्रकृतिस्वरत्वमुभयत्र । एवमुक्त्वा स एवाब्रवीद्यज्ञः—दुर्गे हन्तेत्यवोचथास्त्वमिदानीम् । पूर्ववदद्यतनत्वात् लुङेव । सत्यमुच्यते वराहः सुत्यायज्ञाख्यो वरणीयदिवसात्मा वाममोषः वननीयानां धनानां मोषकः वननीयो वा मोषकः सप्तानां गिरीणामहरात्मनां दुर्गाणां परस्तात्परतः असुराणां वित्तं वसु वेद्यं वेदितव्यं वेत्तुं वा शक्यं यावत्किंचित्तत्सर्वं बिभर्ति रक्षति तं जहीति दुर्गे हन्ताऽसि अहं दुर्गे हन्तेति यत्त्वयोक्तं यदि तत्सत्यमिति । स इन्द्रः दर्भपुञ्जीलमुद्वृह्य आदाय तेन सप्त गिरीन् भित्त्वा तमहन् तं हतवान् । हत्वा च सोऽब्रवीदिन्द्रः—त्वमपि दुर्गादाहर्तेत्यवोचथाः तद्यदि सत्यं यदि तथा तत्कर्तुं शक्यते तमाहर यमहं हतवानिति । अथ तं यज्ञं वराहाख्यं यज्ञ एव विष्णुरूपः एभ्यो देवेभ्य आहरत् । ततो देवा असुराणां वित्तं वेद्यं यावत्किंचित् वराहो बिभर्ति स्म तत्सर्वमविन्दन्त, यतस्तेन तत्सर्वं देवेभ्यो दत्तमित्यर्थाद्गम्यते । यदाह—यत्तदित्यादि । अहो एषां संगतं यदिदमसुराणां वित्तं वेद्यं देवा अविन्दन्त तदिदं वेद्या वेदित्वमिति । अयमभिप्रायः—वेदिलक्षणविशिष्टसंबन्धसमासादितमहिमातिशयाङ्गिना यज्ञेन यद्वित्तं वेद्यं देवा अलभन्त तदङ्गेन वेद्या अलभन्तेत्यपि हि वक्तुं शक्यते, तस्माद्वित्तं वेद्यते लभ्यते अनयेति वेदिः । करणे 'इन् सर्वधातुभ्यः' इतीन्प्रत्ययः । केचिदाहुः—विद्यत इति वेदिरिति कर्मणि इन्प्रत्ययः । यदा हि यज्ञो देवैरलभ्यत तदा वेदिरपि लब्धेति तेषां यत्तद्वित्तं वेद्यमित्यस्योपन्यासोऽनर्थकस्स्यात् । तस्मात् यत्तदसुराणां वित्तं

वेदित्वमसुराणाम् ॥ २२॥ वा इय-
मग्रं आसीद्यावदासीनः परापश्यं-
ति तावद्देवानां ते देवा अब्रुवन्न-
स्त्वेव नोऽस्यामपीति कियद्वो दा-
स्याम इति यावदियः सलावृकी

[7]असुराणाम् ॥ २२ ॥ वै । इयम् । अग्रे । आ-
सीत् । यावत् । आसीनः । परापश्यतीति परा-
पश्यति । तावत् । देवानाम् । ते । देवाः । अब्रुव-
न्न् । अस्तु । एव । नः । अस्याम् । अपीति । इ-
ति । कियत् । वः । दास्यामः । इति । यावत् । इयम् ।
सलावृकी । त्रिः । परिक्रामतीति परि-क्रामति ।

---

वेद्यं यज्ञेन देवा अलभन्त तत्तदङ्गस्य वेद्या वेदित्वं तद्धारव-
मिति वेदितव्यम् । इदं तावदेकं वेद्या वेदित्वम् ॥

[7]अथापरं वेदित्वं दर्शयितुमाह—असुराणां वा इयमित्यादि ॥ इयं पृथिवी प्रथममग्रे असुराणामासीत् । यावदासीनः परापश्यति दूरं पश्यति तावद्देवानामासीत् । ते देवा अब्रुवन्—अस्यामितरस्यामपि नोस्माकं किञ्चिदस्त्वेव अवश्यमस्त्वेवेति । असुरा ऊचुः—कियद्वो युष्मभ्यं दास्याम इति । 'किमिदम्भ्यां वोघः', 'इदंकिमोरीश्की', छान्दसो वर्णलोपः । देवा ऊचिरे—यावदियं सलावृकी सालावृकीति केचित् । गजमतंगजवत् । मृगा-

त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रस्सलावृकी रूपं कृत्वेमां त्रिस्सर्वतः पर्यक्रामत्तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वम् ॥ २३

सा वा इयꣳ सर्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते

तावत् । नः । दत्त । इति । सः । इन्द्रः । सलावृकी । रूपम् । कृत्वा । इमाम् । त्रिः । सर्वतः । परीति । अक्रामत् । तत् । इमाम् । अविन्दन्त । यत् । इमाम् । अविन्दन्त । तत् । वेद्यै । वेदित्वमिति वेदि—त्वम् ॥ २३ ॥ सा । वै । इयम् । सर्वा । एव । वेदिः । इयति । शक्ष्यामि । इति । तु । वै । अव-

---

लीत्यन्ये । वानरीत्यपरे । त्रिः परिक्रामति अश्रान्ता त्रिः परिक्रामति तावन्नोऽस्मभ्यं दत्तेति । अथ स इन्द्रः तथा देवैः कृतसंकेतः सलावृकी भूत्वा रूपं रूपं च तस्याः कृत्वा परिगृह्य इमां पृथिवीं सर्वतस्सर्वां त्रिः पर्यक्रामत्, तत्तस्मादिमां पृथिवीं सर्वां देवा अविन्दन्त । इमां पृथिवीम् । तदप्येकं वेद्या वेदित्वं, तदवयवत्वात् । कर्मणीन् प्रत्ययः । सा खल्वियं सर्वैव पृथिवी वेदिः, विन्दतिकर्मत्वात् । विशेषस्तु—इयति एतावति प्रदेशे यष्टुं शक्यमिति तद्योग्यमवकाशमवमाय मित्वा ता वेदिं मन्यमानास्तत्र यजन्ते यजमानाः । तु वै इति द्वौ निपातौ, वर्णलोपश्छान्दसः ॥

त्रिꣳशत्पदानि पश्चात्तिरश्री भवति षट्त्रिꣳशत्प्राची चतुर्विꣳशतिः पुरस्तात्तिरश्री दशदश सं पद्यन्ते दशा-

मायेत्यव–मायं । यजन्ते । [9]त्रिꣳशत् । पदानि । पश्चात् । तिरश्ची । भवति । षट्त्रिꣳशदिति षट्–त्रिꣳशत् । प्राची । चतुर्विꣳशतिरिति चतुः–विꣳशतिः । पुरस्तात् । तिरश्री । दशदशेति दश–दश ।

---

[8]अधुना कियानवकाशो वेदित्वेन गृह्यते इति तत्प्रमाणं दर्शयितुमाह—त्रिंशत्पदानीति ॥ तस्मादपरस्यां दिशि त्रिंशत्पदानि । तिरश्री दक्षिणोत्तरायता सौमिकी वेदिर्भवति । तिर्यगञ्चतीति ऋत्विगादिना क्विनि लुप्तयोर्नकाराकारयोः 'चौ' इति पूर्वपदान्तोदात्तत्वम् । षट्त्रिंशत्पदानि प्राची भवति । पुरस्तात्पूर्वस्यां दिशि चतुर्विंशतिपदानि तिरश्री भवति । एवं सा मातव्या । प्राग्वंशस्य मध्यमाल्ललाटिकात् त्रीन् प्राचः प्रक्रमान् प्रक्रम्य शङ्कुन्निहन्ति । ततः पुरस्तात् षट्त्रिंशतिशङ्कुव्यापिनी रेखा प्रष्ठ्या । अथ षट्त्रिंशिकायां रज्ज्वां अष्टादशोपसमस्यापरस्मादन्ताद्वादशसु लक्षणं पञ्चदशसु लक्षणम् । प्रष्ठ्यन्तयोरन्तौ नियम्य पञ्चदशिकेन दक्षिणावायम्य शङ्कुं निहन्ति । एवमुत्तरतस्ते श्रोणी विपर्यस्तया तया अंसावुत्पादयेत् । पञ्चदशिकेन दक्षिणावायम्य शङ्कुं निहन्ति । एवमुत्तरतस्तावंसाविति । दशदशेति । त्रिंशत् षट्त्रिंशत् चतुर्विंशतिश्चेत्येकत्र पिण्डिता

क्षरा विराडन्नं विराड्विराजैवान्नाद्य-
मव रुन्ध उद्धन्ति यदेवास्या अमे-
ध्यं तदप हन्त्युद्धन्ति तस्मादोषध-
यः परा भवन्ति बर्हिस्तृणाति त-
स्मादोषधयः पुनरा भवन्त्युत्तरं ब-

समिति। पद्यन्ते । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् । विराडिति वि—राट् । विराजेति वि—राजा । एव । अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धे । [9]उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । उदिति । हन्ति । तस्मात् । ओषधयः । परेति । भवन्ति । बर्हिः । स्तृणाति । तस्मात् । ओषधयः । पुनः । एति । भवन्ति । [10]उत्तरमित्यु-

---

नवतिः । सा च दशभागहारेण ह्रियमाणा शुद्धं भागं ददातीत्यर्थः । अन्नं विराडिति । अन्नसाधनत्वात् । अन्नाद्यमन्नस्यादनम् । छान्दसो यत्, कृदुत्तरपदप्रकृतिस्वरत्वम्, 'यतोऽनावः' ॥

[9]उद्धन्तीति विधिः ॥ अमेध्यममेधार्हम् । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । गुणान्तरबाधनार्थं द्वितीयं विधानम् । उद्धननेनौषधयो नश्यन्ति । तस्मात् बर्हिस्स्तृणातीति विधिः । तस्मादोषधयः पुनरुद्भवन्ति ॥

[10]उत्तरमित्यादिविधिः ॥ सौमिकस्योपरि पाशुकं बर्हिस्तृ-

र्हिषं उत्तरबर्हिस्स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोयजमानादुत्तरः ॥२४

त्—तरम्। बर्हिषः। उत्तरबर्हिरित्युत्तर—बर्हिः। स्तृणाति। प्रजा इति प्र—जाः। वै। बर्हिः। यजमानः। उत्तरबर्हिरित्युत्तर—बर्हिः। यजमानम्। एव। अयजमानात्। उत्तरमित्युत्—तरम्। करोति। तस्मात्। यजमानः। अयजमानात्। उत्तर इत्युत्—तरः॥ २४ ॥

रुन्धे वाममोषो वेदित्वमसुराणां वेदित्वं भवन्ति पञ्चविंशतिश्च ॥ ४ ॥

---

णाति । उत्तरं च तद्बर्हिश्चेत्युत्तरबर्हिः । प्रजा वा इत्यादि । गतम्* ॥

इति षष्ठे द्वितीये चतुर्थोनुवाकः.

---

*सं. २-६-५.6

**यद्वा अनीशानो भारमादत्ते वि वै स लिशते यद्वादश साह्नस्योपसद-स्स्युस्तिस्रोहीनस्य यज्ञस्य विलोम क्रियेत तिस्र एव साह्नस्योपसदो**

[1]यत् । वै । अनीशानः । भारम् । आदत्त इत्या—दत्ते । वीति । वै । सः । लिशते । यत् । द्वादश । साह्नस्येति स—अह्नस्य । उपसद इत्युप—सदः । स्युः । तिस्रः । अहीनस्य । यज्ञस्य । विलोमेति वि—लोम । क्रियेत । [2]तिस्रः । एव । साह्न-

---

[1]यद्वा अनीशान इत्यादि ॥ यद्यनीशानस्तादृशं भारं वोढुमक्षमस्सन् भारं योग्यमादत्ते गृह्णाति स खलु विलिशते अल्पीभवति क्षीयते इति यावत् । लिश अल्पीभावे । तस्माद्यदि साह्नस्य एकाहस्य द्वादशोपसदः स्युः, तदा सोतिभाराद्विलिशते ततो यजमानो म्रियेत, तस्मात्तिस्र उपसद उपैतीति पूर्वमेवावोचामेति तस्यैवेदं समर्थनम् । अह्ना सह वर्तते इति साह्नः क्रतुः, 'अह्नोह्न एतेभ्यः' इत्यच्समासान्तः, अह्नादेशश्च । अथ यदि तिस्रोहीनस्याह्नां समूहस्य क्रतोरुपसदस्स्युः, तदा यज्ञस्य विलोम विपरीतं क्रियेत । शक्तस्याशक्तत्वख्यापनं वैपरीत्यम् । ततश्चाशक्त एव क्रतुस्स्यादह्नां समूहः । 'अह्नः खः क्रतौ' इति खः ॥

[2]तिस्र एवेत्यादि ॥ तस्मात्तिस्र एव साह्नस्योपसदो द्वाद-

द्वादशाहीनस्य यज्ञस्य सवीर्यत्वाया-
थो सलोम क्रियते वत्सस्यैकस्स्त-
नो भागी हि सोथैकꣳ स्तनं व्रत
मुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै
॥ २५ ॥ क्षुरपवि नाम व्रतं येन प्र-

स्येति स—अह्नस्य । उपसद इत्युप—सदः । द्वादश । अहीनस्य । यज्ञस्य । सवीर्यत्वायेति सवीर्य—त्वाय । अथो इति । सलोमेति स—लोम । क्रियते । वत्सस्य । एकः । स्तनः । भागी । हि । सः । अथ । एकम् । स्तनम् । व्रतम् । उपेति । एति । अथ । द्वौ । अथ । त्रीन् । अथ । चतुरः । एतत् । वै ॥ २५ ॥ क्षुरपवीति क्षुर—पवि । नाम । व्रतम् । येन । प्रेति । जातान् । भ्रातृव्यान् । नुदते । प्रती-

शाहीनस्येति पूर्वमेवावोचामेति भावः । यज्ञस्येत्यादि । एवं क्रियमाणे यज्ञस्य साह्नस्य शक्यभारभरणात् सवीर्यत्वाय भवति । अथो अपि च अहीनस्य यज्ञस्य सलोम अनुरूपमेव क्रियते । उक्तं व्रतविशेषनिबन्धनं अवान्तरदीक्षायास्संज्ञाद्वयं आराग्रा परोवरीयसीति ॥

[3]इदानीं तु तयोर्व्रतयोः स्वरूपं संज्ञां च प्रदर्शयितुमाह—वत्सस्येत्यादि ॥ वत्सस्य एकस्तनस्स्वभूतः कुतः भागी हि सः

जातान्भ्रातृव्यान्नुदते प्रति जनिष्य-
माणानथो कनीयसैव भूय उपैति
चतुरोग्रे स्तनान्व्रतमुपैत्यथ त्रीनथ
द्वावथैकमेतद्वै सुजघनं नाम व्रतं
तपस्यँ सुवर्ग्यमथो प्रैव जायते प्र-

ति । जनिष्यमाणान् । अथो इति । कनीयसा ।
एव । भूयः । उपेति । एति । चतुरः । अग्रे । स्त-
नान् । व्रतम् । उपेति । एति । अथ । त्रीन् । अ-
थ । द्वौ । अथ । एकम् । एतत् । वै । सुजघनमि-
ति सु-जघनम् । नाम । व्रतम् । तपस्यम् । सुव-
र्ग्यमिति सुवः-ग्यम् । अथो इति । प्रेति । एव ।
जायते । प्रजयेति प्र-जया । पशुभिरिति पशु-

सोपि भागी, न केवलं गोस्वामी यजमान एव । तस्मादेकं स्तनं तस्मै दत्वा अथान्यतरेष्वितरेष्वेव एकस्तनं व्रतमुपैति । अथ द्वावित्यादि । पूर्ववत् 'चतुरश्शसि' इत्यन्तोदात्तत्वम् । एतद्वा इत्यादि । क्षुरवत्पुनातीति क्षुरपविः, 'अच इः' इतिप्रत्ययः, उपमानपूर्वपदप्रकृतिस्वरत्वम् । संज्ञा चेयं, क्षुरग्रहणेन चैहिक-फलहेतुत्वमस्य प्रतिपाद्यते । यथोक्तं—'यः कामयेतास्मिन्मे लोकेऽर्धुकं स्यात्'* इति । तदेवाह—येन प्रजातानित्यादि । अन्य

*सं. ६-२-३.11

जया पशुभिर्यवागू राजन्यस्य व्रतं
क्रूरेव वै यवागूः क्रूर इव ॥ २६ ॥

भिः । [4]यवागूः । राजन्यस्य । व्रतम् । क्रूरा । इव ।
वै । यवागूः । क्रूरः । इव ॥ २६ ॥ राजन्यः । व-

---

आहुः—पविशब्देन मुखमुच्यते । क्षुरस्य पविरिव पविर्यस्येति 'सप्तम्युपमानपूर्वपदस्य' इति बहुव्रीहिः । क्षुरधारा नामैतद्व्रतं अकात्स्न्र्येन सद्यश्शातकमिति । तदेवाह—येनेति । येन जातान् भ्रातृव्यान् प्रणुदते प्रतिनिवर्तयति तदिदं क्षुरपविनाम व्रतमिति । यद्वा—येन कारणेन जातान् प्रणुदते जनिष्यमाणांश्च प्रणुदते तेनेदं क्षुरपवीत्याचक्षते इति । अथो अपिच कनीयसा भूय उपैति अल्पतेरण बहुतरं प्राप्नोति, लोके ह्यल्पीयसा महीयः प्राप्नोति बीजेनेव पादपम् । 'युवाल्पयोः कनन्यतरस्यां' इति कनादेशः । एवमिदमपीति । सुजघनं नामैतत् व्रतं तपस्यं सुवर्ग्यं च तपस्स्वर्गयोर्निमित्तम् । 'गोद्व्यचः' इति यत् । यद्वा—तपसे स्वर्गाय च हितम् । गवादित्वाद्यत् । सुजघनमिति संज्ञानिर्वचनं तु—शोभनोस्य जघनश्चरमो भागः महाफलत्वादिति । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अथो अपिच प्रजया पशुभिश्च प्रजायते अनेन यजमानः, सुजघनत्वेन प्रजननहेतुत्वात् ॥

[4]यवागूरिति ॥ राजन्यस्य । 'राजश्वशुराद्यत्' राज्ञोपत्ये जातिग्रहणमिति । क्रूरेवेति । भोक्तुः पीडाकरत्वात् । राजन्योपि क्रूरः पीडारुचित्वात् । वज्रस्येदं रूपं यत्क्रूरत्वं नाम,

राजन्यो वज्रस्य रूपꣳ समृद्ध्या
आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं
पुष्ट्यै पयो ब्राह्मणस्य तेजो वै ब्रा-
ह्मणस्तेजः पयस्तेजसैव तेजः पय
आत्मन्धत्तेऽथो पयसा वै गर्भा वर्ध-

ज्रस्य । रूपम् । समृद्ध्या इति सं—ऋद्ध्यै । [5]आमि-
क्षा । वैश्यस्य । पाकयज्ञस्येति पाक—यज्ञस्य ।
रूपम् । पुष्ट्यै । [6]पयः । ब्राह्मणस्य । तेजः । वै ।
ब्राह्मणः । तेजः । पयः । तेजसा । एव । तेजः ।
पयः । आत्मन्न् । धत्ते । अथो इति । पयसा । वै ।
गर्भाः । वर्धन्ते । गर्भः । इव । खलु । वै ।

---

तस्मात्समृद्ध्यै भवति स्वयं क्रूरस्य क्रूरेण योगः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[5]आमिक्षेति ॥ यत्संवर्तते साऽऽमिक्षेति । विशोपत्यं वैश्यः, गर्गादित्याद्यञ् । पाकयज्ञस्येदं रूपं, तस्य तथाविधद्रव्यसाध्यत्वात् । पक्केन अन्नादिना यज्ञः पाकयज्ञः, कृदुत्तरपदप्रकृतिस्वरत्वम् । तस्मात्पुष्ट्यै भवति ॥

[6]पयो ब्राह्मणस्येति ॥ तेजस्वी ब्राह्मणः, तेजः पयः, तस्मादात्मीयेन तेजसा सह तेजनं पय आत्मन् धत्ते । पूर्ववत्

न्ते गर्भ इव खलु वा एष यद्दीक्षि-
तो यदस्य पयो व्रतं भवत्यात्मानमे-
व तद्वर्धयति त्रिव्रतो वै मनुरासी-
द्विव्रता असुरा एकव्रताः ॥ २७ ॥
देवाः प्रातर्मध्यन्दिने सायं तन्मनो-

एषः । यत् । दीक्षितः । यत् । अस्य । प-
यः । व्रतम् । भवति । आत्मानम् । एव । तत् ।
वर्धयति । [7]त्रिव्रत इति त्रि-व्रतः । वै । मनुः । आ-
सीत् । द्विव्रता इति द्वि-व्रताः । असुराः । एकव्र-
ता इत्येक-व्रताः ॥ २७ ॥ देवाः । प्रातः । मध्य-
न्दिने । सायम् । तत् । मनोः । व्रतम् । आसीत् ।

---

ङेर्लुक्, नलोपाभावश्च । अथो अपि च । पयसा वा इत्यादि । गतम् ॥

[7]त्रिव्रत इति ॥ त्रिषु लोकेषु व्रतं भोजनमस्येति त्रिव्रतः, द्वयोः द्विव्रतः, एकस्मिन् एकव्रतः । व्रतसमानाधिकरणा वा बहुव्रीहयः । तत्र मनोः कालत्रयमाह—प्रातरित्यादि । तन्मनोः प्रातर्मध्यन्दिने सायं च यस्मादासीत् तस्मात्त्रिव्रतो मनुरासीदिति । द्वितीयपक्षे व्रतस्य त्रैविध्याय कालभेदप्रदर्शनम् । मध्ये भवः कालो मध्यन्दिनं, प्रातरादिना साहचर्यादह्न इति गम्यते । 'मध्यो मध्यन्दिनं चास्मात्' । पाकयज्ञस्येदं रूपं, तस्य तेषु

व्रतमासीत्पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायं चासुराणां निर्मध्यं क्षुधो रूपं ततस्ते पराऽभवन्मध्यन्दिने मध्यरात्रे देवानां ततस्तेऽभवन्त्सुवर्गं लोकमायन् यदस्य मध्यन्दिने मध्यरात्रे व्रतं भवति मध्यतो

पाकयज्ञस्येति पाक-यज्ञस्य । रूपम् । पुष्ट्यै । प्रातः । च । सायम् । च । असुराणाम् । निर्मध्यमिति निः-मध्यम् । क्षुधः । रूपम् । ततः । ते । परेति । अभवन् । मध्यन्दिने । मध्यरात्र इति मध्य-रात्रे । देवानाम् । ततः । ते । अभवन् । सुवर्गमिति सुवः-गम् । लोकम् । आयन् । यत् । अस्य । मध्यन्दिने । मध्यरात्र इति मध्य-रात्रे । व्रतम् । भवति । मध्यतः । वै । अन्नेन । भुञ्जते । मध्यतः।

---

त्रिषु लोकेषु कालेषु विधानात् । तस्मात्ते पुष्ट्यै भवन्ति । प्रातश्च सायं चेति । प्रातस्सायं चासुराणां भोजनमासीत्, तस्माद्द्विव्रता इति । निर्मध्यं मध्यशून्यम् । निरुदकादिरुत्तरपदान्तोदात्तः । क्षुध एतद्रूपं, यत्र क्षुत्तीव्रा भवति तत्र भोजनस्य लुप्तत्वात् । ततस्ते असुराः पराभवन् नष्टाः । मध्यन्दिने इति । मध्यन्दिने व्रतं भोजनमेकं मध्यरात्रे चैषामेकमिति एकव्रताः ।

**वा अन्नेन भुञ्जते मध्यत एव तदू-**
**र्जं धत्ते भ्रातृव्याभिभूत्यै भवत्यात्म-**
**ना ॥ २८ ॥ परांऽस्य भ्रातृव्यो भ-**
**वति गर्भो वा एष यद्दीक्षितो यो-**
**निर्दीक्षितविमितं यद्दीक्षितो दीक्षि-**

**एव । तत् । ऊर्जम् । धत्ते । भ्रातृव्याभिभूत्या इ-**
**ति भ्रातृव्य-अभिभूत्यै । भवति । आत्मना ॥२८॥**
**परेति । अस्य । भ्रातृव्यः । भवति । [8]गर्भः । वै ।**
**एषः । यत् । दीक्षितः । योनिः । दीक्षितविमित-**
**मिति दीक्षित-विमितम् । यत् । दीक्षितः । दीक्षि-**
**तविमितादिति दीक्षित-विमितात् । प्रवसेदिति**

---

ततस्ते अभवन् भूतिमन्तस्स्वर्गं च गताः । यदस्येत्यादि । यद्य-स्मादस्य मध्यन्दिने मध्यरात्रे व्रतं भवति तस्मान्मध्यतो मध्यमे वयसि अन्नेन सह मांसादि प्रभूतं भुञ्जते मध्यमे एव स्थाने ऊर्जमन्नं धत्ते स्थापयति । 'आद्यादिभ्यस्तसिः' । तस्माद्भ्रातृ-व्याभिभूत्यै भवति । दासीभारादिः । भवत्यात्मनेत्यादि । गतम्* ॥

[8]गर्भ इत्यादि ॥ गर्भस्थानीयो दीक्षितः योनिस्थानीयं दीक्षि-तविमितम् । दीक्षितस्य विमितं यत्र यत्र दीक्षितो विमीयते विशेषेण प्रक्षिप्यते योनाविव गर्भः । डु मिञ् प्रक्षेपणे । शालायां च दीक्षितो विमीयते तस्मात्तत्स्थानाद्यदि प्रवसेत् योनेर्गर्भस्स्रावसमं तत्स्यात् तस्मान्न प्रवस्तव्यमात्मनो गोपीथाय

---

*सं. ६-२-२.[10]

तद्विमितात्प्रवसेद्यथा योनेर्गर्भस्स्क-
न्दति तादृगेव तन्न प्रवस्तव्यमात्म-
नो गोपीथायैष वै व्याघ्रः कुलगो-
पो यदग्निस्तस्माद्यद्दीक्षितः प्रवसे-
थ्स एनमीश्वरोनूत्थाय हन्तोर्न प्र-
वस्तव्यमात्मनो गुप्त्यै दक्षिणतश्शा-

प्र–वसेत् । यथा । योनेः । गर्भः । स्कन्दति । तादृक् । एव । तत् । न । प्रवस्तव्यमिति प्र–वस्तव्यम् । आत्मनः । गोपीथाय । एषः । वै । व्याघ्रः । कुलगोप इति कुल–गोपः । यत् । अग्निः । तस्मात् । यत् । दीक्षितः । प्रवसेदिति प्र–वसेत् । सः । एनम् । ईश्वरः । अनूत्थायेत्यनु–उत्थाय । हन्तोः । न । प्रवस्तव्यमिति प्र–वस्तव्यम् । आत्मनः । गुप्त्यै । [9]दक्षिणतः । शये । एतत् । वै । यजमानस्य । आ-

---

अविनाशाय स्थापनार्थम् । एष वा इति । अग्निः व्याघ्रस्थानीयः कुलस्य च गोप्ता भवति । तस्मादप्रमत्तेनोपचरितव्यं, दुराराधत्वादुपकारित्वाच्च । तस्मादीदृशमेनमुत्सृज्य यदि प्रवसेत् एनमनूत्थाय स्वयमपि स्वस्थानादुच्चलितो भूत्वा हन्तोः हन्तुमीश्वरः प्रभुः । तस्मान्न प्रवस्तव्यमात्मनो गुप्त्यै स यथात्मानं गोपायेत् । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन्प्रत्ययः ॥

[9]दक्षिणतश्शय इति विधिः ॥ आहवनीयस्य दक्षिणतश्शयीत

य एतद्वै यजमानस्यायतनꣳ स्व एवायतने शयेऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये॥२१॥

यतनमित्या–यतनम् । स्वे । एव । आयतन इत्या–यतने । शये । [10]अग्निम् । अभ्यावृत्येत्यभि–आ–वृत्य । शये । देवताः । एव । यज्ञम् । अभ्यावृत्येत्यभि–आवृत्य । शये ॥ २१ ॥

एतद्वै क्रूर इवैकव्रता आत्मना यजमानस्य त्रयोदश च ॥ ५ ॥

---

यजमानः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । एतत् यजमानस्यायतनं, तस्मात्स्व एवायतने शये शयनं कृतं भवति ॥

[10]अग्निमित्यादिविधिः ॥ अग्निमभ्यावृत्याभिमुख्येनावृत्य शयीत अग्न्यभिमुख इत्यर्थः । देवताश्च यज्ञं चाभ्यावृत्य शयनं कृतं भवति । न ते पृष्ठतः कृता भवन्ति ॥

इति षष्ठे द्वितीये पञ्चमोनुवाकः.

पुरो हविषि देवयजने याजयेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जयेदित्येतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यत्युपैनमुत्तरो यज्ञो नमत्यभि

पुरोहविषीति पुरः—हविषि । देवयजन इति देव—यजने । याजयेत् । यम् । कामयेत । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः । नमेत् । अभीति । सुवर्गमिति सुवः—गम् । लोकम् । जयेत् । इति । एतत् । वै । पुरोहविरिति पुरः—हविः । देवयजनमिति देव—यजनम् । यस्य । होता । प्रातरनुवाकमिति प्रातः—अनुवाकम् । अनुब्रुवन्नित्यनु—ब्रुवन् । अग्निम् । अपः । आदित्यम् । अभीति । विपश्यतीति वि—पश्यति । उपेति । एनम् । उत्तर इत्युत् तरः । यज्ञः । नमति । अभीति । सुवर्ग-

---

[1]पुरोहविषीत्यादयः काम्याः । तत्र पुरोहविरादयश्शब्दाः वक्ष्यमाणानां नामानि । उत्तरो यज्ञः उत्तरः क्रतुः उक्थ्यादिः । अथ पुरोहविषो लक्षणमाह—एतदित्यादि । यस्य हविर्धाने आसीनः प्रातरनुवाकमनुब्रुवन् अग्निमाहवनीयं अपश्चादित्यं च एतत्त्रयमा-

सुवर्गं लोकं जयत्याप्ते देवयजने याजयेद्भ्रातृव्यवन्तं पन्थां वाऽधिस्पर्शयेत्कर्तं वा यावन्नानसे यातवै ॥३०॥ न रथायैतद्वा आप्तं देव-

मिति सुवः—गम् । लोकम् । जयति । [2]आप्ते । देवयजन इति देव—यजने । याजयेत् । भ्रातृव्यवन्तमिति भ्रातृव्य—वन्तम् । पन्थाम् । वा । अधिस्पर्शयेदित्यधि—स्पर्शयेत् । कर्तम् । वा । यावत् । न । अनसे । यातवै ॥ ३० ॥ न । रथाय । एतत् ।

---

भिमुख्येन पश्यति । एतत्पुरोहविः देवयजनम् । हूयतेऽस्मिन्निदं अस्मै इति च हवींष्यग्न्यादयः पुरस्ताद्यस्मिन्निति ॥

[2]आप्ते देवयजने याजयेद्भ्रातृव्यवन्तं भ्रातृव्यैराप्तमित्यर्थः । तत्स्वरूपमाह—पन्थामित्यादि । पन्थां मार्गं वा अधिस्पर्शयेत् अधिष्ठायाभिभूय स्पर्शयेत् कर्तं वा गर्तं वाऽधिस्पर्शयेत् तावति समीपे तत्कुर्यात् यावदनसे रथाय वा यातुं न पर्याप्तम् । पर्याप्तौ चतुर्थी । तुमर्थे तवैप्रत्ययः । यद्वा—यावदन्तरे सति अनसे वा रथाय वा न यातवै यातुं ताभ्यां न शक्यते । तृतीयार्थे चतुर्थी, तादर्थ्ये वा, 'कृत्यार्थे तवैकेन्' इति तवैप्रत्ययः, 'अन्तश्च तवै युगपत्' इत्याद्यन्तयोर्युगपदुदात्तत्वम्, 'नलोकाव्यय' इति षष्ठीप्रतिषेधः । व्यत्ययेन वा षष्ठ्यर्थे चतुर्थी । द्वितीयायामपि व्यत्ययेन पथ आकारः, नकारलोपो वा । एतदिति ।

यजनमाप्नोत्येव भ्रातृव्यं नैनं भ्रा-
तृव्य आप्नोत्येकोन्नते देवयजने या-
जयेत्पशुकाममेकोन्नताद्वै देवयजना-
दङ्गिरसः पशूनसृजन्तान्तरा सदो-
हविर्धाने उन्नतꣳ स्यादेतद्वा एको-

वै । आप्तम् । देवयजनमिति देव-यजनम् । आप्नोति । एव । भ्रातृव्यम् । न । एनम् । भ्रातृव्यः । आप्नोति । [3]एकोन्नत इत्येक-उन्नते । देवयजन इति देव-यजने । याजयेत् । पशुकाममिति पशु-कामम् । एकोन्नतादित्येक-उन्नतात् । वै । देवयजनादिति देव-यजनात् । अङ्गिरसः । पशून् । असृजन्त । अन्तरा । सदोहविर्धाने इति सदः-हविर्धाने । उन्नतमित्युत्-नतम् । स्यात् । एतत् । वै । एकोन्नतमित्येक-उन्नतम् । देवयजनमिति देव-य-

---

आप्नोतीत्याप्तं पन्थानं कर्तं वाऽऽप्नोतीति कृत्वा तत्सामर्थ्याद्यजमानोपि भ्रातृव्यमाप्नोति स्वीकरोति, भ्रातृव्यश्चैनं नाप्नोति । न हि पन्थां गर्तं वा देवयजनसमीपे, अपि तु तयोः समीपे देवयजनमिति अनेनैव तयोराप्तिरिति कृत्वा ॥

[3]एकोन्नत इति ॥ पशूनामेकोन्नतत्वात् सादृश्याच्च पशुसाधनम् । एक उन्नतोऽवयवो यस्येति एकोन्नते । 'शीलिकामि'

न्नतं देवयजनं पशुमानेव भवति त्र्युंन्नते देवयजने याजयेत्सुवर्गका- मं त्र्युंन्नताद्वै देवयजनादङ्गिरसस्सु- वर्गं लोकमायन्नन्तराऽऽहवनीयं च हविर्धानं च ॥ ३१ ॥ उन्नतꣳ स्या- दन्तरा हविर्धानं च सदश्चान्तरा स-

जनम् । पशुमानिति पशु–मान् । एव । भवति । [4]त्र्युंन्नत इति त्रि–उन्नते । देवयजन इति देव–य- जने । याजयेत् । सुवर्गकाममिति सुवर्ग–कामम् । त्र्युंन्नतादिति त्रि–उन्नतात् । वै । देवयजनादिति देव–यजनात् । अङ्गिरसः । सुवर्गमिति सुवः–गम् । लोकम् । आयन् । अन्तरा । आहवनीयमित्या– हवनीयम् । च । हविर्धानमिति हविः–धानम् । च ॥ ३१ ॥ उन्नतमित्युत्–नतम् । स्यात् । अन्तरा । हविर्धानमिति हविः–धानम् । च । सदः । च । अन्त-

---

इति कर्मेर्णः । तल्लक्षणमाह—अन्तरेति । सदोहविर्धानयोर्मध्य- मुच्छ्रितं स्यात् । 'अन्तराऽन्तरेण' इति द्वितीया ॥

[4]त्र्युन्नते इति ॥ त्रीणि स्थानान्युन्नतानि अस्मिन्निति । अने- कोन्नतसाम्यात्स्वर्गसाम्यमिति स्वर्गसाधनम् । लक्षणमाह—अन्तरेति । आहवनीयहविर्धानयोः हविर्धानसदसोः सदोगार्हपत्ययोश्च मध्यमुन्नतं

दंश्च गार्हपत्यं चैतद्वै त्र्युन्नतं देवय-
जनꣳ सुवर्गमेव लोकमेति प्रतिष्ठिते
देवयजने याजयेत्प्रतिष्ठाकाममेतद्वै
प्रतिष्ठितं देवयजनं यत्सर्वतस्समं प्र-
त्येव तिष्ठति यत्रान्याअन्या ओषधयो

रा । सदः । च । गार्हपत्यमिति गार्ह–पत्यम् ।
च । एतत् । वै । त्र्युन्नतमिति त्रि–उन्नतम् । देव-
यजनमिति देव–यजनम् । सुवर्गमिति सुवः–
गम् । एव । लोकम् । एति । प्रतिष्ठित इति प्र-
ति–स्थिते । देवयजन इति देव–यजने । याज-
येत् । प्रतिष्ठाकाममिति प्रतिष्ठा–कामम् । एतत् ।
वै । प्रतिष्ठितमिति प्रति–स्थितम् । देवयजनमिति
देव–यजनम् । यत् । सर्वतः । समम् । प्रतीति ।
एव । तिष्ठति । [5]यत्र । अन्याअन्या इत्यन्याः–अ-
न्याः । ओषधयः । व्यतिषक्ता इति वि–अतिषक्ताः ।

---

स्यात् । पूर्ववद्द्वितीया । सर्वतः प्रतिष्ठित इति । यत्सर्वतस्समं प्रतिष्ठितं, विषमस्याप्रतिष्ठितत्वात् । प्रतिष्ठितसंबन्धी यजमानोपि प्रतितिष्ठति ॥

[5]यत्रेति ॥ लक्षणमात्रमत्रोच्यते न संज्ञा । अन्याअन्या इति । ‘कर्मव्यतिहारे सर्वनाम्नो द्वे भवतस्समासवच्च बहुलम्’ इति समा-

व्यतिषक्तास्स्युस्तद्याजयेत्पशुकाम-
मेतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै
पशून् ॥ ३२ ॥ अवं रुन्धे पशुमा-
नेव भवति निरृतिगृहीते देवयज-
ने याजयेद्यं कामयेत निरृत्याऽ-
स्य यज्ञं ग्राहयेयमित्येतद्वै निरृ-

स्युः । तत् । याजयेत् । पशुकाममिति पशु-कामम् । एतत् । वै । पशूनाम् । रूपम् । रूपेण । एव । अस्मै । पशून् ॥ ३२ ॥ अवेति । रुन्धे । पशुमानिति पशु-मान् । एव । भवति । [6]निरृतिगृहीत इति निरृति-गृहीते । देवयजन इति देव-यजने । याजयेत् । यम् । कामयेत । निरृत्येति निः-ऋत्या । अस्य यज्ञम् । ग्राहयेयम् । इति । एतत् । वै । निरृतिगृहीतमिति निरृति-गृहीतम् ।

सवद्भावः । तद्याजयेत् तत्र याजयेत् । एतद्वै पशूनां रूपं पशूनां वृद्धिहेतुत्वात् ॥

[6]निरृतिगृहीते इति ॥ यं यजमानं कामयेताध्वर्युः अस्य यज्ञं निरृत्या ग्राहयेयमिति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । निरृतिः बहुव्रीहिः । सद्दश्यै सत्या ऋक्षमिति । यत्सद्दश्यास्सत्याः पृथिव्याः ऋक्षं तृणादिशून्यं इरिणं वा पृथिवीत्वे अवशिष्टे वैलक्षण्यहेतावसत्येव यत्स्वयमेव

तिगृहीतं देवयजनं यत्सदृश्यै सत्या ऋक्षं निरृत्यैवास्य यज्ञं ग्राहयति व्यावृत्ते देवयजने याजयेद्व्यावृत्कामं यं पात्रे वा तल्पे वा मीमांसेरन्प्राचीनमाहवनीयात्प्रवणं स्यात्प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं

देवयजनमिति देव—यजनम् । यत् । सदृश्यै । सत्याः । ऋक्षम् । निरृत्येति निः—ऋत्या । एव । अस्य । यज्ञम् । ग्राहयति । [7]व्यावृत्त इति वि—आवृत्ते । देवयजन इति देव—यजने । याजयेत् । व्यावृत्काममिति व्यावृत्—कामम् । यम् । पात्रे । वा । तल्पे । वा । मीमांसेरन् । प्राचीनम् । आहवनीयादित्या—हवनीयात् । प्रवणमिति प्र—वनम् । स्यात् । प्रतीचीनम् । गा-

ऋक्षमित्यर्थः । सत्या इति । 'शतुरनुमः' इति नद्या उदात्तत्वम्, 'उदात्तस्वरितयोर्यणः' इति विभक्तिः स्वर्यते ॥

[7]व्यावृत्ते इति ॥ व्यावृत्कामं पाप्मनः पृथग्भावं कामयमानं यं पात्रे वा भोजने वा तल्पे वा शयने वा मीमांसेरन् । 'मान् बध' इत्यादिना सन् । वर्जयेयुरिति यावत् स्वेन सह भोजनं शयनं न कुर्युरिति । केचिदाहुः—पात्रे श्राद्धे तल्पे विवाहे यं मीमांसेरन्निति । तस्य लक्षणं—प्राचीनमिति । आह-

देवयजनं वि पाप्मना भ्रातृव्येणा वर्तते नैनं पात्रे न तल्पे मीमाꣳसन्ते कार्ये देवयजने याजयेद्भूतिकामं कार्यो वै पुरुषो भवत्येव ॥ ३३ ॥

हपत्यादिति गार्ह–पत्यात् । एतत् । वै । व्यावृत्त–मिति वि–आवृत्तम् । देवयजनमिति देव–यजनम् । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तते । न । एनम् । पात्रे । न । तल्पे । मीमाꣳसन्ते । [8]कार्ये । देवयजन इति देव–यजने । याजयेत् । भूतिकाममिति भूति–कामम् । कार्यः । वै । पुरुषः । भवति । एव ॥ ३३ ॥

यातवै हविर्धानं च पशून्पाप्मनाऽष्टादश च ॥ ६ ॥

---

वनीयात्प्राचीनं प्राक्प्रदेशः गार्हपत्यात्प्रतीचीनं प्रत्यग्देशः प्रवणं निम्नस्थानं मध्ये उन्नतो व्यावृत्तिः पृथिव्या भवतीति । तत्स्या–धर्म्याद्यजमानोपि पाप्मना भ्रातृव्येण च भ्रातृव्यभूतेनापि पाप्मना व्यावर्तते पृथग्भूतो भवतीति ततः परं नैनं पात्रे तल्पे वा मीमांसन्ते । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः, 'प्रनिरन्त' इत्यादिना वनो नकारस्य णत्वम् ॥

[8]कार्य इति ॥ पुरीषेणोच्चारभावमासादनीयः । पुरुषोपि हि कार्यः संस्कार्यः । संस्कारैरुच्चीकार्यो वा । तस्माद्भवत्येव भूतिमान् संपद्यत एवेति ॥

इति षष्ठे द्वितीये षष्ठोनुवाकः.

तेभ्य उत्तरवेदिस्सिꣳही रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत्ते देवा अमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तामुपामन्त्रयन्त साऽब्रवीद्वरं वृणै सर्वा-

[1]तेभ्यः । उत्तरवेदिरित्युत्तर–वेदिः । सिꣳहीः । रूपम् । कृत्वा । उभयान् । अन्तरा । अपक्रम्येत्यप–क्रम्य । अतिष्ठत् । ते । देवाः । अमन्यन्त । यतरान् । वै । इयम् । उपावर्त्स्यतीत्युप–आवर्त्स्यति । ते । इदम् । भविष्यन्ति । इति । ताम् । उपेति । अमन्त्रयन्त । सा । अब्रवीत् । वरम् । वृणै । सर्वान् । मया । कामान् । वीति । अश्नव-

[1]उत्तरवेद्या व्याघारणं विधास्यन् आह—तेभ्य इत्यादि ॥ देवासुरास्सयत्ता अधिकृताः, ते उभये अपि सर्वनाम्ना अपेक्ष्यन्ते । उत्तरवेदिस्सिंहीः तदीयं च रूपं कृत्वा तेभ्यो देवासुरेभ्योपक्रम्य उभयानन्तरा उभयेषां मध्ये उभयपक्षपरित्यागेन अतिष्ठत्, सिंहीरिति । हल्ङ्यादिलोपाभावश्छान्दसः । ते देवा इत्यादि । व्याख्यातप्रायम् । यतरानिति । 'किंयत्तदः' इति डतरच् । तामिति । उपामन्त्रयन्त तामुत्तरवेदिमुपच्छन्दितवन्तो देवाः । साऽब्रवीदिति । सर्वान्कामान् हविर्विषयान् मया सह मया हेतुभूतया व्यश्नवथ व्यश्नुवीतं तदर्थमिदं ममास्तु अग्नेः पूर्वा

न्मया कामान्व्यश्नवथ पूर्वां तु मा-
ऽग्नेराहुतिरश्नवता इति तस्मादुत्तर-
वेदिं पूर्वामग्नेर्व्याघारयन्ति वारेवृतꣳ
ह्यस्यै शम्यया परि मिमीते ॥३४॥

थ । पूर्वाम् । तु । मा । अग्नेः । आहुतिरित्या—हु-
तिः । अश्नवतै । इति । तस्मात् । उत्तरवेदिमित्युं-
त्तर—वेदिम् । पूर्वाम् । अग्नेः । व्याघारयन्तीति
वि—आघारयन्ति । वारेवृतमिति वारे—वृतम् । हि ।
अस्यै । [2]शम्यया । परीति । मिमीते ॥ ३४ ॥

---

तु माऽऽहुतिं व्यश्नवतै व्यश्नुवीत आप्नोत्विति वरं वृणै इति साऽब्र-
वीत् । तस्मादग्नेः पूर्वमेव उत्तरवेदिं व्याघारयन्ति दक्षिणांसप्र-
भृति विविधमाघारयन्ति । वारेवृतं ह्येतत् अस्यै अस्या
यद्व्याघारणादि । अश्नोतेर्लेटि 'लेटोऽडाटौ' इत्यडागमः ॥

[2]शम्ययेति विधिः ॥ परिमिमीते सर्वासु दिक्षु मिमीते ।
चात्वालत्वमुक्तमग्नेः पूर्वमेव, उत्तरवेद्या व्याघारणं कर्तव्यमेवेति
तदर्थं तामेवोत्तरवेदिमुत्पादयित्वा प्रकृतिभूतं चात्वालमादायोत्पादनी-
यमिति आचार्याभिप्रायः । वित्तायन्यादयश्चात्वालमाने विनियुज्यन्ते।
वित्तायन्यादिभिश्चात्वालस्था उत्तरवेदिरुच्यते, चात्वालभूमिर्वा । एवं
मन्त्रब्राह्मणयोरविरोधः, उत्तरवेदिरेव प्रकृतिस्थानीयेति । मात्रै-
वेति । मात्रा प्रमाणमस्यास्सा शम्या मात्रैव शम्याप्रमाणत्वा-
दस्याः । अथो अपिच युक्तेन योग्येनैव युक्तं योग्यमवरुन्धे ।
युक्तकारिणो ह्यर्थं योग्यं लभन्ते ॥

मात्रैवास्यै साऽथो युक्तेनैव युक्तम-
वं रुन्धे वित्तायनी मेऽसीत्याह वि-
त्ता ह्येनानावत्तिक्तायनी मेऽसीत्या-
ह तिक्तान् ह्येनानावदवतान्मा ना-

मात्रा । एव । अस्यै । सा । अथो इति । युक्तेन । एव । युक्तम् । अवेति । रुन्धे । [3]वित्तायनीति वित्त–अयनी । मे । असि । इति । आह । वित्ता । हि । एनान् । आवत् । तिक्तायनीति तिक्त–अयनी । मे । असि । इति । आह । तिक्तान् । हि । एनान् । आवत् । अवतात् । मा । नाथितम् । इति । आ-

[3]अथ मानमन्त्रान्व्याचष्टे 'वित्तायनी'* इत्यादीन् ॥ वित्ता हीत्यादि । वित्तं लब्धं परेणापहृतं ईयते प्राप्यतेऽनयेति वित्तायनी । देवैश्चापहृतमात्मानमीयते तदिति वित्ता परेणापहृता एषा एनान् देवानावत् आगच्छत् । तस्माद्वित्तस्यात्मनः प्रापणी या त्वं ममापि वित्तस्याग्न्याख्यस्य प्रापणी भवेति मन्त्रार्थ इति भावः । अवतिर्गतिकर्मा । यथा—अव रक्षणगतितृप्तीत्यादि । विन्दतिरनुदात्तः । यद्वा—वित्तस्य धनस्य प्रापिता वित्तायनी, अभिमतप्रदानेन रक्षिकेतियावत् । तदाह—वित्ता लब्धा देवैः देवानावत् अरक्षदिति । तिक्तायनीति । तिक्तं तेजः तस्य प्रापणी तिक्तायनी । देवानतिक्तान् स्वापक्रमेण अतेजस्कान् तिक्तान् आवत् अरक्षत् तेजस्विनोकरोत् तेजसः प्रापिता तेषामासीत् । नाथिता-

*सं. १-२-१२.[1–4]

थितमित्याह नाथितान् ह्येनानाव-
दवतान्मा व्यथितमित्याह व्यथि-
तान् ह्येनानावद्विदेरग्निर्नभो नाम
॥ ३५ ॥ अग्ने अङ्गिर इति त्रिर् ह-
रति य एवैषु लोकेष्वग्नयस्तानेवाव
रुन्धे तूष्णीं चतुर्थꣳ हरत्यानिरुक्त-

ह । नाथितान् । हि । एनान् । आवत् । अवतात् । मा । व्यथितम् । इति । आह । व्यथितान् । हि । एनान् । आवत् । [4]विदेः । अग्निः । नभः । नाम । ॥ ३५ ॥ अग्ने । अङ्गिरः । इति । त्रिः । हरति । ये । एव । एषु । लोकेषु । अग्नयः । तान् । एव । अवेति । रुन्धे । [5]तूष्णीम् । चतुर्थम् । हरति । अ-निरुक्तमित्यनिः—उक्तम् । एव । अवेति । रुन्धे ।

---

निति । देवैर्निर्याचितानेनानावत् आगच्छत् अरक्षत् वा । मन्त्रे कर्तरि निष्ठा, ब्राह्मणे वा ऐश्वर्यकर्मा । इदमेवैश्वर्यं यद्याचारं रक्षन्तीति । व्यथितानिति । व्यथितान् देवानरक्षत् ॥

[4]विदेरिति विधिः ॥ य एतेषु त्रिष्वपि लोकेष्वग्नयः तान् सर्वानवरुन्धे ॥

[5]तूष्णीमिति विधिः ॥ अनिरुक्तं अव्याकृतमप्रार्थितमिष्टमवरुन्धे ॥

मेवाव रुन्धे सिꣳहीरसि महिषी-
रसीत्याह सिꣳहीर्ह्येषा रूपं कृत्वो-
भयानन्तराऽपक्रम्यातिष्ठदुरु प्रथ-
स्वोरु ते यज्ञपतिः प्रथतामित्याह
यजमानमेव प्रजया पशुभिः प्रथ-
यति ध्रुवा ॥ ३६ ॥ असीत्ति सꣳ
हन्ति धृत्यै देवेभ्यश्शुन्धस्व देवे-
भ्यश्शुम्भस्वेत्यवं चोक्षति प्र च कि-

[6]सिꣳहीः । असि । महिषीः । असि । इति । आह ।
सिꣳहीः । हि । एषा । रूपम् । कृत्वा । उभयान् ।
अन्तरा । अपक्रम्येत्यप–क्रम्य । अतिष्ठत् । उरु ।
प्रथस्व । उरु । ते । यज्ञपतिरिति यज्ञ–पतिः ।
प्रथताम् । इति । आह । यजमानम् । एव । प्रज-
येति प्र–जया । पशुभिरिति पशु–भिः । प्रथय-
ति । धुवा ॥ ३६ ॥ असि । इति । समिति । ह-
न्ति । धृत्यै । देवेभ्यः । शुन्धस्व । देवेभ्यः । शु-
म्भस्व । इति । अवेति । च । उक्षति । प्रेति । च ।

---

[6]'सिंहीरसि'* इति पुरीषसंप्रयणं व्याचष्टे—सिंहीरसि । सिंही रूपं कृत्वा यस्मादतिष्ठत् देवासुराणां मध्ये, तस्मादेवमाह ।

---

*सं. १-२-१२.10—14

रति शुद्ध्यां इन्द्रघोषस्त्वा वसुभिः
पुरस्तात्पात्वित्याह दिग्भ्य एवैनां
प्रोक्षति देवाꣳश्चेदुत्तरवेदिरुपावर्वर्ती-
हैव वि जयामहा इत्यसुरा वज्रमु-
द्यत्य देवानभ्यायन्त तानिन्द्रघोषो

किरति । शुद्ध्यै । [7]इन्द्रघोष इतीन्द्र-घोषः । त्वा ।
वसुभिरिति वसु-भिः । पुरस्तात् । पातु । इति ।
आह । दिग्भ्य इति दिक्-भ्यः । एव । एनाम् ।
प्रेति । उक्षति । देवान् । च । इत् । उत्तरवेदिरि-
त्युत्तर-वेदिः । उपावर्वर्तीत्युप-आवर्वर्ति । इह ।
एव । वीति । जयामहै । इति । असुराः । वज्रम् ।
उद्यत्येत्युत्-यत्य । देवान् । अभीति । आयन्त ।
तान् । इन्द्रघोष इतीन्द्र-घोषः । वसुभिरिति वसु-

'चवायोगे प्रथमा' इति तिङ्विभक्तिर्न निहन्यते । अवोक्षति चाद्भिः, प्रकिरति च सिकताभिः । शुद्ध्यै भवति ॥

[7]उत्तरवेद्याः प्रागादिप्रोक्षणमन्त्राः—'इन्द्रघोषस्त्वा'* इत्यादयः । दिग्भ्य एवेति । प्राच्यादिदिग्भ्योपादाय एनां क्रमेण प्रोक्षति । देवांश्चेदिति । यदि देवानुत्तरवेदिः उपावर्तते देवसमीपमागच्छति चेत् ततस्तेषामेव जयो नास्माकं तस्मादिहैव इदानीमेव तदुपाव-

*सं. १-२-१२, 15—18

वसुभिः पुरस्तादप ॥ ३७ ॥ अनु-
दत मनोजवाः पितृभिर्दक्षिणतः प्र-
चेता रुद्रैः पश्चाद्विश्वकर्माऽऽदित्यै-
रुत्तरतो यद्देवमुत्तरवेदिं प्रोक्षति दि-
ग्भ्य एव तद्यजमानो भ्रातृव्यान्प्र-
णुदत इन्द्रो यतीन्त्सालावृकेभ्यः प्रा-

भिः । पुरस्तात् । अपेति ॥ ३७ ॥ अनुदत । म-
नोजवा इति मनः—जवाः । पितृभिरिति पितृ–
भिः । दक्षिणतः । प्रचेता इति प्र—चेताः । रुद्रैः ।
पश्चात् । विश्वकर्मेति विश्व—कर्मा । आदित्यैः ।
उत्तरत इत्युत्—तरतः । यत् । एवम् । उत्तरवेदि-
मित्युत्तर—वेदिम् । प्रोक्षतीति प्र—उक्षति । दिग्भ्य
इति दिक्—भ्यः । एव । तत् । यजमानः । भ्रातृ-
व्यान् । प्रेति । नुदते । [8]इन्द्रः । यतीन् । साला-

र्तनात्प्रागेव देवान्विजयामहै इति मत्वा असुरा वज्रमुद्यत्य देवा-
नभ्यायन्त उत्तरवेदिस्थानमागताः । उपपूर्वाद्धृतेः लेटि 'बहुलं
छन्दसि' इति शपश्श्लुः । तानिन्द्रघोषादयो वस्वादिगणसहिताः
पूर्वादिदिग्भ्योसुरानपानुदत । यदेवमित्यादि । गतम् । 'सावे-
काचः' इति दिग्भ्यो विभक्तेरुदात्तत्वम् ॥

[8]इन्द्रो यतीनित्यादि ॥ यतन्त इति यतयः, 'इन् सर्वधा-

यँच्छुत्तान्दंक्षिणत उंत्तरवेद्या आंदन्
यत्प्रोक्षंणीनामुच्छिष्येंत तद्दंक्षिणत
उंत्तरवेद्यै नि नंयेद्यदेव तत्रं क्रूरं त-
त्तेनं शमयति यं द्विष्यात्तं ध्यांयेच्छु-
चैवैनंमर्पयति ॥ ३८ ॥

वृकेभ्यंः । प्रेतिं । अयच्छत् । तान् । दक्षिणतः । उत्तरवेद्या इत्युंत्तर-वेद्याः । आदन्न् । यत् । प्रोक्षं-णीनामितिं प्र-उक्षंणीनाम् । उच्छिष्येतेत्युंत्-शिष्येंत । तत् । दक्षिणतः । उत्तरवेद्या इत्युंत्तर-वेद्यै । नीतिं । नयेत् । यत् । एव । तत्रं । क्रूरम् । तत् । तेनं । शमयति । यम् । द्विष्यात् । तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति ॥ ३८॥

मिमीते नामं ध्रुवाऽपं शुचा त्रीणिं च ॥७॥

---

तुभ्यः' इतीन् । असुरविशेषाः ये सदैव देवान् जेतुं यतन्ते । दाम्भिकाः बिडालवृत्तयश्च यतय इत्यन्ये । तान् हत्वेन्द्रः साला-वृकेभ्यः प्रायच्छत् । तानुत्तरवेद्या दक्षिणतः आदन् अभक्षयन् । तस्माद्यत्प्रोक्षणीनामतिरिच्येत्, तदुत्तरवेद्या दक्षिणतो निनयेत् इति विधिः । यदेवेत्यादि । गतम्* ॥

इति षष्ठे द्वितीये सप्तमोनुवाकः.

---

*सं. २-६-४.१

सोत्तरवेदिरब्रवीत्सर्वान्मया कामा-
न्व्यश्नवथेति ते देवा अकामयन्ता-
सुरान्भ्रातृव्यानभिभवेमेति तेऽजुहु-
वुस्सिꣳहीरसि सपत्नसाही स्वाहेति
तेऽसुरान्भ्रातृव्यानभ्यभवन्तेऽसुरा-

[1]सा । उत्तरवेदिरित्युत्तर–वेदिः । अब्रवीत् । सर्वान् । मया । कामान् । वीति । अश्नवथ । इति । ते । देवाः । अकामयन्त । असुरान् । भ्रातृव्यान् । अभीति । भवेम । इति । ते । अजुहवुः । सिꣳहीः । असि । सपत्नसाहीति सपत्न–साही । स्वाहा । इति । ते । असुरान् । भ्रातृव्यान् । अभीति । अभवन् । [2]ते । असुरान् । भ्रातृव्यान् ।

[1]सोत्तरवेदिरित्यादि ॥ पूर्वोक्तमवसरे स्मर्यते । अत एव सेत्युक्तम् । पूर्वं ह्युत्तरवेद्युक्तिः 'सर्वान् मया कामान् व्यश्नवथ पूर्वां तु माऽग्नेराहुतिरश्नवतै '* इति । अतः प्राप्ते व्याघारणकाले कामान् कामयितुं देवा आरभन्त । तत्कामानुसारेण व्याघारणमन्त्रपदानि व्याख्यातुमुपक्रमते—ते देवा इत्यादि । गतम् । तेऽजुहवुः दक्षिणेंऽसे व्याघारयन् । सपत्नसाहीति । सपत्नानां शत्रूणामभिभवित्री । पुनर्भ्रातृव्याभिभवानुवादो विस्रम्भातिशयप्रतिपादनार्थः ॥

[2]उत्तरश्रोण्यामजुहवुः—सुप्रजावनिस्स्वाहेति ॥ शोभनायाः प्रजायाः संभक्तेति ॥

* सं. ६-२-७.[1]

न्भ्रातृव्यानभिभूयाकामयन्त प्रजां विन्देमहीति तेऽजुहवुस्सिꣳहीरसि सुप्रजावनिस्स्वाहेति ते प्रजामविन्दन्त ते प्रजां वित्वा ॥ ३१ ॥ अकामयन्त पशून् विन्देमहीति तेऽजुहवुस्सिꣳहीरसि रायस्पोषवनिस्स्वाहेति ते पशूनविन्दन्त ते प-

अभिभूयेत्यभि-भूय । अकामयन्त । प्रजामिति प्र-जाम् । विन्देमहि । इति । ते । अजुहवुः । सिꣳहीः । असि । सुप्रजावनिरिति सुप्रजा-वनिः । स्वाहा । इति । ते । प्रजामिति प्र-जाम् । अविन्दन्त । ते । प्रजामिति प्र-जाम् । वित्वा ॥ ३१ ॥ अकामयन्त । पशून् । विन्देमहि । इति । ते । अजुहवुः । सिꣳहीः । असि । रायस्पोषवनिरिति रायस्पोष-वनिः । स्वाहा । इति । ते । पशून् । अविन्दन्त । [3] ते । पशून् । वित्वा । अकामयन्त ।

---

[3] दक्षिणस्यां श्रोण्यामजुहवुः—रायस्पोषवनिरिति ॥ रायो धनस्य पशुलक्षणस्य या पुष्टिस्तस्यास्संभक्तेति ॥

[4] उत्तरेंऽसे अजुहवुः—आदित्यवनिरिति ॥ आदित्यानामदितिपुत्राणां संभक्तेति । इयं वा अदिरिति ॥

शून् वित्वाऽकामयन्त प्रतिष्ठां वि-
न्देमहीति तेऽजुहवुस्सिꣳहीरस्या-
दित्यवनिस्स्वाहेति त इमां प्रतिष्ठा-
मविन्दन्त त इमां प्रतिष्ठां वित्वाऽ-
कामयन्त देवता आशिष उपेया-
मेति तेऽजुहवुस्सिꣳहीरस्या वह दे-
वान्देवयते ॥४०॥ यजमानाय स्वा-

प्रतिष्ठामिति प्रति—स्थाम् । विन्देमहि । इति । ते। अजुहवुः । सिꣳहीः । असि । आदित्यवनिरित्या-दित्य—वनिः । स्वाहा । इति । ते । इमाम् । प्रति-ष्ठामिति प्रति—स्थाम् । अविन्दन्त । ते । इमाम्। प्रतिष्ठामिति प्रति—स्थाम् । वित्वा । अकामयन्त । देवताः । आशिष इत्या—शिषः । उपेति । इयाम । इति । ते । अजुहवुः । सिꣳहीः । असि । एति । वह । देवान् । देवयत इति देव—यते ॥ ४० ॥ य-जमानाय । स्वाहा । इति । ते । देवताः । आशि-

[5] देवता इत्यादि ॥ देवता यागसंबन्धिनीः आशिषः यागफलानि च उपेयाम प्राप्नुयामेति मध्येऽजुहवुः—सिंहीरस्यावह देवानिति ॥

हेति ते देवता आशिष उपायन्प-
ञ्च कृत्वो व्याघारयति पञ्चाक्षरा प-
ङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धेऽक्ष्ण-
या व्याघारयति तस्मादक्ष्णया प-
शवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै भू-

ष इत्या—शिषः।उपेति। आयन्। [6]पञ्च। कृत्वः।
व्याघारयतीति वि—आघारयति। पञ्चाक्षरेति पञ्च
—अक्षरा। पङ्क्तिः। पाङ्क्तः। यज्ञः। यज्ञम्। एव।
अवेति। रुन्धे। अक्ष्णया। व्याघारयतीति वि—
आघारयति। तस्मात्।अक्ष्णया। पशवः। अङ्गा-
नि। प्रेति। हरन्ति। प्रतिष्ठित्या इति प्रति—स्थि-
त्यै। [7]भूतेभ्यः। त्वा। इति। स्रुचम्। उदिति।

---

[6]पञ्च कृत्व इत्यादि ॥ व्याख्यातम्* । अक्ष्णयेति । कोण-
गत्या । तस्मादिति । अक्ष्णया अनार्जवेन अङ्गानि पदानि
पशवः प्रहरन्ति संकोचयन्ति शयनादिषु गमनादिषु वा क्षिपन्ति।
एवं क्रियमाणं प्रतिष्ठित्यै भवति । 'तादौ च' इति गतेः
प्रकृतिस्वरत्वम् ॥

[7]भूतेभ्यस्त्वेति विधिः ॥ ये देवाः देवभूता उत्पन्नाः तेषां
तत्स्रुच उद्ग्रहणं भागधेयम् ॥

---

*सं. ५-२-७, ६-१-९.७

तेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणाति पौतुद्रवान्परिधीन्परि दधात्येषाम् ॥ ४१ ॥ लोकानां विधृत्या अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः

गृह्णाति । ये । एव । देवाः । भूताः । तेषाम् । तत् । भागधेयमिति भाग-धेयम् । तान् । एव । तेन । प्रीणाति । [8]पौतुद्रवान् । परिधीनिति परि-धीन् । परीति । दधाति । एषाम् ॥ ४१ ॥ लोकानाम् । विधृत्या इति वि-धृत्यै । [9]अग्नेः । त्रयः । ज्यायाꣳसः । भ्रातरः । आसन् । ते । देवेभ्यः । हव्यम् । वहन्तः । प्रेति ।

---

[8]पौतुद्रवानिति विधिः ॥ पूतुद्रवः देवदारवः । 'ओरञ्' । तत्परिधीन् परिदधाति एषां त्रयाणां लोकानां विधारणार्थं तद्भवति ॥

[9]अग्नेस्त्रय इत्यादि ॥ ज्यायांसः पूर्वजाः हव्यं वहन्तः प्रामीयन्त हविर्वहनक्लेशेन मृताः । सोग्निर्ज्यायसां मरणं दृष्ट्वा अबिभेत् । स्यः यो वा कश्चित् एतत्कुर्वन् इत्थमार्तिमाऽरिष्यतीति तस्मान्मयाऽपि नेदं कर्तव्यमिति स तथा भीतः निलायत देवेभ्यो भीतोपासरत् । 'उपसर्गस्यायतौ' इति लत्वम् । निर्गत्य वन-

प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य
आर्तिमाऽरिष्यतीति स निलायत स
यां वनस्पतिष्ववसत्तां पूतुद्रौ यामो-
षधीषु ताꣳ सुगन्धितेजने यां पशुषु
तां पेत्वस्यान्तरा शृङ्गे तं देवताः प्रैष-

अमीयन्त । सः । अग्निः । अबिभेत् । इत्थम् । वाव ।
स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निला-
यत । सः । याम् । वनस्पतिषु । अवसत् । ताम् ।
पूतुद्रौ । याम् । ओषधीषु । ताम् । सुगन्धितेजन
इति सुगन्धि–तेजने । याम् । पशुषु । ताम् ।
पेत्वस्य । अन्तरा । शृङ्गे इति । [10]तम् । देवताः ।
प्रैषमिति प्र–एषम् । ऐच्छन् । तम् । अन्विति ।

---

स्पत्यादिषु । प्रच्छन्नोवसत् बह्वी रात्रीः । तत्र सोग्निः यां रात्रिं वनस्पतिष्विमां रात्रिं वसामीति बुद्धिमकरोत् तां रात्रिं पूतुद्रौ देवदारौ द्रुमे । पूतुद्रुशब्दो मितद्रवादिः । वनस्पतिशब्दे सुटूस्वरावुक्तौ । यामोषधीष्ववसत् तां सुगन्धितेजने सुगन्धितृणे अवसत् । यां पशुष्ववसत् तां पेत्वस्य पलितस्य मेषस्य शृङ्गयोर्मध्ये अवसत् । पूर्ववद्द्वितीया ॥

[10]तं देवता इत्यादि ॥ प्रैषं स्वकृत्ये प्रेषितुं ऐच्छन् । तं चान्विष्यालभन्त । तमब्रुवन्नित्यादि । गतम् । परिधिभ्यो बहिः

मैच्छन्तमन्वविन्दन्तमब्रुवन् ॥४२॥
उप न आ वर्तस्व हव्यं नो वहेति
सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहु-
तस्य बहिःपरिधि स्कन्दात्तन्मे भ्रा-
तॄणां भागधेयमसदिति तस्माद्यद्गृ-
हीतस्याहुतस्य बहिःपरिधि स्कन्द-
ति तेषां तद्भागधेयं तानेव तेन प्री-

अविन्दन् । तम् । अब्रुवन् ॥ ४२ ॥ उपेति । नः । एति । वर्तस्व । हव्यम् । नः । वह । इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव । गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः—परि-धि । स्कन्दात् । तत् । मे । भ्रातॄणाम् । भागधेयमिति भाग—धेयम् । असत् । इति । तस्मात् । यत् । गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः—परिधि । स्कन्दति । तेषाम् । तत् । भागधेयमिति भाग—धेयम् । तान् । एव । तेन । प्रीणा-

बहिःपरिधि 'अपपरिबहिरञ्चवः' इति समासः । स्कन्दात् स्कन्देत् । लेट्याडागमः । भागधेयमसत् भागोऽस्तु, लेट्यडागमः । तस्मादित्यादि । गतम्* । सोमन्यतेति । अस्थन्वन्तः प्रामेषत

*सं. ६-२-८.7

णाति सोऽमन्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि शातया इति स यानि ॥ ४३ ॥ अस्थान्यशातयत तत्पूतुद्रभवद्यन्मा॑ꣳसमुपमृतं तद्गुल्गुलु यदेतान्त्संम्भारान्त्सं-

ति । सः । अमन्यत । अस्थन्वन्त इत्यस्थन्—व-न्तः । मे । पूर्वे । भ्रातरः । प्रेति । अमेषत । अ-स्थानि । शातयै । इति । सः । यानि ॥ ४३ ॥ अस्थानि । अशातयत । तत् । पूतुद्रु । अभवत् । यत् । मा॑ꣳसम् । उपमृतमित्युप—मृतम् । तत् । गुल्गुलु । [11]यत् । एतान् । सम्भारानिति सं—भा-

अस्थिमांसादिशरीरत्वान्मृताः । 'छन्दस्यपि दृश्यते' इति अनङ्, अनो नुट्, 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । अतस्तेषामस्थानि अस्थीनि शातयै अवच्छादयन्त्विति । स यानीत्यादि । गतम् । 'शदेरगतौ तः' इति तत्वम् । उपमृतं समीपे मृतं अस्थिशातनेन भूमौ च्युतं तद्गुल्गुल्वभवत् ॥

[11]यदेतानित्यादि ॥ बहुवचनात्सुगन्धितेजनं च । अग्निमेवेति । अग्न्यभेदादेषाम् । 'अग्नेर्भस्मासि'* इति संभारनिवपनमन्त्रे अग्नेः पुरीषमसीत्याह यस्मादग्नेस्तेजश्शरीरस्य एतत्पुरीषं पूरणमेतत्संभार-

*सं. १-२-१२[28]

भरत्यग्निमेव तत्सं भरत्यग्नेः पुरीष-
मसीत्याहाग्नेर्ह्येतत्पुरीषं यथ्संम्भारा
अथो खल्वाहुरेते वावैनं ते भ्रातरः
परि शेरे यत्पौतुद्रवाः परिधय इति
॥ ४४ ॥

रान् । सम्भरतीति सं–भरति । अग्निम् । एव । तत् । सामिति । भरति । अग्नेः । पुरीषम् । असि । इति । आह । अग्नेः । हि । एतत् । पुरीषम् । यत् । सम्भारा इति सं–भाराः । अथो इति । खलु । आहुः । एते । वाव । एनम् । ते । भ्रातरः । परीति । शेरे । यत् । पौतुद्रवाः । परिधय इति परि–धयः । इति ॥ ४४ ॥

वित्वा देवयत एषामब्रुवन् यानि चतुश्चत्वारिंशच्च ॥ ८ ॥

---

नाम तस्मादेवमुच्यते इति । संभारशब्दः थाथादिनोत्तरपदान्तोदात्तः । अथो अपि खल्वाहुः एनमग्निमेते भ्रातर एव ते परिशेरे परितश्शेरते यस्मादेते पौतुद्रवाः परिधयः परिधीयन्ते इति । शीङो रुट्, 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥

इति षष्ठे द्वितीये अष्टमोनुवाकः.

बद्धमव स्यति वरुणपाशादेवैनं मु-
ञ्चति प्रणेनेक्ति मेध्यं एवैनं करोति
सावित्रियर्चा हुत्वा हविर्धाने प्र वं-
र्तयति सवितृप्रसूत एवैने प्र वंर्तय-
ति वरुणो वा एष दुर्वागुंभयतो ब-

[1]बद्धम् । अवेति । स्यति । वरुणपाशादिति व-
रुण–पाशात् । एव । एने इति । मुञ्चति । प्रेति ।
नेनेक्ति । मेध्ये इति । एव । एने इति । करोति ।
सावित्रिया । ऋचा । हुत्वा । हविर्धाने इति हविः–
धाने । प्रेति । वर्तयति । सवितृप्रसूत इति सवितृ–
प्रसूतः । एव । एने इति । प्रेति । वर्तयति । वरुणः ।
वै । एषः । दुर्वागिति दुः–वाक् । उभयतः । बद्धः ।

---

[1]बद्धमिति ॥ बद्धं हविर्धानयोरक्षमवस्यति मुञ्चतीति विधिः । वरुणपाशादेव एने हविर्धाने वरुणदेवते मुञ्चति । प्रणेनेक्ति क्षाळयति । मेध्ये मेधार्हे एने करोति । सावित्र्यर्चा ‘युञ्जते मन उत’* इत्येतया सवितृप्रसूतः सवित्रा प्रसूतः सवित्राऽनु-ज्ञातः । वरुणो वा इति । वरुणः खल्वेष दुर्वाक् । दुष्टं वक्तीति दुर्वाक् । यदि वक्ति दुष्टमेव तदिति । ‘क्विव्वचि’ इत्यादिना क्विब्दीर्घौ, कृदुत्तरपदप्रकृतिस्वरत्वम् । क इत्याह—

---

*सं. १-२-१३.[1]

ह्वो यदक्षस्स यदुथ्सर्जेद्यजमानस्य गृहानभ्युथ्सर्जेथ्सुवाग्देव दुर्याꣳ आ वदेत्याह गृहा वै दुर्याश्शान्त्यै पत्नी ॥४५॥ उपानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी

यत् । अक्षः । सः । यत् । उत्सर्जेदित्युत्—सर्जेत् । यजमानस्य । गृहान् । अभ्युत्सर्जेदित्यभि—उत्सर्जेत् । सुवागिति सु—वाक् । देव । दुर्यान् । एति । वद । इति । आह । गृहाः । वै । दुर्याः । शान्त्यै । [2]पत्नी ॥ ४५ ॥ उपेति । अनक्ति । पत्नी । हि । सर्वस्य । मित्रम् । मित्रत्वायेति मित्र—त्वाय । यत् । वै । पत्नी । यज्ञस्य । करोति । मिथुनम् ।

---

उभयतः उभाभ्यां बद्धो यदक्षो नाम, स यदुत्सर्जेत् शब्दं करोति यजमानस्य ग्रहानभ्युत्सर्जेत् । तान् लक्षीकृत्य शब्दं करोति तेष्वरिष्टं करोति तदोत्सर्जनेन, तस्मात् 'सुवाक्'* इत्यादि जपेत् इति । गृहा वै दुर्याः यजमानसंबन्धिनोभिप्रेताः । तदुत्सर्जनशान्त्यै भवतीति ॥

[2]पत्नी अक्षधुरे उपानक्तीति विधिः ॥ पत्नी हि सर्वस्य मित्रं मित्रमिव; स्त्रीत्वात् । तस्मात्तया कृतमुपाञ्जनं मित्रत्वाय भवति वरुणस्य वा अक्षस्य वा । यद्वा इत्यादि । व्याख्यातम्†॥

---

*सं. १-२-१३.[2] †सं. ६-२-१.[3]

यज्ञस्य करोति मिथुनं तदथो प-
त्निया एवैष यज्ञस्यान्वारम्भोनव-
च्छित्यै वर्त्मना वा अन्वित्य यज्ञꣳ
रक्षाꣳसि जिघाꣳसन्ति वैष्णवी-
भ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै
विष्णुर्यज्ञादेव रक्षाꣳस्यप हन्ति य-

तत्। अथो इति। पत्निया:। एव। एषः। यज्ञस्य। अन्वारम्भ इत्यनु-आरम्भः। अनवच्छित्या इत्यनव-छित्यै। [3]वर्त्मना। वै। अन्वित्येत्यनु-इत्य। यज्ञम्। रक्षाꣳसि। जिघाꣳसन्ति। वैष्णवीभ्याम्। ऋग्भ्यामित्यृक्-भ्याम्। वर्त्मनोः। जुहोति। यज्ञः। वै। विष्णुः। यज्ञात्। एव। रक्षाꣳसि। अपेति। हन्ति। [4]यत्। अध्वर्युः। अनग्नौ। आ-

[3]वर्त्मनेत्यादि ॥ वर्त्मना शकटमार्गेण अन्वित्यानुप्रविश्य यज्ञं रक्षांसि जिघांसन्ति हन्तुमिच्छन्ति तस्माद्वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति 'इदं विष्णुः',* 'इरावती धेनुमती'* इति द्वाभ्यां वर्त्मनोर्जुहोति। प्राधान्याद्दक्षिणस्योभयोः। उभयोर्वैकैकस्मिन्। यज्ञो वा इत्यादि। अयमेव वर्त्महोमलक्षणो यज्ञो विष्णुमन्त्रयोरुच्यते। तस्मादस्मादेव यज्ञान्निमित्ताद्रक्षांस्यपहन्ति ॥

[4]यदध्वर्युरित्यादि ॥ गतम्† ॥

*सं. १-२-१३.[4-5] †सं. ६-१-८.[6]

दध्वर्युरनग्नावाहुतिं जुहुयादन्धो-
ध्वर्युस्स्याद्रक्षांसि यज्ञं हन्युः
॥ ४६ ॥ हिरण्यमुपास्य जुहोत्य-
ग्निवत्येव जुहोति नान्धोध्वर्युर्भवति
न यज्ञं रक्षांसि घ्नन्ति प्राची प्रे-
तमध्वरं कल्पयन्ती इत्याह सुवर्ग-
मेवैने लोकं गमयत्यत्र रमेथां व-

हुतिमित्या—हुतिम् । जुहुयात् । अन्धः । अध्वर्युः । स्यात् । रक्षांसि । यज्ञम् । हन्युः ॥ ४६ ॥ हिरण्यम् । उपास्येत्युप—अस्य । जुहोति । अग्निवतीत्यग्नि—वति । एव । जुहोति । न । अन्धः । अध्वर्युः । भवति । न । यज्ञम् । रक्षांसि । घ्नन्ति । [5]प्राची इति । प्रेति । इतम् । अध्वरम् । कल्पयन्ती इति । इति । आह । सुवर्गमिति सुवः—गम् । एव । एने इति । लोकम् । गमयति । [6]अत्र । रमे-

[5]'प्राची'* इत्यादिहविर्धानप्रवर्तनमन्त्रः । तं व्याचष्टे—सुवर्गमिति ॥ तस्मात्प्राचीप्रेतमित्याह यस्माच्चाध्वरं कल्पयन्ति प्रेतमित्याह तेन हेतुना एने हविर्धाने सुवर्गं सुष्ठु गन्तव्यं लोकं स्थानं हविर्धानगृहं गमयति । तत्र गमने हि तदुभयमुपपद्यते इति ॥

[6]'अत्र'* इति स्थापनमन्त्रः । तयोरेतद्धविर्धानं पृथिव्याः

*सं. १-२-१३, 6—7

ष्मन्पृथिव्या इत्याह वर्ष्म ह्येतत्पृ-
थिव्या यद्देवयजनꣳ शिरो वा एत-
द्यज्ञस्य यद्धविर्धानं दिवो वा वि-
ष्णवुत वा पृथिव्याः ॥ ४७ ॥ इ-
त्याशीर्पदयर्चा दक्षिणस्य हविर्धा-
नस्य मेधीं नि हन्ति शीर्षत एव

थाम् । वर्ष्मन्न् । पृथिव्याः । इति । आह । वर्ष्म । हि । एतत् । पृथिव्याः । यत् । देवयजनमिति देव-यजनम् । शिरः । वै । एतत् । यज्ञस्य । यत् । हविर्धानमिति हविः-धानम् । [7]दिवः । वा । वि-ष्णो । उत । वा । पृथिव्याः ॥ ४७ ॥ इति । आ-शीर्पदयेत्याशीः-पदया । ऋचा । दक्षिणस्य । ह-विर्धानस्येति हविः-धानस्य । मेधीम् । नीति । हन्ति । शीर्षतः । एव । यज्ञस्य । यजमानः ।

---

वर्ष्म उच्छ्रितं स्थानमेतत् । किम्? यत्र देवा इज्यन्ते तच्च हविर्धानमिति, तदधीनत्वाद्यज्ञस्य । शिरो वा इति । यज्ञस्यै-तच्छिर इव प्राधान्यात् यद्धविर्धानं नाम ॥

[7]दिव इत्यादि विधिः ॥ आशीर्पदया आशीः आशासनीया अभिलषितविशेषाः पादेपादे यस्यां सा आशीर्पदा । 'पादस्य'

यज्ञस्य यजमान आशिषोवं रुन्धे
दण्डो वा औपरस्तृतीयस्य हवि-
र्धानस्य वषट्कारेणाक्षमच्छिनद्यत्तृ-
तीयं छदिर् हविर्धानयोरुदाह्रियते तृ-
तीयस्य हविर्धानस्यावरुध्यै शिरो

आशिष इत्या-शिषः । अवेति । रुन्धे । [8]दण्डः । वै । औपरः । तृतीयस्य । हविर्धानस्येति हविः-धानस्य । वषट्कारेणेति वषट्-कारेण । अक्षम् । अच्छिनत् । यत् । तृतीयम् । छदिः । हविर्धानयोरिति हविः-धानयोः । उदाह्रियत इत्युत्-आ-ह्रियते । तृतीयस्य । हविर्धानस्येति हविः-धानस्य । अवरुध्या इत्यव-रुध्यै । [9]शिरः । वै । एतत् । य-

---

इति लोपे, 'टाबृचि' इति टाप्, 'पादः पत्' इति पद्भावः, विसर्जनीयाभावश्छान्दसः । यज्ञस्य शिरस्तः आशिषोवरुन्धे ॥

[8]दण्ड इत्यादि ॥ उपरस्य पुत्रः औपरः दण्डो नाम तृतीयहविर्धानस्याक्षं वषट्कारेणाच्छिनत् । यदि हविर्धानयोरुदाह्रियते उपर्याह्रियते तृतीयं छदिः तृतीयस्य हविर्धानस्यावरुद्ध्यै भवति अक्षस्य छिन्नत्वाच्छदिर्मात्रमेव हविर्धानत्वेन रूप्यते ॥

[9]शिर इत्यादि ॥ गतम्* । हविर्धानशालानिमित्तमिदमुपलक्षण-

*सं. ६-२-९,6

वा एतद्यज्ञस्य यद्धविर्धानं विष्णो
ररार्टमसि विष्णोः पृष्ठमसीत्याह
तस्मादेतावद्धा शिरो विष्यूतं वि-
ष्णोस्स्यूरसि विष्णोर्ध्रुवमसीत्याह
वैष्णवꣳ हि देवतया हविर्धानं यं

ज्ञस्य । यत् । हविर्धानमिति हविः—धानम् । वि-
ष्णोः । ररार्टम् । असि । विष्णोः । पृष्ठम् । अ-
सि । इति । आह । तस्मात् । एतावद्धेत्येतावत्—
धा । शिरः । विष्यूतमिति वि—स्यूतम् । [10]विष्णोः ।
स्यूः । असि । विष्णोः । ध्रुवम् । असि । इति ।
आह । वैष्णवम् । हि । देवतया । हविर्धानमिति
हविः—धानम् । यम् । प्रथमम् । ग्रन्थिम् । ग्रथ्नी-

---

मिदमेव प्रतिपादयितुं मन्त्रद्वयोपादानम् । एतावद्धविर्धानमेव शिर-स्थानीयं, यावत्प्रकारं विष्यूतं तावत्प्रकारं प्रजानां शिरो विष्यूतं विविधं स्यूतम् । अस्य च त्रिशब्दादित्वात्त्रिधा विष्यूतमिति गम्यते । यथोक्तं—'तस्मान्नवधा शिरः'* इति 'ते त्रय-स्त्रिकपालाः'* इति च । 'बहुगणवतु' इति संख्यात्वात् संख्याया विधार्थे धा, सिवेर्निष्ठायां 'छ्वोश्शूडनुनासिके च' इत्यूठ्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

[10]विष्णोरित्यादि ॥ अवशेषमन्त्राणामुपलक्षणम् । वैष्णवमिति ।

---

*सं. ६-२-१.[7—8]

प्र॒थ॒मं ग्र॒न्थिं ग्र॑थ्नी॒याद्यत्तं न वि॑स्र॒ꣳ॒-
सये॒दमे॑हेनाध्व॒र्युः प्र मी॑येत॒ तस्मा॒-
थ्स वि॒स्रस्यः॑ ॥ ४८ ॥
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒व इ॒त्यभ्रि॒-

यात् । यत् । तम् । न । वि॒स्र॒ꣳ॒सये॒दिति॑ वि-स्र॒-
ꣳ॒सये॑त् । अमे॑हेन । अ॒ध्व॒र्युः । प्रेति॑ । मी॒ये॒त॒ ।
तस्मा॑त् । सः । वि॒स्र॒स्य॒ इति॑ वि-स्र॒स्यः॑ ॥४८॥

पत्नीं॑ हन्युर्वा पृ॑थि॒व्या वि॑ष्यू॒तं॒ विष्णो॒
ष्षड्वि॑ꣳशतिश्च ॥ ९ ॥

[1] दे॒वस्य॑ । त्वा॒ । स॒वि॒तुः । प्र॒स॒व इति॑ प्र-स॒-
वे । इति॑ । अभ्रि॑म् । एति॑ । द॒त्ते॒ । प्रसू॑त्या॒ इति॒

देवतासंबन्धेन हविर्धानं वैष्णवम् । यमित्यादि । गतम् । अमेहो मेहनिरोधः । तस्माद्ग्रन्थिं मोचयति ॥

इति षष्ठे द्वितीये नवमोनुवाकः.

---

[1] देवस्य त्वेत्यादिविधिः ॥ खनित्रमभ्रिं औदुम्बर्यवटपरिलेखनार्थमादत्ते अनेन सावित्रेण मन्त्रेण । तत्प्रसूत्यै सवितुर्देवस्यानु-

मा दत्ते प्रसूत्या अश्विनोर्बाहुभ्या-
मित्याहाश्विनौ हि देवानामध्वर्यू
आस्तां पूष्णो हस्ताभ्यामित्याह य-
त्यै वज्र इव वा एषा यदभ्रिरभ्रिर-
सि नारिरसीत्याह शान्त्यै काण्डे-
काण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳ-

प्र—सूत्यै । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् ।
इति । आह । अश्विनौ । हि । देवानाम् । अध्वर्यू
इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति ।
आह । यत्यै । वज्रः । इव । वै । एषा । यत् ।
अभ्रिः । अभ्रिः । असि । नारिः । असि । इति ।
आह । शान्त्यै । [2]काण्डेकाण्ड इति काण्डे—का-
ण्डे । वै । क्रियमाणे । यज्ञम् । रक्षाꣳसि । जि-

ज्ञानाय भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । अश्विनोरित्यादि । गतम्* । यत्यै नियतत्वाय तद्भवति । आयुधत्वाद्वज्रतुल्या अभ्रिः । शान्त्या इति । अपां भरणात् 'बिभर्तेरन् रिश्च' इति वचनात् स्त्रीत्वेन चाभ्रीणां शान्तिर्भवति ॥

[2]काण्डेकाण्ड इत्यादि ॥ व्याख्यातम्† । परिलिखितमित्यादि । रक्षसामपहत्यै भवति । पूर्ववद्गतेः प्रकृतिस्वरत्वम् ॥ इदमहमि-

*सं २-६-४,[1] †सं ६-१-८,[7]

सि जिघाꣳसन्ति परिलिखितꣳ र-
क्षः परिलिखिता अरातय इत्याह
रक्षसामपहत्यै ॥ ४१ ॥ इदमहꣳ र-
क्षसो ग्रीवा अपि कृन्तामि योऽस्मा-
न्द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ
वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वे-
ष्टि तयोरेवानन्तरायं ग्रीवाः कृन्त-
ति दिवे त्वाऽन्तरिक्षाय त्वा पृथि-

घाꣳसन्ति । परिलिखितमिति परि-लिखितम् । रक्षः । परिलिखिता इति परि-लिखिताः । अरातयः । इति । आह । रक्षसाम् । अपहत्या इत्यप-हत्यै ॥ ४१ ॥ इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इति । आह । द्वौ । वाव । पुरुषौ । यम् । च । एव । द्वेष्टि । यः । च । एनम् । द्वेष्टि । तयोः । एव । अनन्तरायमित्यनन्तः-आयम् । ग्रीवाः । कृन्तति । [3]दिवे । त्वा । अन्त-

त्यादि ॥ व्याख्यातम्* । अनन्तरायं अव्यवधानेन ग्रीवाश्छिनत्ति ॥

[3]दिव इत्यादि एभ्यः दिवादिलोकार्थं एनामौदुम्बरीं प्रोक्षति ।

*सं. ६-१-८.४

व्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः
प्रोक्षति परस्तादर्वाचीं प्रोक्षति त-
स्मात् ॥ ५० ॥ परस्तादर्वाचीं म-
नुष्या ऊर्जमुप जीवन्ति क्रूरमिव
वा एतत्करोति यत्खनत्यपोव नय-
ति शान्त्यै यवमतीरव नयत्यूर्ग्वै

रिक्षाय । त्वा । पृथिव्यै । त्वा । इति । आह ।
एभ्यः । एव । एनाम् । लोकेभ्यः । प्रेति । उक्ष-
ति । परस्तात् । अर्वाचीम् । प्रेति । उक्षति ।
तस्मात् ॥ ५० ॥ परस्तात् । अर्वाचीम् । मनु-
ष्याः । ऊर्जम् । उपेति । जीवन्ति । [4]क्रूरम् । इव ।
वै । एतत् । करोति । यत् । खनति । अपः । अ-
वेति । नयति । शान्त्यै । यवमतीरिति यव—मतीः ।
अवेति । नयति । ऊर्क् । वै । यवः । ऊर्क् । उदु-

परस्तादित्यादि । अग्रादारभ्य मूलात्प्रोक्षति । परशब्दादस्तातिः पञ्चम्याः । अर्वागञ्चतीति क्विनि नकाराकारयोर्लुप्तयोः 'चौ' इति पूर्वपदस्य दीर्घत्वम्, अन्तोदात्तत्वं च । ततस्त्वादग्रादारभ्य यावन्मूलमन्नं भुञ्जते । यद्वा—परस्तात्प्रक्षिप्तां अर्वाचीमधोगच्छन्तीं मनुष्या भुञ्जते ॥

[4]क्रूरमिवेत्यादि ॥ गतम्* । अवटेऽपोवनयनं शान्त्यै भवति ।

*सं. २-६-५,४

यव ऊर्गुदुम्बर ऊर्जैवोर्ज समर्ध-
यति यजमानेन संमितौदुम्बरी भ-
वति यावानेव यजमानस्तावतीमे-
वास्मिन्नूर्जं दधाति पितृणा सद-
नमसीति बर्हिरवं स्तृणाति पितृ-

म्बरः । ऊर्जा । एव । ऊर्जम् । समिति । अर्धय-
ति । [5]यजमानेन । सम्मितेति सं-मिता । औदु-
म्बरी । भवति । यावान् । एव । यजमानः । ता-
वतीम् । एव । अस्मिन् । ऊर्जम् । दधाति । [6]पि-
तृणाम् । सदनम् । असि । इति । बर्हिः । अवेति ।
स्तृणाति । पितृदेवत्यमिति पितृ-देवत्यम् ॥५१॥

---

यत्रमतीरिति । उभयोरेतद्धेतुत्वादुभयोर्योगस्तत्समृद्ध्यै भवति ॥

[5]यजमानेन संमितेति ॥ निखातादूर्ध्वमित्याहुः । औदुम्बरी उदुम्बरविकारा । अनुदात्तादेरञ् । यावानिति । यजमानमात्रमन्नमस्मिन्नेव यजमाने दधाति ॥

[6]पितृणामिति ॥ पितृदेवत्यं निखातं, मन्त्रलिङ्गात्, पितृणां निखातप्रदेशान्तरे दर्शनाच्च । देवतान्तात्तादर्थ्ये यत् । 'तित्स्वरितम्' इति स्वरितत्वम्, 'उदात्तस्वरितयोर्यणः' इति ततः पर एकारस्स्वर्यते । पूर्वत्र सांहितिको दीर्घः अध्ययनविकारः । निखातशब्दे 'जनसनखनां' इति आत्वम्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । यदित्यादि । यद्यवटे बर्हिरनवस्तीर्य औदुम्बरीं

देवत्यम् ॥ ५१ ॥ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्या निखाता स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनां मिनोत्यथो स्वारुहमेवैनां करोत्युद्दिवꣳ स्तभानान्तरिक्षं

हि । एतत् । यत् । निखातमिति नि–खातम् । यत् । बर्हिः । अनवस्तीर्येत्यनव–स्तीर्य । मिनुयात् । पितृदेवत्येति पितृ–देवत्या । निखातेति नि–खाता । स्यात् । बर्हिः । अवस्तीर्येत्यव–स्तीर्य । मिनोति । अस्याम् । एव । एनाम् । मिनोति । अथो इति । स्वारुहमिति स्व–रुहम् । एव । एनाम् । करोति । [7]उदिति । दिवम् । स्तभान । एति । अ-

मिनुयात् प्रक्षिपेत् उच्छ्रयेदिति यावत् । डुमिञ् प्रक्षेपणे । पितृदेवत्या पित्रर्थे उच्छ्रिता औदुम्बरी स्यात् सर्वाऽपि पित्रर्था स्यात् 'पितॄणां निखातं मनुष्याणामूर्ध्वं निखातात्'* इति विभागो न स्यात् । तस्माद्बर्हिरवस्तीर्य मिनोति अस्यां पृथिव्यामेव एनां मिनोति नावटे । गर्तश्च पितृदेवत्यः । अवटाद्व्यावृत्तेर्यथोक्तदोषाप्रसङ्गः । अथो अपिच स्वारुहं आत्मार्थमारोहितामेतां करोति न पित्रर्थमेव । स्वार्थं रोहन्ती स्वारुट्, सांहितिको दीर्घः ॥

[7]उद्दिवमिति ॥ एषां त्रयाणां लोकानां विधारणाय भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

*सं. ६-३-४.५

पृणेत्याहैषां लोकानां विधृत्यै द्यु-
तानस्त्वा मारुतो मिनोत्वित्याह द्यु-
तानो ह स्म वै मारुतो देवाना-
मौदुम्बरीं मिनोति तेनैव ॥ ५२ ॥
एनां मिनोति ब्रह्मवनिं त्वा क्ष-
त्रवनिमित्याह यथायजुरेवैतद्घृतेन

न्तरिक्षम् । पृण । इति । आह । एषाम् । लोका-
नाम् । विधृत्या इति वि-धृत्यै । [8]द्युतानः । त्वा ।
मारुतः । मिनोतु । इति । आह । द्युतानः । ह ।
स्म । वै । मारुतः । देवानाम् । औदुम्बरीम् ।
मिनोति । तेन । एव ॥ ५२ ॥ एनाम् । मिनोति ।
[9]ब्रह्मवनिमिति ब्रह्म-वनिम् । त्वा । क्षत्रवनिमिति
क्षत्र-वनिम् । इति । आह । यथायजुरिति यथा-
यजुः । एव । एतत् । घृतेन । द्यावापृथिवी इति

---

[8]द्युतान इति ॥ द्युताननामा मारुतः देवानामौदुम्बरीं मिनोति अमिनोत् । मिनोतेर्व्यत्ययेन लट् । तेनैवैनां मिनोति । मापयति वा तेन सहायेन सह विमिनोति ॥

[9]ब्रह्मवनिमित्यादि ॥ पुरीषेण पर्यूहनम् । त्वं ब्रह्मवननादिसिद्धिः । यथायजुस्तत्फलत्येव । घृतेनेति । द्यावापृथिव्यौ सार-

द्यावापृथिवी आ पृणेथामित्यौदुम्ब-
र्यां जुहोति द्यावापृथिवी एव
रसेनानक्त्यान्तमन्ववस्रावयत्यान्त-
मेव यजमानं तेजसाऽनक्त्यैन्द्रम-
सीति छदिरधि नि दधात्यैन्द्रꣳ हि देव-

द्यावा-पृथिवी । एति । पृणेथाम् । इति । औदु-
म्बर्याम् । जुहोति । द्यावापृथिवी इति द्यावा-पृथि-
वी । एव । रसेन । अनक्ति । [10]आन्तमित्या-अ-
न्तम् । अन्ववस्रावयतीत्यनु-अवस्रावयति । आ-
न्तमित्या-अन्तम् । एव । यजमानम् । तेजसा ।
अनक्ति । [11]ऐन्द्रम् । असि । इति । छदिः । अधि ।
नीति । दधाति । ऐन्द्रम् । हि । देवतया । सदः ।

वत्यौ करोति । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्, 'देव-ताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकातिस्वरत्वम् ॥

[10]आन्तमिति ॥ आमूलं यजमानमप्यान्तं यूपात् अतस्तेजसाऽ-नक्ति प्रकाशयति ॥

[11]ऐन्द्रमिति ॥ देवतातद्धितग्रहणात् 'इन्द्रस्य सदः'* इति मन्त्रगता षष्ठी व्याख्यायत इत्येके । शाखान्तरीयं पदं ब्राह्मणं दर्शयतीत्यन्ये । छदिरधि निदधाति छादनार्थं कटमुपरि निदधाति।

*सं. १-३-१.[15]

तया सदो विश्वजनस्य छायेत्या-
ह विश्वजनस्य ह्येषा छाया यथ्स-
दो नवंछदि ॥ ५३ ॥ तेजस्काम-
स्य मिनुयात्त्रिवृता स्तोमेन संमि-

[12]विश्वजनस्येति विश्व–जनस्य । छाया । इति ।
आह । विश्वजनस्येति विश्व–जनस्य । हि । एषा ।
छाया । यत् । सदः । [13]नवंछदीति नवं–छदि ॥५३॥
तेजस्कामस्येति तेजः–कामस्य । मिनुयात् । त्रिवृते-
ति त्रि–वृता । स्तोमेन । सम्मितमिति सं–मितम् ।

---

देवतासम्बन्धेन हि सद ऐन्द्रम् । तस्मादिन्द्रस्य सदः सदनमि-
त्युच्यते इन्द्रस्य प्राधान्यात् ॥

[12]विश्वजनस्येति ॥ विश्वयोः [पार्श्वयोः] छदिनिधानमन्त्रः ।
विश्वो जनो विश्वजनः । यो वा कश्चिदागतः तस्य सर्वस्यैषा
छाया ग्रहणं यत्सदो नाम ॥

[13]नवछदीत्याद्याः काम्याः ॥ विश्वजनाद्याः काम्याः । विश्व-
जनादित्वात्तुगभावः । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृ-
तिस्वरत्वम्, 'अतः कृकमि' इति सत्वम् । त्रिवृतेति । तस्या-
पि नवस्तोत्रीयत्वान्नवत्वयोगेन तुल्यता । तेजस्त्रिवृदिति । तेजो-
होतुत्वात्तेजसा सहोत्पन्नत्वाच्च, यथा—'तमग्निर्देवताऽन्वसृज्यत '*
इति । तेजस्व्येव भवति यजमानः ॥

---

*सं. ७-१-१.

तं तेजांस्त्रिवृत्तेजस्व्येव भंवत्येकांदश-
छदीन्द्रियकांमस्यैकांदशाक्षरा त्रि-
ष्टुगिंन्द्रियं त्रिष्टुगिंन्द्रियाव्येव भंवति
पञ्चंदशछदि भ्रातृंव्यवतः पञ्चदशो

तेजंः। त्रिवृदितिं त्रि-वृत्। तेजस्वी। एव। भव-ति। [14]एकांदशछदीत्येकांदश-छदि। इन्द्रियकां-मस्येतीन्द्रिय-कामस्य। एकांदशाक्षरेत्येकांदश-अक्षरा। त्रिष्टुंक्। इन्द्रियम्। त्रिष्टुक्। इन्द्रियावी। एव। भवति। [15]पञ्चंदशछदीति पञ्चंदश-छदि। भ्रातृंव्यव-त इति भ्रातृंव्य-वतः। पञ्चदश इतिं पञ्च-दशः।

---

[14]एकादशछदीति ॥ बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्, तत्रापि 'संख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । इन्द्रियं त्रिष्टुगिति । इन्द्रियहेतुत्वादिन्द्रियतुल्यत्वाद्वा इन्द्रियाणामप्येकादशत्वात् । इन्द्रि-यावी इन्द्रियवान् । 'बहुलं छन्दसि' इति विनिः, 'मन्त्रे सोमाश्व' इति दीर्घत्वं व्यत्ययेनामन्त्रेऽपि भवति ।

[15]पञ्चदशो वज्र इति ॥ वज्रतुल्यत्वात् वीर्यवत्वाद्वा । त-स्माद्वीर्यावन्त इति । 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति डः, भ्रातृव्याभिभूत्यै । दासीभारादिः ॥

वज्रो भ्रातृव्याभिभूत्यै सप्तदशछदि
प्रजाकामस्य सप्तदशः प्रजापतिः
प्रजापतेराप्त्या एकविंशतिछदि
प्रतिष्ठाकामस्यैकविंशस्स्तोमानां
प्रतिष्ठा प्रतिष्ठित्या उदरं वै सद ऊ-

वज्रः। भ्रातृव्याभिभूत्या इति भ्रातृव्य–अभिभूत्यै। [16]सप्तदशछदीति सप्तदश–छदि । प्रजाकामस्येति प्रजा–कामस्य । सप्तदश इति सप्त–दशः। प्रजापतिरिति प्रजा–पतिः । प्रजापतेरिति प्रजा–पतेः । आप्त्यै । [17]एकविंशतिछदीत्येकविंशति–छदि । प्रतिष्ठाकामस्येति प्रतिष्ठा–कामस्य। एकविंश इत्येक–विंशः । स्तोमानाम् । प्रतिष्ठेति प्रति–स्था। प्रतिष्ठित्या इति प्रति–स्थित्यै। [18]उदरम् । वै। सदः । ऊर्क् । उदुम्बरः । मध्यतः । औदुम्बरीम्।

---

[16]सप्तदशः प्रजापतिरिति ॥ 'यो वै सप्तदशं प्रजापतिम्'* इत्यादिषु प्रसिद्धम् । प्रजापतेराप्त्या इति । तदाप्तौ हि प्रजास्सिध्यन्त्येवेति॥

[17]एकविंशस्स्तोमानां प्रतिष्ठेति ॥ त्रिवृदादीनां ज्योतिषां तत्रान्तर्भावात् प्रतिष्ठित्यै प्रतिष्ठार्थं भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[18]उदरस्थानीयं सदः, ऊर्गन्नं तत्स्थानीयः तद्धेतुत्वादुदुम्बरः ।

*सं १-६-११.[1]

गौदुम्बरो मध्यत औदुम्बरीं मिनो-
ति मध्यत एव प्रजानामूर्जं दधाति
तस्मात् ॥ ५४ ॥ मध्यत ऊर्जा भुं-
ञ्जते यजमानलोके वै दक्षिणानि
छदीꣳषि भ्रातृव्यलोक उत्तराणि द-
क्षिणान्युत्तराणि करोति यजमान-

मिनोति । मध्यतः । एव । प्रजानामिति प्र—जा-
नाम् । ऊर्जम् । दधाति । तस्मात् ॥ ५४ ॥ मध्य-
तः । ऊर्जा । भुञ्जते । [19]यजमानलोक इति यजमा-
न—लोके । वै । दक्षिणानि । छदीꣳषि । भ्रातृव्य-
लोक इति भ्रातृव्य—लोके । उत्तराणीत्युत्—तराणि ।
दक्षिणानि । उत्तराणीत्युत्—तराणि । करोति । य-
जमानम् । एव । अयजमानात् । उत्तरमित्युत्—

मध्यतः मध्ये । 'आद्यादिभ्यस्तसिः' । मिनोति प्रक्षिपति । त-
स्मान्मध्यतः मध्यमे उरसि [वयसि] ऊर्जा भुञ्जते भूयिष्ठेन
प्रजास्सुखिता भवन्ति ॥

[19]यजमानलोक इत्यादि ॥ दक्षिणानीति । उत्तराणि स्युः
उत्तारकाणि । दक्षिणानि उत्तराणि उन्नततराणि भवन्ति यथो-
दगग्राणि छदींषि दृश्यन्ते । एवं हि अयजमानाद्भ्रातृव्यादुत्तरं

मेवायंजमानादुत्तरं करोति तस्मा-
द्यजमानोऽयंजमानादुत्तरोन्तर्वर्ता-
न्करोति व्यावृत्त्यै तस्मादरंण्यं प्र-
जा उपं जीवन्ति परिं त्वा गिर्व-

तरम् । करोति । तस्मात् । यजमानः । अयंज-
मानात् । उत्तर इत्युत्–तरः । [20]अन्तर्वर्तानित्यंन्तः–
वर्तान् । करोति । व्यावृत्या इतिं वि–आवृत्यै । त-
स्मात् । अरंण्यम् । प्रजा इतिं प्र–जाः । उपेतिं ।
जीवन्ति । [21]परीतिं । त्वा । गिर्वणः । गिरः ।

उद्गततरं करोति । तस्मादित्यादि । गतम्* । उच्छब्दात् ‘ साधनक्रियावचने ’ इत्यादिना तरप् ॥

[20]अन्तर्वर्तानिति ॥ अन्तर्वर्तयन्तीत्यन्तर्वर्ताः, ‘ अन्तरपरिग्रहे ’ इति गतित्वं, पचाद्यचि थाथादिनोत्तरपदान्तोदात्तत्वम् । छदिरन्तर्धानाच्छादिततृणमूलान्युच्यन्ते । आरण्यकतृणकुला†नामियं संज्ञेति केचित् । छदिच्छायमुपरि करोति अवस्तात्करोति । तद्व्यावृत्त्यै भवति । केभ्यः? ग्राम्येभ्यः छदिर्भ्य इति केचित् । अयजमानेभ्यो यजमानस्यैवेत्यन्ये । ग्राम्येभ्यस्तृणादिभ्यः आरण्यानामित्यन्ये । तस्मादिति । यस्मादेव यजमानेनारण्यकोपजीवनं क्रियते तस्मादारण्यमपि प्रजा उपजीवन्ति ॥

[21]‘ परित्वा गिर्वणो गिरः ’‡ इत्यादिसदःपरिश्रयणमन्त्रः ।

*सं २-६-५.[6] †ग–तृणमूला. ‡सं १-३-१.[17]

णो गिर इत्याह यथायजुरेवैतदि-
न्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्याहै-
न्द्रꣳ हि देवतया सदो यं प्रथमं ग्र-
न्थिं ग्रथ्नीयाद्यत्तं न विस्रꣳसयेदमे-
हेनाध्वर्युः प्र मीयेत तस्मात्स वि-
स्रस्यः ॥ ५५ ॥

इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । [22]इन्द्रस्य । स्यूः । असि । इन्द्रस्य । ध्रुवम् । असि । इति । आह । ऐन्द्रम् । हि । देवतया । सदः । यम् । प्रथमम् । ग्रन्थिम् । ग्रथ्नीयात् । यत् । तम् । न । विस्रꣳसयेदिति वि–स्रꣳसयेत् । अमेहेन । अध्वर्युः । प्रेति । मीयेत । तस्मात् । सः । विस्रस्य इति वि–स्रस्यः ॥ ५५ ॥

अपहत्यै तस्मात्पितृदेवत्यं तेनैव नव-
छदि तस्मात्सदः पञ्चदश च ॥१०॥

तेन प्रतिपादितमेवं सर्वं यथायजुर्भवत्येव । पूर्ववदस्य यजुष्ट्वं वेदितव्यम् ॥

[22]इन्द्रस्य स्यूरसीत्यादि ॥ गतम्* । यं प्रथममित्यादि । व्याख्यातम्† ॥

इति षष्ठे द्वितीये दशमोनुवाकः.

*सं. ६-२-१०.[11] † सं. ६-२-९.[10]

शिरो वा एतद्यज्ञस्य यद्धविर्धानं
प्राणा उपरवा हविर्धाने खायन्ते त-
स्माच्छीर्षन्प्राणा अधस्तात्खायन्ते
तस्मादधस्ताच्छीर्ष्णः प्राणा रक्षो-
हणो वलगहनो वैष्णवान्खनामी-

[1]शिरः । वै । एतत् । यज्ञस्य । यत् । हविर्धानमिति हविः–धानम् । प्राणा इति प्र–अनाः । उपरवा इत्युप–रवाः । हविर्धान इति हविः–धाने । खायन्ते । तस्मात् । शीर्षन्न् । प्राणा इति प्र–अनाः । अधस्तात् । खायन्ते । तस्मात् । अधस्तात् । शीर्ष्णः । प्राणा इति प्र–अनाः । [2]रक्षोहण इति रक्षः–हनः । वलगहन इति वलग–हनः । वैष्ण-

---

[1]शिरो वा इति ॥ प्राणाः नासिकादयः । तत्स्थानीया उपरवाः । तस्मात्ते शिरस्थानीये हविर्धाने खायन्ते खनितव्याः इति विधिः । उपरवा नाम बिलविशेषाः प्रादेशमुखाः प्रादेशान्तराळाः । तस्माच्छीर्षन् प्राणाः नासिकादयः । अधस्ताच्च तस्य खायन्ते इति विधिः । 'ये विभाषा' इत्यात्वम् । तस्माच्छीर्ष्णः अधस्तात्प्राणाः ॥

[2]रक्षोहण इत्यादि ॥ देवतासंबन्धेन वैष्णवाः उपरवा भवन्ति; मन्त्रलिङ्गात् ॥

त्याह वैष्णवा हि देवतयोपरवा अ-
सुरा वै निर्यन्तो देवानां प्राणेषु व-
लगान्यखनन्तान्बाहुमात्रेऽन्वविन्द-
न्तस्माद्बाहुमात्राः खायन्त इदमहं

वान् । खनामि । इति । आह । वैष्णवाः । हि । देवतया । उपरवा इत्युप-रवाः । [3]असुराः । वै । निर्यन्त इति निः-यन्तः । देवानाम् । प्राणेष्विति प्र-अनेषु । वलगानिति वल-गान् । नीति । अ-खनन् । तान् । बाहुमात्र इति बाहु-मात्रे । अ-न्विति । अविन्दन् । तस्मात् । बाहुमात्रा इति बाहु-मात्राः । खायन्ते । [4]इदम् । अहम् । तम् ।

---

[3]असुरा इत्यादि ॥ निर्यन्तः स्वयं नश्यन्तः देवानां प्राणेषु प्राणनिमित्तं प्राणाभावनिमित्तमिति यावत् । देवानां प्राणान्विना-शयितुं वलगान्यखनन् निखातवन्तः । वलगा नाम वलनाम्ना असुरराजेन दृष्टाः परमारणप्रयोजनार्थं वटपटादिनिक्षिप्तास्थिरोमन-खादिविविधामङ्गलद्रव्यसंभाररूपा भूमावन्तर्हिता उच्यन्ते । तान् वलगान् देवा बाहुमात्रे अन्वविन्दन् लब्धवन्तः असुरैः प्रयुक्तान् ज्ञात्वा गृहीतवन्तः । तस्मादुपरवा बाहुमात्राः खायन्ते इति विधिः । बाहुप्रमाणान् बाहुमात्रा मानं प्रमाणम् ॥

[4]इदमहमित्यादिपांसूद्वपनमन्त्रः ॥ द्वौ एतौ पुरुषौ यश्च

तं वलगमुद्वपामि ॥ ५६ ॥ यं नस्समानो यमसंमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासंमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति सं तृणत्ति तस्मात्संतृण्णा अन्तरतः

वलगमिति वल—गम् । उदिति । वपामि ॥ ५६ ॥ यम् । नः । समानः । यम् । असंमानः । निचखानेति नि—चखान । इति । आह । द्वौ । वाव । पुरुषौ । यः । च । एव । समानः । यः । च । असंमानः । यम् । एव । अस्मै । तौ । वलगमिति वल—गम् । निखनत इति नि—खनतः । तम् । एव । उदिति । वपति । [5]समिति । तृणत्ति । तस्मात् । संतृण्णा इति सं—तृण्णाः । अन्तरतः ।

---

यजमानस्य विद्यावित्तसौभाग्यादिभिस्समानः तुल्यः यश्चासमान ऊनः उत्कृष्टो वा तौ वलगं अस्मै यजमानाय यजमानविनाशार्थं निखनतः, तमुद्वपत्येव ॥

[5]संतृणत्तीति विधिः ॥ सन्तर्जनमधस्तादेकीकरणम्, उ तृदिर् हिंसानादरयोः, रौधादिकः । तस्मात्सन्तृण्णाः अभ्यन्तरे एकीभ-

प्राणा न सं भिनत्ति तस्मादसंभि-
न्नाः प्राणा अपोवं नयति तस्मा-
दार्द्रा अन्तरतः प्राणा यवमतीरवं
नयति ॥ ५७ ॥ ऊर्ग्वै यवः प्राणा
उपरवाः प्राणेष्वेवोर्जं दधाति बर्-

प्राणा इति प्र-अनाः । [6]न । समिति । भिनत्ति । तस्मात् । असंभिन्ना इत्यसं-भिन्नाः । प्राणा इति प्र-अनाः । [7]अपः । अवेति । नयति । तस्मात् । आर्द्राः । अन्तरतः । प्राणा इति प्र-अनाः । यवमतीरिति यव-मतीः । अवेति । नयति ॥ ५७ ॥ ऊर्क् । वै । यवः । प्राणा इति प्र-अनाः । उपरवा इत्युप-रवाः । प्राणेष्विति प्र-अनेषु । एव । ऊर्जम् । दधाति । [8]बर्हिः । अवेति । स्तृणाति ।

ताः प्राणा नासिकादयः । अकर्मणि निष्ठायामपि व्यत्ययेन गतेः प्रकृतिस्वरत्वम् ॥

[6]न सम्भिनत्तीति विधिः ॥ बहिर्नैकीकरोतीत्यर्थः । तस्माद्बहिरसंभिन्नाः प्राणाः नासिकादयः पृथगधिष्ठाना एव वर्तन्ते ॥

[7]अपोवनयति तेषूपरवेष्विति विधिः ॥ तस्मादभ्यन्तरे आर्द्राः । यवमतीरित्यादि । ऊर्गन्नं यवः प्राणस्थानीयेषूपरवेषु तं दधाति यवमतीनामपामवनयने ॥

[8]बर्हिरवस्तृणात्यवटेष्विति विधिः ॥ तस्माल्लोमशाः लोमवन्तः अन्तरतः ॥

हिरवं स्तृणाति तस्माल्लोमशा अ-
न्तरतः प्राणा आज्येन व्याघारय-
ति तेजो वा आज्यं प्राणा उपरवाः
प्राणेष्वेव तेजो दधाति हनू वा एते
यज्ञस्य यदधिषवणे न सं तृणत्त्य-
संतृण्णे हि हनू अथो खलु दीर्घ-

तस्मात् । लोमशाः । अन्तरतः । प्राणा इति प्र-अनाः । [9]आज्येन । व्याघारयतीति वि-आ-घारयति । तेजः । वै । आज्यम् । प्राणा इति प्र-अनाः । उपरवा इत्युप-रवाः । प्राणेष्विति प्र-अनेषु । एव । तेजः । दधाति । [10]हनू इति । वै । एते इति । यज्ञस्य । यत् । अधिषवणे इत्यधि-सवने । न । समिति । तृणत्ति । असंतृण्णे इत्यसं-तृण्णे । हि । हनू इति । अथो इति । खलु । दीर्घसोम इति दीर्घ-सोमे । संतृद्ये इति

[9]आज्येनेत्यादि ॥ प्राणेषु तेजः तेजनं सामर्थ्यातिशयं दधाति ॥

[10]हनू इत्यादि ॥ यस्मादसन्तृण्णे हनू तस्मात् अधिषवणफलके न संतृणत्ति विध्वा प्रोते न करोति । एवं हि हनुत्वं भवति । अथो खल्विति । दीर्घसोमे द्विरात्रादौ ते सन्तृद्ये

सोमे संतृद्ये धृत्यै शिरो वा एत-
द्यज्ञस्य यद्धविर्धानम् ॥५८॥ प्राणा
उपरवा हनू अधिषवणे जिह्वा चर्म
ग्रावाणो दन्ता मुखमाहवनीयो ना-

सं-तृद्यै । धृत्यै । [11]शिरः । वै । एतत् । यज्ञस्य ।
यत् । हविर्धानमिति हविः-धानम् ॥ ५८ ॥
प्राणा इति प्र-अनाः । उपरवा इत्युप-रवाः ।
हनू इति । अधिषवणे इत्यधि-सवने । जिह्वा ।
चर्म । ग्रावाणः । दन्ताः । मुखम् । आहवनीय
इत्या-हवनीयः । नासिका । उत्तरवेदिरित्युत्तर-

---

विद्धेव सन्धातव्ये श्लेषयितव्ये धृत्यै यावदभिषवणं तावद्धार-
णार्थम् । 'ऋदुपधाच्च' इति तृणातेः क्विप् । उक्थादि दीर्घ-
सोम इत्यन्ये । स्तोमपृथुमान् [सोमप्रथिमा दैर्घ्यम्] ॥

[11]शिर इत्यादि रूपकम् ॥ शिर इव भवति हविर्धानं य-
ज्ञात्मनः पुरुषस्य प्राधान्यात् तत्राधस्तना उपरवास्तस्य प्राण-
पदव्यां वर्तन्ते तत्सकाशस्थिते अधिषवणफलके तस्य हनुसंकाशे
दृश्येते, विधारकत्वात् । तत्रास्तीर्णं चर्म तस्य जिह्वेव भाति,
कुट्टनाद्याधारकत्वात् । तत्र निषण्णा ग्रावाणः तस्य दन्ता इव
राजन्ते, कुट्टनादिकारकत्वात् । तस्य मुखं आस्यमिवाहवनीयोग्निः
प्रकाशते, हविषामदनीयानां प्रक्षेपात् । तस्य नासिकेव उत्तर-

सिकोत्तरवेदिरुदरꣳ सदो यदा खलु
वै जिह्वया दथ्स्वधि खादत्यथ मु-
खं गच्छति यदा मुखं गच्छत्यथो-
दरं गच्छति तस्माद्धविर्धाने चर्मन्न-
धि ग्रावभिरभिषुत्याहवनीये हुत्वा

वेदिः । उदरम् । सदः । यदा । खलु । वै । जि-
ह्वया । दत्स्विति दत्—सु । अधीति । खादति ।
अथ । मुखम् । गच्छति । यदा । मुखम् । गच्छ-
ति । अथ । उदरम् । गच्छति । तस्मात् । हवि-
र्धान इति हविः—धाने । चर्मन् । अधीति । ग्राव-
भिरिति ग्राव—भिः । अभिषुत्येत्यभि—सुत्य ।
आहवनीय इत्या—हवनीये । हुत्वा । प्रत्यञ्चः ।

---

वेदिः उत्तरनाभिरवभाति, हविर्गन्धना[र्गन्धा]देस्तत्र व्यक्तीकरणात् । तस्योदरमिव सदस्सन्दृश्यते, तत्र सर्वभक्षाणां सन्निधानात् । इदं स्पष्टतरं प्रदर्शयितुं लौकिकभोक्तरि तावद्दर्शयति—यदा खलु वा इति । यदा खलु जिह्वया दत्सु दन्तेषु अधिखादति अधि उपरि क्रियते अभ्यवहार्यं अथ पुरुषः खादति, अथानन्तरं मुखं ग- च्छति यदा मुखं गच्छति अथ तदानीमेव तदुदरं गच्छति । एत- द्यज्ञपुरुषे योजयति—तस्मादिति । एतेनैव क्रमेण शिरस्थानीये हविर्धाने जिह्वास्थानीये चर्मणि दन्तस्थानीयैर्ग्रावभिः अभिषुत्याह-

प्रत्यञ्चः परेत्य सदसि भक्षयन्ति यो
वै विराजो यज्ञमुखे दोहं वेद दुह
एवैनामियं वै विराट्तस्यै त्वक्चर्मो-

परेत्येति परा—इत्य । सदसि । भक्षयन्ति । [12]यः ।
वै । विराज इति वि—राजः । यज्ञमुख इति यज्ञ—मु-
खे । दोहम् । वेद । दुहे । एव । एनाम् । [13]इयम् ।
वै । विराडिति वि—राट् । तस्यै । त्वक् । चर्म ।

---

वनीये आस्यस्थानीये हुत्वा प्रक्षिप्य प्रत्यञ्चः परेत्य उदरस्थानीये सदसि भक्षयन्ति भक्षणमाचरन्ति ऋत्विजः । एवमृत्विग्भक्षणान्तो यज्ञपुरुषव्यापारो रूप्यते । अन्य आहुः—आस्यस्थानीये प्रक्षिप्तस्य उदरं प्रविष्टस्य पुनश्चर्वणस्थानीयं भक्षणं तदभिनयमृत्विजः कुर्युरिति ॥

[12]एवमिदं विधीयते—यो वै विराज इत्यादि ॥ शिरआदिरूपकान्तं यज्ञमुखे यज्ञारम्भे यो विराजो यज्ञैर्दोहं वेद एनां विराजं दुहे दुग्धे उपक्रम एव तस्या ज्ञानात् तां दोग्धुं प्रभवतीति । विराजोऽन्नस्य हेतुत्वादियं विराट् । यद्वा—इयं विराट्संख्या संपद्यते, नवतिशतस्तोत्रीयत्वात् । तस्माद्वा इयं यज्ञभूत्यै धेनुर्विराडित्युच्यते ॥

[13]इदानीं तां रूपद्वयीमवगमयति—यावदेव यजनभूमीषु विराट् धेनुस्थानीया तस्यै तस्याः त्वक्स्थानीयं चर्म त्वगिति पयआवपनमुच्यते । ऊधः आपीनभारः । तत्स्थानीये अधिषवणे

ऊर्धोऽधिषवणे स्तना उपरवा ग्रावाणो
वत्सा ऋत्विजो दुहन्ति सोमः पयो
य एवं वेद दुह एवैनाम् ॥ ५९ ॥

ऊर्धः । अधिषवणे इत्यधि—सवने । स्तनाः । उपरवा इत्युप—रवाः । ग्रावाणः । वत्साः । ऋत्विजः । दुहन्ति । सोमः । पयः । यः । एवम् । वेद । दुहे । एव । एनाम् ॥ ५९ ॥

वपामि यवमतीरवं नयति हविर्धान-
मेव त्रयोविꣳशतिश्च ॥११॥

यदुभौ देवासुरा मिथस्तेषाꣳ सुवर्गे यद्वा अनीशानः पुरोहविषि तेभ्यस्सोत्तरवेदिर्बद्धं देवस्याग्निꣳ शिरो वा एकादश ॥ ११ ॥

---

त्वचोभावात्, स्तनस्थानीया उपरवाः प्रस्रवनवत्त्वात् । वत्सस्थानीया ग्रावाणः रसनिष्कासनहेतोः उपजनस्य कारणत्वात् । ऋत्विजो दुहन्ति विविधमन्त्रप्रयोगिणः ऋत्विजः दोग्धृस्थानीया भवन्ति । सोमः पयस्स्थानीयः । य एवमेनां यज्ञधेनुं वेद सोपि तां दुहे दुग्धे । 'लोपस्त आत्मनेपदेषु' इति तलोपः । यद्वृत्तयोगात्प्रथममाख्यातं न निहन्यते, द्वितीयं तु तिङः परत्वाद्वाक्यादित्वाद्वा ॥

यदुभावित्याह देवानां यज्ञो देवेभ्यो न र-
थाय यजमानाय पुरस्तादर्वाचीं नवं-
पञ्चाशत् ॥ ५९ ॥

हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु.

द्वितीयप्रश्नस्समाप्तः.

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेद-
भाष्ये षष्ठे काण्डे द्वितीयप्रश्ने एकादशोनुवाकः
प्रश्नश्च समाप्तः.

## ॥ तृतीयप्रश्नः ॥

चात्वालाद्धिष्णियानुप वपति यो-
निर्वै यज्ञस्य चात्वालं यज्ञस्य स-
योनित्वाय देवा वै यज्ञं पराऽजय-
न्त तमाग्नीध्रात्पुनरपाजयन्नेतद्वै य-

हरिः ओं ॥

[1]चात्वालात् । धिष्णियान् । उपेति । वपति । योनिः । वै । यज्ञस्य । चात्वालम् । यज्ञस्य । सयोनित्वायेति सयोनि–त्वाय । देवाः । वै । यज्ञम् । परेति । अजयन्त । तम् । आग्नीध्रादित्याग्नि–इध्रात् । पुनः । अपेति । अजयन् । एतत् ।

---

[1]चात्वालादित्यादि ॥ चात्वालात्पुरीषमादाय होत्रीयादिधिष्णियानुपवपति स्थलीकरोति । हेतुमाह—योनिरिति । ततः पुरीषमादायोत्तरवेद्याः करणाच्चात्वालं यज्ञस्य योनिः कारणम्, 'योनिर्वै यज्ञस्य चात्वालं योनिः कृष्णविषाणा योनावेव योनिं दधाति'* इत्यादिदर्शनाच्च । यज्ञस्येति । एवं क्रियमाणे यज्ञस्य सयोनित्वं कारणसम्मितत्वं भवति ॥

[2]देवा वा इत्यादि ॥ देवा यज्ञं पराजयन्त परागमन् असुरमायया परागतयज्ञा अभवन् । 'विपराभ्यां जेः' इत्यात्मनेपदम् । अथ तं यज्ञं आग्नीध्राद्धिष्णियान्निमित्तात् अपादानाद्वा

*सं. ६-१-३.[20]

ज्ञस्यापराजितं यदाग्नींध्रं यदाग्नीं-
ध्राद्धिष्णियान् विहरंति यदेव य-
ज्ञस्यापराजितं ततं एवैनं पुनं-
स्तनुते पराजित्येव खलु वा एते

वै । यज्ञस्य । अपराजितमित्यपरा-जितम् । यत् ।
आग्नीध्रमित्याग्नि-इध्रम् । यत् । आग्नीध्रादित्याग्नि-
इध्रात् । धिष्णियान् । विहरतीति वि-हरति ।
यत् । एव । यज्ञस्य । अपराजितमित्यपरा-जि-
तम् । ततः । एव । एनम् । पुनः । तनुते । [3]परा-
जित्येति परा-जित्य । इव । खलु । वै । एते ।

---

अपाजयन् अपादायात्मनस्समीपमागमयन् असुरजयेन पुनरावृत्त-यज्ञा अभवन् । एतद्धै यज्ञस्यापराजितं यत्र यज्ञो न पराजीयते तादृशमिदं धिष्णियं यदाग्नीध्रं नाम । तस्माद्यदाग्नीध्राद्धिष्णियान्विहरति विविधमुत्पादयति, यदेव यज्ञस्यापराजितं यद्धि महाभाग्येन तत ऊर्ध्वं यज्ञो न परानेष्यते । ततस्तादृशादेव धिष्णियात् एनं यज्ञं पुनस्तनुते पुनरभ्याहरति नातः परं असुरादिभिः पराजेतुं शक्यते इति आग्नीध्रविहरणं चरति । तस्मादाग्नीध्राद्धिष्णियान्विहरतीति विधीयते ॥

[3]पराजित्येत्यादि ॥ एते खलु यज्ञं पराजित्येव परागमय्येव पराङ्मुखमिव यज्ञं कृत्वा यज्ञं पराजयन्त इव यन्ति गच्छन्ति ये बहिष्पवमानं सर्पन्ति समुपसर्पन्ति । त्रिवृदात्मा स्तोमो बहि-

यन्ति ये बहिष्पवमान॑ सर्पन्ति बहिष्पवमाने स्तुते ॥ १ ॥ आहाग्नीदग्नीन् वि हर बर्हिस्तृणाहि पुरोडाशा॑ अलं कुर्विति यज्ञमेवाप्जित्य पुनस्तन्वाना यन्त्यङ्गारैर्द्वे

यन्ति । ये । बहिष्पवमानमिति बहिः-पवमानम् । सर्पन्ति । बहिष्पवमान इति बहिः-पवमाने । स्तुते ॥ १ ॥ आह । अग्नीदित्यग्नि-इत् । अग्नीन् । वीति । हर । बर्हिः । तृणाहि । पुरोडाशान् । अलम् । कुरु । इति । यज्ञम् । एव । अपजित्येत्यप-जित्य । पुनः । तन्वानाः । यन्ति । अङ्गारैः ।

---

ष्पवमानः प्रातस्सवनीयः । तस्माद्बहिष्पवमाने उद्गातृभिस्स्तुते 'अग्नीदग्नीन्' इत्यादिकमाहेति विधिः । निगदव्याख्यातः प्रैषः । एवं हि यज्ञमपराजितमिव स्थितं अपजित्य पुनरावृत्तं कृत्वा पुनरात्मीयमिव संभावयन्तः पुनर्यज्ञं तन्वानाः विस्तारयन्तो यदि निर्बाधं नयन्ति । अङ्गारैरिति । द्वयोः प्रातस्सवनमाध्यन्दिनसवनयोः धिष्णियानङ्गारैर्विहरति । तृतीयसवने शलाकाभिरिति विधिः । अयमभिप्रायः—तृतीयसवनस्य गायत्र्युद्धृतसारस्य प्रागेव गतसारत्वात् रसवत्त्वापादनाय तत्र शलाका आनीयन्ते, यदाह 'सशुक्रत्वाय' इति । इतरयोस्तु सवनयोः पूर्वमेव सरसत्वात्

सवने वि हरति शलाकाभिस्तृतीयꣳ
सशुक्रत्वायाथो सं भरत्येवैनाद्धिष्णि-
या वा अमुष्मिँल्लोके सोममरक्षन्ते-
भ्योधि सोममाऽहरन्तमन्ववायन्तं
पर्यविशन् य एवं वेद विन्दते ॥२॥

द्वे इति । सवने इति । वीति । हरति । शलाकाभिः ।
तृतीयम् । सशुक्रत्वायेति सशुक्र-त्वाय । अथो
इति । समिति । भरति । एव । एनत् । [4]धिष्णि-
याः । वै । अमुष्मिन् । लोके । सोमम् । अरक्षन् ।
तेभ्यः । अधीति । सोमम् । एति । अहरन् । तम् ।
अन्ववायन्नित्यनु-अवायन् । तम् । परीति । अ-
विशन् । यः । एवम् । वेद । विन्दते ॥ २ ॥ परि-

---

दग्धकाष्ठानयनेऽपि न दोष इति तत्राङ्गारैरेव विहार इति । एत
द्वेव विजितमिति । अथो अपिच संभरत्येवैनत् एतत्तृतीयसवन-
मितराभ्यां सम्भरति समानतां नयतीति यावत् ॥

[4]धिष्णिया वा इत्यादि ॥ एते धिष्णियाः पूर्वममुष्मिन् लोके
सोममरक्षन् । तेभ्यो देवास्सोममध्याहरन् । ततस्ते धिष्णिया
देवैराह्रियमाणं तं सोममन्ववायन् अन्वगच्छन् । ततस्तं सोमं
धिष्णियाः पर्यविशन् परित आविश्य सेवका इव समुपासत ।
एवं वेदिता परिवेष्टारं विन्दते लभते । विशतिस्तृचा परिवेष्टा सेवकः ॥

परिवेष्टारं ते सोमपीथेन व्यार्ध्यन्त ते देवेषु सोमपीथमैच्छन्त तान्देवा अब्रुवन्द्वेद्वे नामनी कुरुध्वमथ प्र वाऽऽप्स्यथ न वेत्यग्नयो वा अथ धिष्णियास्तस्माद्द्विनामा ब्राह्मणोर्धुक-

वेष्टारमिति परि–वेष्टारम् । [5]ते । सोमपीथेनेति सोम–पीथेन । वीति । आर्ध्यन्त । ते । देवेषु । सोमपीथमिति सोम–पीथम् । ऐच्छन्त । तान् । देवाः । अब्रुवन् । द्वेद्वे इति द्वे–द्वे । नामनी इति । कुरुध्वम् । अथ । प्रेति । वा । आप्स्यथ । न । वा । इति । अग्नयः । वै । अथ । धिष्णियाः । तस्मात् । द्विनामेति द्वि–नामा । ब्राह्मणः । अर्धु-

---

[5]ते धिष्णियाः पूर्वं सोमपीथेन सोमपानेन व्यार्ध्यन्त व्ययुज्यन्त देवेषु सोमपीथमैच्छन्त पायास्म सोममिति प्रार्थयन्त । तांस्तथा प्रार्थयमानान् देवा अब्रुवन् द्वेद्वे नामनी युष्माकं कुरुध्वं द्वेद्वे नामनी बिभृत । अथ द्वितीयनामकरणानन्तरं सोमपीथं प्राप्स्यथ न वा प्राप्स्यथेति । तथा देवैरुक्तास्ते धिष्णियाः द्वितीयं नाम चक्रुः । तद्दर्शयितुमाह—अग्नयो वा अथ-धिष्णिया इत्यादि । पूर्वमग्निनामानो देववचनानन्तरं धिष्णियनामानो बभूवुरिति यावत् । तस्माद्द्विनामा ब्राह्मणः अर्धुकः ऋद्धिशीलः । छान्दस उकञ् । तेषां धिष्णियानां मध्ये ये नेदिष्ठमन्तिकतमं

स्तेषां ये नेदिष्ठं पर्यविंशन्ते सोम-
पीथं प्राप्नुवन्नाहवनीय आग्नीध्रीयो
होत्रीयो मार्जालीयस्तस्मात्तेषु जु-
ह्वत्यतिहाय वषट्करोति वि हि ॥३॥

कः । तेषाम् । ये । नेदिष्ठम् । पर्यविंशन्निति प-
रि-अविंशन् । ते । सोमपीथमिति सोम-पीथम्।
प्रेति । आप्नुवन् । आहवनीय इत्या-हवनीयः ।
आग्नीध्रीय इत्याग्नि-इध्रीयः । होत्रीयः । मार्जा-
लीयः । तस्मात् । तेषु । जुह्वति । अतिहायेत्यति-
हाय । वषट् । करोति । वीति । हि ॥ ३ ॥ एते ।

---

पर्यविशन् पर्यासीनाः । 'अन्तिकबाढयोः' इति नेदादेशः । ते सोमपीथं प्राप्नुवन् । आहवनीयादयश्चत्वारः । तस्मात्तेषु जुह्वति सोमं, सोमेन तेषु व्याघारणहोमं कुर्वन्ति, इतरेष्वाज्येनैव व्याघारणं, न सर्वेष्वपि । अतिहाय वषट्करोति अन्यान् धिष्णियान्. प्रशास्त्रीयादीनतिहाय अतिलङ्घ्य वषट्करोति सोमदानं तेष्वेवेत्यर्थः । एतदेव दर्शयितुमाह—वि हीति । एते खल्वाहवनीयादिव्यतिरिक्ताः सोमपीथेन व्यार्ध्यन्त व्ययुज्यन्त । तस्मान्न तेषु वषट्कारप्रदानमिति, अस्ति व्याघारणमिति भावः । ननु द्वितीयनामधारणादेतेषामपि सोमपीथेन भाव्यम् । नोक्तं द्वितीयनाम बिभ्रतां भवत्येव सोमपीथ इति । किं तर्हि ? द्वितीयं नाम बिभ्रतस्सोमपीथ इत्युच्यते । यथाऽऽह 'अथ प्रवाप्स्यथ न वेति' ॥

एते सोमपीथेनार्ध्यन्त देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳ-स्ताभिरपानुदन्त प्राचीरन्या आहु-तयो हूयन्ते प्रत्यङ्ङासीनो धिष्णि-

सोमपीथेनेति सोम—पीथेन । आर्ध्यन्त । [6]देवाः । वै । याः । प्राचीः । आहुतीरित्या—हुतीः । अजुह-वुः । ये । पुरस्तात् । असुराः । आसन् । तान् । ताभिः । प्रेति । अनुदन्त । याः । प्रतीचीः । ये । पश्चात् । असुराः । आसन् । तान् । ताभिः । अ-पेति । अनुदन्त । प्राचीः । अन्याः । आहुतय इ-त्या—हुतयः । हूयन्ते । प्रत्यङ् । आसीनः । धि-ष्णियान् । व्याघारयतीति वि—आघारयति । प-

[6]देवा वा इत्यादि ॥ याः प्राचीरात्मनः प्राग्गताः प्रतीची-रात्मनः प्रत्यग्गताः । शिष्टं स्पष्टम् । उभयत्रापि 'चौ' इति पूर्वपदस्य दीर्घत्वमन्तोदात्तत्वं च । यस्मादेवं देवाः प्राचीभिः प्रतीचीभिश्चाहुतिभिः सर्वानसुरान्नाशितवन्तः तस्मात् प्राचीरन्या इति । अन्यास्सोमाहुतयः प्राच्यः आत्मनः प्राग्गता हूयन्ते । स तान् प्राङ्मुखेनेति यान् धिष्णियान् प्रत्यङ्मुख आसीनो व्याघार-

यान्व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्रणुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीः ॥ ४ ॥ जायन्ते प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ्धिष्णियानतिसर्पेत्प्राणान्त्संकर्षेत्प्रमायुक-

श्चात् । च । एव । पुरस्तात् । च । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । तस्मात् । पराचीः । प्रजा इति प्र-जाः । प्रेति । वीयन्ते । प्रतीचीः । ॥४॥ जायन्ते । [7]प्राणा इति प्र-अनाः । वै । एते । यत् । धिष्णियाः । यत् । अध्वर्युः । प्रत्यङ् । धिष्णियान् । अतिसर्पेदित्यति-सर्पेत् । प्राणानिति प्र-अनान् । समिति । करषेत् । प्रमायुक

---

यति । 'एकान्याभ्याम्' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । पश्चादित्यादि । गतम् । तस्मादित्यादि । पराचीः प्रजाः प्रवीयन्ते तत्प्रतिकूलगत्या जायन्ते ॥

[7]प्राणा इत्यादि ॥ अतिसर्पेत् अतीत्य प्रत्यगञ्चेत् प्राणान् संकर्षेत् स्थानाच्चयावयेत् । ततश्च प्रमायुको मरणशीलस्स्यादध्वर्युः ॥

स्स्यान्नाभिर्वा एषा यज्ञस्य यद्धो-
तोर्ध्वः खलु वै नाभ्यै प्राणो वा-
ऽपानो यदध्वर्युः प्रत्यङ् होतारम-
तिसर्पेदपाने प्राणं दध्यात्प्रमायुक-
स्स्यान्नाध्वर्युरुपगायेद्वाग्वीर्यो वा अ-

इति प्र–मायुकः । स्यात् । [8]नाभिः । वै । एषा । यज्ञस्य । यत् । होता । ऊर्ध्वः । खलु । वै । नाभ्यै । प्राण इति प्र–अनः । अवाङ् । अपान इत्यप–अनः । यत् । अध्वर्युः । प्रत्यङ् । होतारम् । अतिसर्पेदित्यति–सर्पेत् । अपान इत्यप–अने । प्राणमिति प्र–अनम् । दध्यात् । प्रमायुक इति प्र–मायुकः । स्यात् । [9]न । अध्वर्युः । उपेति । गायत् । वाग्वीर्य इति वाक्–वीर्यः । वै । अध्वर्युः ।

---

[8]नाभिर्वा इत्यादि ॥ मध्यमत्वसामान्याद्यज्ञस्य नाभिरेव होता । ऊर्ध्वः ऊर्ध्वप्रवृत्तिः खलु नाभ्याः प्राणः शरीरे मुखनासिकाधारत्वात् । अवाङ् अवाङ्मुखप्रवृत्तिः अपानः नाभ्या इत्येव । 'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् । तत्र यदध्वर्युर्होतारं अतीत्य प्रत्यग्गच्छेत् अपाने प्राणं दध्यात्, तथा प्रमायुकस्स्यात् । तस्मात्प्रत्यगध्वर्युः न गच्छेदिति विधिः ॥

[9]नाध्वर्युरुपगायेदिति विधिः ॥ 'ऋत्विज उप गायन्ति' इति

ध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे ॥५॥ वा-
चꣳ सं प्रयच्छेदुपदासुकाऽस्य वा-
क्स्याद्ब्रह्मवादिनो वदन्ति नासꣳ-
स्थिते सोमेऽध्वर्युः प्रत्यङ्क्स दोतीया-
दथं कथा दाक्षिणानि होतुमेति या-

यत् । अध्वर्युः । उपगायेदित्युप-गायेत् । उद्गात्र इत्युत्-गात्रे ॥ ५ ॥ वाचम् । सं । प्रेति । यच्छेत् । उपदासुकेत्युप-दासुका । अस्य । वाक् । स्यात् । [10]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । न । असꣳस्थित इत्यसं-स्थिते । सोमे । अध्वर्युः । प्रत्यङ् । सदः । अतीति । इयात् । अथ । कथा । दाक्षिणानि । होतुम् । एति । यामः । हि । सः ।

---

प्राप्तमस्य निषिध्यते । वाग्वीर्य इत्यादि । वागधीनवीर्यः । यदित्यादि । उपगानं नामोद्गातुः कर्म तत्कुर्वन्नध्वर्युः उद्गात्रे आत्मनो वाचं संप्रयच्छेत् । ततश्चाध्वर्योरुपदासुका क्षयशीला वाक्स्यात् । सर्वत्र छान्दस उकञ् । सर्वेषु यद्वृत्तेषु निघाते प्रतिषिद्धे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, 'उदात्तवता तिङा' इति गतेः आख्यातेन समासः ॥

[10]ब्रह्मवादिन इत्यादि ॥ असमाप्ते सोमे अध्वर्युः प्रत्यङ् सदो नातीयात् नातिक्रम्य गच्छेत् । अथैवं स्थिते दाक्षिणानि

मो हि स तेषां कस्मा अहं देवा यामं वाऽयामं वाऽनुं ज्ञास्यन्तीत्युत्तरेणाग्नींध्रं परीत्यं जुहोति दाक्षिणानि न प्राणान्त्सं कर्षति न्यंन्ये

तेषाम् । कस्मैं । अहं । देवाः । यामम् । वा । अयामम् । वा । अन्विति । ज्ञास्यन्ति । इति । उत्तरेणेत्युत्–तरेण । आग्नींध्रमित्याग्नि–इध्रम् । परीत्येति परि–इत्यं । जुहोति । दाक्षिणानि । न । प्राणानिति प्र–अनान् । सामिति । कर्षति । [11]नी-

'उदु त्यं' 'चित्रम्'* इति होतुं कथं प्रत्यङ्कृति । तत्र हि द्वाभ्यां गार्हपत्ये जुहोति । एवं ब्रह्मवादिनः पर्यनुयोगं कृत्वा परिहारमुद्भावयन्ति दूषयितुम्—यामो हीति । यद्यत्रोत्तरं ब्रूयात् यामः उपरमः खल्वसौ कर्मणः, तेषां देवानामुपरतं कर्मेति यावत् । तस्मात्कर्मण्युपरमे लौकिके गमनमात्रे नास्ति दोषः । पानादिकर्मकाले हि नानुजानन्ति प्रत्यग्गमनं देवा इति । अथैतद्दूषयति—कस्मै अर्थाय देवाः यामं वाऽयामं वा कर्मणोनुज्ञास्यन्ति सन्ततिनिषेधशास्त्रे यामायामपर्यालोचनां किमिति करिष्यन्ति सर्वथा न सहन्ते सदोतीत्य प्रत्यग्गमनमिति ब्रह्मवादिनः पर्यनुयोगमाहुः । अत्रोत्तरमाह—उत्तरेणाग्नींध्रं परीत्य दाक्षिणानि जुहोति । एवं कुर्वन् प्राणान् न संकर्षतीति ॥

[11]न्यन्य इति ॥ अन्ये धिष्णिया आग्नीध्रादयो न्युप्यन्ते ।

*सं. १-४-४३.[1–2]

धिष्णिया उप्यन्ते नान्ये यान्निवर्प-
ति तेन तान्प्रीणाति यान्न निवर्पति
यदनुदिशति तेन तान् ॥ ६ ॥

ति । अन्ये । धिष्णियाः । उप्यन्ते । न । अन्ये ।
यान् । निवपतीति नि-वर्पति । तेन । तान् ।
प्रीणाति । यान् । न । निवपतीति नि-वर्पति ।
यत् । अनुदिशतीत्यनु-दिशति । तेन । तान् ॥६॥

स्तुते विन्दते हि वीयन्ते प्रतीचीरुद्धात्र
उप्यन्ते चतुर्दश च ॥ १ ॥

---

'एकान्याभ्यां समर्थाभ्याम्' इत्याख्यातं न निहन्यते । नान्य-इति । न्युप्यन्त इत्येव । आहवनीयादयो न्युप्यन्ते । तत्र यान् निवपति 'विभूरसि'* इत्यादिविहितेन निवपनेन तान् प्रीणाति । यान्न निवपति तान् अपि 'सम्राडसि'* इत्यादिना अनुदेशेन प्रीणाति । पूर्ववद्यद्वृत्तेषु गतेरनुदात्तत्वम्, समासश्च ॥

इति षष्ठे काण्डे तृतीयप्रश्ने प्रथमोनुवाकः.

---

*सं. १-३-३.[1,9]

सुवर्गाय वा एतानि लोकाय हूय-
न्ते यद्वैसर्जनानि द्वाभ्यां गार्हपत्ये
जुहोति द्विपाद्यजमानः प्रतिष्ठित्या
आग्नीध्रे जुहोत्यन्तरिक्ष एवा क्रमत
आहवनीये जुहोति सुवर्गमेवैनं लो-
कं गमयति देवान् वै सुवर्गं लोकं

[1]सुवर्गायेति सुवः—गाय । वै । एतानि । लो-
काय । हूयन्ते । यत् । वैसर्जनानि । द्वाभ्याम् ।
गार्हपत्य इति गार्ह—पत्ये । जुहोति । द्विपादिति
द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—
स्थित्यै । आग्नीध्र इत्याग्नि—इध्रे । जुहोति । अन्तरि-
क्षे । एव । एति । क्रमते । आहवनीय इत्या—हव-
नीये । जुहोति । सुवर्गमिति सुवः—गम् । एव ।
एनम् । लोकम् । गमयति । [2]देवान् । वै । सुव-

---

[1]सुवर्गायेत्यादि ॥ अवान्तरदीक्षाविसर्जनार्थानि वैसर्जनानि 'त्वं सोम'* इत्यादि । द्वाभ्यामित्यादि । गतम् । गार्हपत्याग्नीध्राहवनीयानां पृथिव्यन्तरिक्षस्वर्गात्मकत्वात् प्रतिष्ठाहेतुत्वम् । यजमानस्याक्रमते अप्रतिबन्धेन गच्छति । वृत्तावात्मनेपदम् ॥

[2]देवान्वा इत्यादि ॥ यतः गच्छतः । 'शातुरनुमः' इति

*सं. १-३-४.[1]

यतो रक्षाꣳस्यजिघाꣳसन्ते सोमेन
राज्ञा रक्षाꣳस्यपहत्याप्तुमात्मानं कृ-
त्वा सुवर्गं लोकमायन्रक्षसामनु-
पलाभायात्तस्सोमो भवत्यथ ॥ ७॥
वैसर्जनानि जुहोति रक्षसामपहत्यै
त्वꣳ सोम तनूकृद्य इत्याह तनूकृ-

र्गमिति सुवः–गम् । लोकम् । यतः । रक्षाꣳसि ।
अजिघाꣳसन् । ते । सोमेन । राज्ञा । रक्षाꣳसि-
अपहत्येत्यप–हत्य । अप्तुम् । आत्मानम् । कृ।
त्वा । सुवर्गमिति सुवः–गम् । लोकम् । आयन् ।
रक्षसाम् । अनुपलाभायेत्यनुप–लाभाय । आत्तः ।
सोमः । भवति । अथ ॥ ७ ॥ वैसर्जनानि । जु-
होति । रक्षसाम् । अपहत्या इत्यप–हत्यै । [3]त्वम् ।
सोम । तनूकृद्भ्य इति तनूकृत्–भ्यः । इति ।

---

विभक्तेरुदात्तत्वम् । अप्तुं स्वल्पमात्मानं कृत्वा स्वर्गं गताः रक्ष-
सामनुपलाभाय रक्षांसि मोपलाभं जिघांसन् । यस्मादेवं तस्मा-
त्तदर्थं आत्तः गृहीतस्सोमो भवति । अथास्मिन्नवसरे वैसर्जनानि
जुहोति रक्षसामपहत्यै यथा भवति तथा गृहीतस्सोमो भवति ॥

[3]इदानीं मन्त्रपदानि व्याचष्टे—त्वं सोमेति ॥ तनूकृद्भ्येष

ह्येष द्वेषोभ्योन्यकृतेभ्य इत्याहा-
न्यकृतानि हि रक्षाᳬस्युरु यन्ताऽ-
सि वरूथमित्याहोरुणस्कृधीति वा-
वैतदाह जुषाणो अप्तुराज्यस्य वेत्वि-
त्याहाप्तुमेव यजमानं कृत्वा सुवर्गं
लोकं गमयति रक्षसामनुपलाभा-
या सोमं ददते ॥ ८ ॥ आ ग्राव्-

आह । तनूकृदिति तनू–कृत् । हि । एषः । द्वेषो-
भ्य इति द्वेषः–भ्यः । अन्यकृतेभ्य इत्यन्य–कृते-
भ्यः । इति । आह । अन्यकृतानीत्यन्य–कृतानि ।
हि । रक्षाᳬसि । उरु । यन्ता । असि । वरूथम् ।
इति । आह । उरु । नः । कृधि । इति । वाव ।
एतत् । आह । जुषाणः । अप्तुः । आज्यस्य ।
वेतु । इति । आह । अप्तुम् । एव । यजमानम् ।
कृत्वा । सुवर्गमिति सुवः–गम् । लोकम् । गमय-
ति । रक्षसाम् । अनुपलाभायेत्यनुप–लाभाय ।
एति । सोमम् । ददते ॥ ८ ॥ एति । ग्रावृण्णः ।

---

इति । कृती छेदने । तनूकृतां तनुच्छिदां रक्षःप्रभृतीनामपि
तनूकृत् । अन्यकृतानि हीति । अन्यैरमित्रैः कृतानि रक्षःप्रभृती-

णा आ वायव्यान्या द्रोणकलश-
मुत्पत्नीमा नयन्त्यन्वनांसि प्र व-
र्तयन्ति यावदेवास्यास्ति तेन सह
सुवर्गं लोकमेति नयवत्यर्चाऽऽग्नी-
ध्रे जुहोति सुवर्गस्य लोकस्याभि-

एति । वायव्यानि । एति । द्रोणकलशमिति द्रोण-कलशम् । उदिति । पत्नीम् । एति । नयन्ति । अन्विति । अनांसि । प्रेति । वर्तयन्ति । यावत् । एव । अस्य । अस्ति । तेन । सह । सुवर्गमिति सुवः-गम् । लोकम् । एति । [4]नयवत्येति नय-वत्या । ऋचा । आग्नीध्र इत्याग्नि-इध्रे । जुहोति । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिनीत्या

नि । वरूथमिति । अन्ये उक्तेभ्यो भयेभ्यो रक्षकं वरूथं वरणीयं नमस्कारवत्त्वमसीति उरुधनरूपेण स्तुतः उरुधनमस्मभ्यं देहीत्याहेत्यर्थः । 'नश्च धातुस्थोरुषुभ्यः' इति नसो णत्वम् । 'कः करत्' इति विसर्जनीयस्य सत्वम् । करोतेर्लोटि शपो लुक् । 'श्रुशृणुपृकृवृभ्यः' इति धिभावः । अन्नुमेवेत्यादि । गतम् ॥

[4]नयवत्येति ॥ आग्नीध्रे अग्निं प्रतिष्ठाप्य 'अग्ने नय'* इति नयशब्दवत्या जुहोति सुवर्गस्याभिमुख्येन प्राप्त्यै भवति ॥

*सं. १-४-४३.३

नीत्यै ग्रावृण्णो वायव्यानि द्रोणक-
लशमाग्नींध्र उपं वासयति वि ह्येनं
तैर्गृह्णते यत्सहोपंवासयेदपुवायेतं सौ-
म्यर्चा प्र पादयति स्वया ॥ १ ॥

इत्यभि-नीत्यै । [5]ग्रावृण्णः । वायव्यानि । द्रोण-
कलशमितिं द्रोण-कलशम् । आग्नींध्र इत्याग्निं-
इध्रे । उपेतिं । वासयति । वीतिं । हि । एनम् ।
तैः । गृह्णतें । यत् । सह । उपवासयेदित्युंप-वा-
सयेत् । अपुवायेतं । [6]सौम्या । ऋचा । प्रेतिं ।
पादयति । स्वया ॥ १ ॥ एव । एनम् । देवतया ।

---

[5]ग्रावादीनि तत्रैवाग्नीध्रे उपवासयति स्थापयति । तैर्ग्रावादि-
भिर्विभज्य विश्लेष्य एनं सोमं गृह्णते । एवं हि कर्तुं युज्यते
हिंसकत्वादस्यैषाम् । 'हि च' इति निघातप्रतिषेधः । अथ
यदि तैस्सह एनमुपवासयेत् । पूर्ववद्गतेरनुदात्तत्वम्, समासश्च ।
तदा अयमपुवायेत पूतीभवेत् । इहत्यं धात्वन्तरमित्येके । एते-
रपपूर्वस्येदं वैकृतमित्यन्ये । सर्वथा समानवाक्ये पदात्परत्वाभावः ॥

[6]सौम्येति ॥ 'सोमो जिगाति'* इत्यादिना हविर्धानं प्रति-
पादयति सोमम् । स्वया आत्मनैव देवतया प्रपादयति दक्षि-
णस्य हविर्धानस्य नीडे कृष्णाजिनास्तरणम् ॥

---

*सं. १-३-४.[5]

एवैनं देवतया प्र पादयत्यदित्यास्स-
दोऽस्यदित्यास्सद आ सीदेत्याह य-
थायजुरेवैतद्यजमानो वा एतस्य
पुरा गोप्ता भवत्येष वो देव सवित-
स्सोम इत्याह सवितृप्रसूत एवैनं

प्रेति । पादयति । [7]अदित्याः । सदः । असि ।
अदित्याः । सदः । एति । सीद । इति । आह ।
यथायजुरिति यथा—यजुः । एव । एतत् । [8]यज-
मानः । वै । एतस्य । पुरा । गोप्ता । भवति ।
एषः । वः । देव । सवितः । सोमः । इति । आह ।
सवितृप्रसूत इति सवितृ—प्रसूतः । एव । एनम् ।

---

[7]अदित्यास्सद इति ॥ तत्र राज्ञ आसादनम् । 'आदित्या-स्सद आ सीद'* इति यथा यजुर्वदति एवमेवैतदवगन्तव्यम्, तन्न व्याख्येयमिति ॥

[8]यजमानो वा इत्यादि ॥ यजमान एवास्य पूर्वं प्राग्वंशे रक्षक आसीत् । 'पुरि लुङ् चास्मे' इति लट् । इदानीं तु 'एष वो देव'* इत्यनेन देवेभ्यो रक्षार्थं संप्रयच्छति । तत्र सवितारमामन्त्र्य देवेभ्यः प्रदानात् सवितृप्रसूतः सवित्राऽनुज्ञात एव दवताभ्यस्संप्रयच्छति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्व-रत्वम् ॥

---

*सं.१-३-४.6–8

देवताभ्यस्सं प्र यच्छत्येतत्त्वꣳ सोम देवो देवानुपागा इत्याह देवो ह्येष सन् ॥ १० ॥ देवानुपैतीदमहं मनुष्यो मनुष्यानित्याह मनुष्यो ह्येष सन्मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमा-

देवताभ्यः । सम् । प्रेति । यच्छति । [9]एतत् । त्वम् । सोम । देवः । देवान् । उपेति । अगाः । इति । आह । देवः । हि । एषः । सन् ॥ १० ॥ देवान् । उपैतीत्युप-एति । इदम् । अहम् । मनुष्यः । मनुष्यान् । इति । आह । मनुष्यः । हि । एषः । सन् । मनुष्यान् । उपैतीत्युप-एति । [10]यत् । एतत् । यजुः । न । ब्रूयात् । अप्रजा इत्यप्र-जाः ।

[9]एतत्त्वमिति ॥ राज्ञ उपस्थानम् । एतावन्तं कालं बद्ध इव जितो राजा, यजमानश्च गोपायिता । इदानीं तु देवेषु रक्षत्सु देवानुपागतः मनुष्यस्सन् यजमानो मनुष्यान् एत्युपस्थानार्थं इत्यर्थः । उभयत्र 'हि च' इति निघातप्रतिषेधे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च ॥

[10]यदेतदित्यादि ॥ गतम्* । अप्रजा इति । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच् । उपावर्तते इति । 'गतिर्गतौ'

*सं. ६-१-२.८

नस्स्यात्सह प्रजया सह रायस्पो-
षेणेत्याह प्रजयैव पशुभिस्सहेमं
लोकमुपावर्तते नमो देवेभ्य इत्या-
ह नमस्कारो हि देवानाꣳ स्वधा
पितृभ्य इत्याह स्वधाकारो हि ॥
११ ॥ पितृणामिदमहं निर्वरुण-

अपशुः । यजमानः । स्यात् । सह । प्रजयेति प्र-
जया । सह । रायः । पोषेण । इति । आह । प्र-
जयेति प्र-जया । एव । पशुभिरिति पशु-भिः ।
सह । इमम् । लोकम् । उपावर्तत इत्युप-आव-
र्तते । [11]नमः । देवेभ्यः । इति । आह । नमस्का-
र इति नमः-कारः । हि । देवानाम् । स्वधेति
स्व-धा । पितृभ्य इति पितृ-भ्यः । इति । आ-
ह । स्वधाकार इति स्वधा-कारः । हि ॥ ११ ॥
पितृणाम् । [12]इदम् । अहम् । निरिति । वरुणस्य ।

इति प्रथमस्य गतेरनुदात्तत्वम्, समासश्च गत्याख्यातसमुदायेन ॥

[11]नमो देवेभ्य इति ॥ अञ्जलिकरणात् देवेभ्यः । नमस्कारो हि देवानां कार्यः । स्वधा पितृभ्यः स्वधा पितृभ्य इति दक्षिणा अञ्जलिं न्यञ्चं पितृभ्यः । स्वधाकारो हि पितृणां कार्य इति ॥

[12]इदमहमित्युपनिष्क्रमणम् ॥ वरुणपाशादेवेति । शालायां पृष्ठ्य

स्य पाशादित्याह वरुणपाशादेव
निर्मुच्यतेऽग्ने व्रतपत आत्मनः पू-
र्वा तनूरादेयेत्याहुः को हि तद्वेद य-
द्वसीयान्त्स्वे वशे भूते पुनर्वा ददा-

पाशात् । इति । आह । वरुणपाशादिति वरुण-पाशात् । एव । निरिति । मुच्यते । [13]अग्ने । व्रत-पत इति व्रत-पते । आत्मनः । पूर्वा । तनूः । आदेयेत्या-देया । इति । आहुः । कः । हि । तत् । वेद । यत् । वसीयान् । स्वे । वशे । भूते । पुनः ।

---

इवासीद्यजमानः । इदानीं निर्गच्छन् वरुणपाशादिव मुक्तो भवति ॥

[13]. 'अग्ने व्रतवते' इति प्रतीकग्रहणमिदं 'अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि'* इत्यवान्तरदीक्षाविसर्जनमन्त्रस्य । अस्याभिप्रायमाह—आत्मन इति ॥ परत्र निहिता आत्मनस्तनूः समाना पूर्वा तनूरात्मनैव । तत आदेया कर्मसमाप्तौ अग्निना यजमानेन च, न तु तत्रैव चिरं स्थाप्या । कुतः? को नाम तज्जानाति, यद्वसीयान् वसुमत्तरः श्रेष्ठो जनः स्वे वशे भूते आत्मवशं गते वस्तुनि तत्तादृक्षं पूर्वगृहीतं पूर्वस्वामिने किं वा ददाति किं वा न ददाति । तस्मात् वशीकरणात्प्रागेव द्रुततरमादेयेति आहुरभियुक्ताः । तस्मादस्मिन्मन्त्रे या मम तनूस्त्वय्यभूत्पूर्वं सेयमिदानीं मयि वर्तते । या तव तनूर्मय्यभूदेषा सेदानीं अवान्तरदीक्षाविसर्जने वैसर्जनहोमान्ते निवर्तते इति । 'चवायोगे प्रथमा' इति

---

*सं. १-३-४[14].

ति न वेति ग्रावाणो वै सोमस्य
राज्ञो मलिम्लुसेना य एवं विद्वा-
न्ग्रावण्ण आग्नीध्र उपवासयति
नैनं मलिम्लुसेना विन्दति ॥ १२ ॥

वा । ददाति । न । वा । इति । [14]ग्रावाणः । वै । सोमस्य । राज्ञः । मलिम्लुसेनेति मलिम्लु–सेना । यः । एवम् । विद्वान् । ग्रावण्णः । आग्नीध्र इत्याग्नि–इध्रे । उपवासयतीत्युप–वासयति । न । एनम् । मलिम्लुसेनेति मलिम्लु–सेना । विन्दति ॥ १२ ॥

अथ ददते स्वया सन्त्स्वधाकारो
हि विन्दति ॥ २ ॥

---

तिङ् ददातीत्येतन्न निपात्यते । यद्वृत्तं व्याख्यातेन नान्वीयते । ददाति वा न वेति यदिदमर्थरूपं कस्तद्वेदेति ॥

[14]ग्रावाण इति ॥ यदुक्तं 'द्रोणकलशमाग्नीध्र उपवासयति'* इति । पूर्ववद्गतेः निघातस्समासश्च ॥

इति षष्ठे तृतीये द्वितीयोनुवाकः.

---

*सं. ६-३-२.[5]

वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपस्स्वयैवैनं देवतयाऽच्छैत्यत्यन्यानगां नान्यानुपागामित्याहाति ह्यन्यानेति ना-

[1] वैष्णव्या । ऋचा । हुत्वा । यूपम् । अच्छ । एति । वैष्णवः । वै । देवतया । यूपः । स्वया । एव । एनम् । देवतया । अच्छ । एति । [2] अतीति । अन्यान् । अगाम् । न । अन्यान् । उपेति । अगाम् । इति । आह । अतीति । हि । अन्यान् ।

---

[1] वैष्णव्येत्यादि ॥ 'उरु विष्णो'* इत्यनया ऋचा यूपाहुत्या यूपमभि व्याप्तुं गच्छति । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वात् 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । वैष्णवो वै इत्यादि । गतम् । गवादिष्वपि तद्धितत्वस्य भावात् देवतयेति विशेष्यते । वनस्पत्यादीनां वैष्णवत्वात्तद्विकारस्य यूपस्य वैष्णवत्वम् ॥

[2] यूपार्थस्य वृक्षस्योपस्थानं 'अत्यन्यान्'† इति । अति हीति । कांश्चिद्यज्ञियानेव पलाशादीन् लक्षणाद्धीनान् उपेत्यैव अत्येति । अतिक्रम्य त्यक्त्वा कांश्चिदयज्ञियानकर्मार्हान्नैवोपगच्छति, तस्मादेवमाहेति । 'हि च' इति निघाताभावः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, 'उदात्तवता तिङा' इति समासः ॥

---

*सं १-३-४.[4] †सं. १-३-५[1].

न्यानुपैत्यर्वाक्त्वा परैरविदं परोवं-
रैरित्याहार्वाग्घ्येनं परैर्विन्दति परो-
वरैस्तं त्वा जुषे ॥ १३ ॥ वैष्णवं
देवयज्याया इत्याह देवयज्यायै ह्ये-
नं जुषते देवस्त्वा सविता मध्वाऽ-

एति । न । अन्यान् । उपैतीत्युप-एति । [3]अर्वाक् । त्वा । परैः । अविदम् । परः । अवरैः । इति । आह । अर्वाक् । हि । एनम् । परैः । विन्दति । परः । अवरैः । [4]तम् । त्वा । जुषे ॥ १३ ॥ वैष्णवम् । देवयज्याया इति देव-यज्यायै । इति । आह । देवयज्याया इति देव-यज्यायै । हि । एनम् । जुषते । [5]देवः । त्वा । सविता । मध्वा ।

---

[3]अर्वागिति ॥ परैरुत्कृष्टगुणैः परः परस्ताद्दूरे वर्तमानः तस्मा देवमाहेति । परशब्दाच्छान्दसोसिप्रत्ययः । पूर्ववत् 'हि च' इति निघाताभावः ॥

[4]तं त्वेत्यादि ॥ गतम्* । देवानां यागो देवयज्या 'छन्दसि निष्टर्क्य' इत्यादौ निपात्यते ॥

[5]यूपमाज्येनानक्ति—देवस्त्वा सवितेति । गतम्* ॥

---

*सं १-३-५, I—2

नक्त्वित्याह तेजसैवैनमनक्त्योषधे
त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसी-
रित्याह वज्रो वै स्वधितिश्शान्त्यै
स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन
शकलेन सह तेजः परा पतति यः
प्रथमश्शकलः परापतेत्तमप्या हं-

अनक्तु । इति । आह । तेजसा । एव । एनम् । अनक्ति । [6]ओषधे । त्रायस्व । एनम् । स्वधित इति स्व-धिते । मा । एनम् । हिꣳसीः । इति । आह । [7]वज्रः । वै । स्वधितिरिति स्व-धितिः । शान्त्यै । [8]स्वधितेरिति स्व-धितेः । वृक्षस्य । बि-भ्यतः । प्रथमेन । शकलेन । सह । तेजः । परेति । पतति । यः । प्रथमः । शकलः । परापते-दिति परा-पतेत् । तम् । अपि । एति । हरेत् ।

---

[6]ऊर्ध्वाग्रं बर्हिरुच्छ्रयति—ओषधे त्रायस्वेति ॥

[7]स्वधितिना तिर्यञ्चं प्रहरति—वज्रो वा इति ॥ हिंसकत्वाद्वज्र एव स्वधितिः । तस्माच्छान्त्यर्थं 'मैनं हिंसीः'* इति वचनमित्यर्थः ॥

[8]स्वधितेरित्यादि ॥ स्वधितेः बिभ्यतो वृक्षस्य तेजः प्रथमेन शकलेन सह परापतति विनश्यति, तस्मात्प्रथमं शकलमप्याहरेत् गृहीत्वा आग-

*सं. १-३-५.[4]

रेथ्सतेंजसम् ॥ १४ ॥ एवैनमा हर-
न्तीमे वै लोका यूपात्प्रयतो बिभ्य-
ति दिवमग्रेण मा लेखीरन्तरिक्षं
मध्येन मा हिꣳसीरित्याहैभ्य एवै-
नं लोकेभ्यंश्शमयति वनंस्पते श-
तवंल्शो वि रोहेत्याव्रश्वंने जुहोति

सतेंजसमिति स–तेजसम् ॥ १४ ॥ एव । ए-
नम् । एति । हरति । [9]इमे । वै । लोकाः । यूपात् ।
प्रयत इति प्र–यतः । बिभ्यति । दिवम् । अग्रेण ।
मा । लेखीः । अन्तरिक्षम् । मध्येन । मा । हिꣳ-
सीः । इति । आह । एभ्यः । एव । एनम् । लो-
केभ्यः । शमयति । [10]वनंस्पते । शतवंल्श इति
शत–वल्शः । वीति । रोह । इति । आव्रश्वंन इ-
त्या–व्रश्वंने । जुहोति । तस्मात् । आव्रश्वंनादि-

च्छेत, न केवलं यूपमेव । एवं कृते तेजस्सहितमेवैनमाहरति ॥

[9]इमे वा इत्यादि ॥ यूपात्प्रयतः प्रचलतः इमे लोका बिभ्यति पतन्नयं यस्मादवष्टभ्नोति । एतेश्शतरि इणो यणि 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । तस्मात् 'दिवमग्रेण'* इत्यादिना पतन्तमनुमन्त्रयते ॥

[10]आव्रश्वने हिरण्यं निधाय परिस्तीर्याभिजुहोति । आव्रश्चनं

*सं. १-३-५.5

तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उ-
त्तिष्ठन्ति सहस्रवल्शा वि वयꣳ रु-
हेमेत्याहाशिषमेवैतामा शास्तेऽन-
क्षसङ्गम् ॥ १५ ॥ वृश्चेद्यदक्षसङ्गं वृ-
श्चेदधईषं यजमानस्य प्रमायुकꣳ

त्या-व्रश्चनात् । वृक्षाणाम् । भूयाꣳसः । उदिति । तिष्ठन्ति । [11]सहस्रवल्शा इति सहस्र-वल्शाः । वीति । वयम् । रुहेम । इति । आह । आशिष-मित्या-शिषम् । एव । एताम् । एति । शास्ते । [12]अनक्षसंगमित्यनक्ष-संगम् ॥ १५ ॥ वृश्चेत् । यत् । अक्षसंगमित्यक्ष-संगम् । वृश्चेत् । अधई-षमित्यधः-ईषम् । यजमानस्य । प्रमायुकमिति

---

व्रश्चनस्थानम् । तस्मादित्यादि । भूयांसो बहुतराः प्ररोहा उत्तिष्ठन्ति, 'शतवल्शो वि रोह'* इति वचनात् ॥

[11]'सहस्रवल्शाः'* इत्यात्माभिमर्शः । अनेनात्माभिमर्शनेनै-तामाशिषमाशास्ते ॥

[12]अनक्षसङ्गमित्यादि ॥ अक्षस्संगस्सज्यमानो यत्र तदक्षसङ्गम् । अनक्षसङ्गं तावति परिमाणे यूपं वृश्चेत् । विभक्तिव्यत्ययः । क्रियाविशेषणं वा । अथ यद्यक्षसङ्गं वृश्चेत् । छान्दसमन्तो-

---

*सं. १-३-५.६-७

स्याद्यं कामयेताप्रतिष्ठितस्स्यादि-
त्यारोहं तस्मै वृश्चेदेष वै वनस्पती-
नामप्रतिष्ठितोप्रतिष्ठित एव भवति
यं कामयेतापशुस्स्यादित्यपर्णं त-
स्मै शुष्काग्रं वृश्चेदेष वै वनस्पती-

प्र–मायुकम् । स्यात् । [13]यम् । कामयेत । अप्र-
तिष्ठित इत्यप्रति–स्थितः । स्यात् । इति । आ-
रोहमित्या–रोहम् । तस्मै । वृश्चेत् । एषः । वै ।
वनस्पतीनाम् । अप्रतिष्ठित इत्यप्रति–स्थितः ।
अप्रतिष्ठित इत्यप्रति–स्थितः । एव । भवति ।
[14]यम् । कामयेत । अपशुः । स्यात् । इति ।
अपर्णम् । तस्मै । शुष्काग्रमिति शुष्क–अ-
ग्रम् । वृश्चेत् । एषः । वै । वनस्पतीनाम् । अ-

---

दात्तत्वम् । अधिकरणे वा घञ्, थाथादिस्वरः । अधः ईष-
योरधस्ताद्यदि तद्भवति तदा यजमानस्य सम्बन्धि तद्वस्तु पश्वा-
दिकं प्रमायुकं मरणशीलं स्यात् । तिरश्चीनावक्षौ प्राचीने ईषे ।
ईषयोरधस्तादधईषं, अव्ययीभावः, 'तृतीयासप्तम्योर्बहुलम्' इत्य-
म्भावः । अधईषे सतीति ॥

[13]यमित्यादि ॥ आरोहः शाखासु प्ररूढः । एष वा इति
वनस्पतीनां मध्ये एषोप्रतिष्ठितः, भूमावनास्थितत्वात् ॥

नामपशव्योऽपशुरेव भवति यं का-
मयेत पशुमान्त्स्यादिति बहुपर्णं
तस्मै बहुशाखं वृश्चेदेष वै॥ १६ ॥
वनस्पतीनां पशव्यः पशुमानेव भ-
वति प्रतिष्ठितं वृश्चेत्प्रतिष्ठाकाम-
स्यैष वै वनस्पतीनां प्रतिष्ठितो य-

पशव्यः । अपशुः । एव । भवति । [15]यम् । का-
मयेत । पशुमानिति पशु–मान् । स्यात् । इति ।
बहुपर्णमिति बहु–पर्णम् । तस्मै । बहुशाखमिति
बहु–शाखम् । वृश्चेत् । एषः । वै ॥ १६ ॥ वन-
स्पतीनाम् । पशव्यः । पशुमानिति पशु–मान् ।
एव । भवति । [16]प्रतिष्ठितमिति प्रति–स्थितम् ।
वृश्चेत् । प्रतिष्ठाकामस्येति प्रतिष्ठा–कामस्य । ए-
षः । वै । वनस्पतीनाम् । प्रतिष्ठित इति प्रति–

[14]यमित्यादि ॥ गतम्* ॥ अपशव्य इति । पशुभ्यो हितो न भवतीति । 'उगवादिभ्यो यत्', 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । 'स्वरितो वाऽनुदात्ते पदादौ' इति संहितायां स्वर्यते ॥

[15]यमित्यादि ॥ गतम्* ॥

[16]प्रतिष्ठितमित्यादि ॥ प्रतिष्ठितानां मध्ये एष प्रतिष्ठितः,

*सं. ६-२-३, 13—14

स्समे भूम्यै स्वाद्योनेरूढः प्रत्येव
तिष्ठति यः प्रत्यङुपनतस्तं वृश्चे-
त्स हि मेधमभ्युपनतः पञ्चारत्निं
तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो य-

स्थितः । यः । समे । भूम्यै । स्वात् । योनेः ।
ऊढः । प्रतीति । एव । तिष्ठति । [17]यः । प्रत्यङ् ।
उपनत इत्युप-नतः । तम् । वृश्चेत् । सः । हि ।
मेधम् । अभीति । उपनत इत्युप-नतः । [18]पञ्चा-
रत्निमिति पञ्च-अरत्निम् । तस्मै । वृश्चेत् । यम् ।
कामयेत । उपेति । एनम् । उत्तर इत्युत्-तरः ।

यस्समे तुल्ये भूम्यै भूम्या एव सम्बन्धिन्यवयवे तनूपरि तते वृक्षावयवे किंचित्स्वादेव योनेर्बीजादेः न तु शाखादेः ऊढः जातः । तस्माद्भूमिप्ररूढं स्वतन्त्रमेव वृश्चेदिति ॥

[17]यः प्रत्यङ्ङित्यादि ॥ यः प्रत्यग्दिग्गतस्स खलु मेधं यज्ञं क्रियमाणं लक्षीकृत्य उपनतो भवति ॥

[18]पञ्चारत्निमित्यादि ॥ नित्येष्वेव काम्या विधय एते, अन्यस्यानभिधानादित्येके । 'यूपं मिनोति'* इति सामान्यविधानात् अनियतपरिमाणो नित्यः, नियतपरिमाणा एते काम्या इत्यन्ये । चतुर्विंशत्यङ्गुलयोरत्निः । पञ्च अरत्नयः परिमाणमस्येति उत्पन्नस्यार्हीयस्य 'अध्यर्धपूर्वाद्द्विगोः' इति लुक्, 'द्विगौ प्रमाणे' इति पूर्वपदप्रकृतिस्वरत्वम् । उत्तरो यज्ञ उक्थ्यादिः । पञ्चाक्षरा पञ्चा-

*सं. ६-३-४.

ज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञः ॥ १७ ॥ नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतवं ऋतुष्वेव प्रति तिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्करी पशवश्शक्करी पशूनेवावं रुन्धे नवारत्निं तेजस्कामस्य त्रिवृता

यज्ञः । नमेत् । इति । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः ॥ १७ ॥ नमति । [19]षडरत्निमिति षट्—अरत्निम् । प्रतिष्ठाकामस्येति प्रतिष्ठा—कामस्य । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठति । [20]सप्तारत्निमिति सप्त—अरत्निम् । पशुकामस्येति पशु—कामस्य । सप्तपदेति सप्त—पदा । शक्करी । पशवः । शक्करी । पशून् । एव । अवेति । रुन्धे । [21]नवारत्निमिति नव—अरत्निम् । तेजस्कामस्येति तेजः—कामस्य । त्रिवृतेति त्रि—वृ-

---

क्षरपदा पङ्क्तिः, पाङ्क्तत्वं यज्ञस्योक्तम् । पङ्क्तिशब्द उत्सादिः ॥

[19]षडरत्निमित्यादि ॥ गतम् ॥

[20—25]पशवश्शाक्वरीति ॥ तद्धेतुभूतत्वात्ताच्छब्द्यम् । एवं तेज-

स्तोमेन संमितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यै-कादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगि-न्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृ-व्याभिभूत्यै सप्तदशारत्निं प्रजाका-मस्य सप्तदशः प्रजापतिः प्रजाप-

तां । स्तोमेन । सम्मितमिति सं-मितम् । तेजः। त्रिवृदिति त्रि-वृत् । तेजस्वी । एव । भवति । [22]एकादशारत्निमित्येकादश-अरत्निम् । इन्द्रियकामस्येतीन्द्रिय-कामस्य । एकादशाक्षरेत्येकादश-अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुक् । इन्द्रियावी । एव । भवति । [23]पञ्चदशारत्निमिति पञ्चदश-अरत्निम् । भ्रातृव्यवत इति भ्रातृव्य-वतः । पञ्च-दश इति पञ्च-दशः । वज्रः । भ्रातृव्याभिभूत्या इति भ्रातृव्य-अभिभूत्यै । [24]सप्तदशारत्निमिति सप्तदश-अरत्निम् । प्रजाकामस्येति प्रजा-कामस्य । सप्तदश इति सप्त-दशः । प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-पतेः । आप्त्यै।

त्रिवृदित्यादि द्रष्टव्यम् । पञ्चदशो वज्र इति । भ्रातृव्याभिभव-

तेराप्त्या एकविँशत्यरत्निं प्रति-
ष्ठाकामस्यैकविँशस्स्तोमानां प्र-
तिष्ठा प्रतिष्ठित्या अष्टाश्रिर्भवत्य-
ष्टाक्षरा गायत्री तेजो गायत्री गायत्री
यज्ञमुखं तेजसैव गायत्रिया यज्ञमु-
खेन संमितः ॥ १८ ॥

[25]एकविँशत्यरत्निमित्येकविँशति–अरत्निम् । प्र-
तिष्ठाकामस्येति प्रतिष्ठा–कामस्य । एकविँश इत्येक–विँशः । स्तोमानाम् । प्रतिष्ठेति प्रति–स्था । प्रतिष्ठित्या इति प्रति–स्थित्यै । [26]अष्टाश्रिरित्यष्टा–अश्रिः । भवति । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । तेजः । गायत्री । गायत्री । यज्ञमुखमिति यज्ञ–मुखम् । तेजसा । एव । गायत्रिया । यज्ञमुखेनेति यज्ञ–मुखेन । सम्मित इति सं–मितः ॥ १८ ॥

जुषे सतेजसमनक्षसंगं बहुशाखं वृश्चेदेष वै यज्ञ उपैनमुत्तरो यज्ञ आप्त्या एकान्न विँशतिश्च ॥३॥

---

हेतुत्वात् । सप्तदशः प्रजापतिरिति । सप्तदशाक्षरत्वात् । पञ्च-दशादयश्शब्दा व्याख्याताः ॥

[26]अष्टाश्रिरित्यादि ॥ अष्टत्वान्वयात् तेजोरूपगायत्र्यात्मकयज्ञ-तुल्यो यूपो भवति ॥

इति षष्ठे तृतीये तृतीयोनुवाकः.

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति पराञ्चं प्रोक्षति पराङिव हि सुवर्गो लोकः क्रूरमिव वा एतत्करोति यत्खनत्यपोऽवं नयति शान्त्यै यवंमतीरवं नयत्यूर्ग्वै यवो यजं-

[1]पृथिव्यै । त्वा । अन्तरिक्षाय । त्वा । दिवे । त्वा । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । प्रेति । उक्षति । पराञ्चम् । प्रेति । उक्षति । पराङ् । इव । हि । सुवर्ग इति सुवः–गः । लोकः । [2]क्रूरम् । इव । वै । एतत् । करोति । यत् । खनंति । अपः । अवेति । नयति । शान्त्यै । यवंमतीरिति यवं–मतीः । अवेति । नयति । [3]ऊर्क् । वै । यवः । [4]यजमानेन । यूपः । सम्मित इति सं–

[1]यूपं प्रोक्षति—पृथिव्यै त्वेति ॥ पराञ्चमिति । मूलादारभ्य ऊर्ध्वं प्रोक्षति । 'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् । पराङिति । इत ऊर्ध्वगमनोऽस्मिन् स्वर्गो भवति ॥

[2]क्रूरमिवेत्यादि ॥ गतम् ॥*

[3]ऊर्ग्वा इति ॥ ऊर्गन्नं तत्साधनत्वात्ताच्छब्द्यम् ॥

[4]यजमानेन तुल्यो यूपः प्रधानसाधनत्वात्, तुल्यप्रमाणत्वाद्वा ।

*सं ६-२-१०.४

मानेन यूपस्संमितो यावानेव यज-
मानस्तावतीमेवास्मिन्नूर्जं दधाति ॥
११ ॥ पितृणाꣳ सदनमसीति ब-
र्हिरव स्तृणाति पितृदेवत्याꣳ ह्ये-
तद्यन्निखातं यद्बर्हिरनवस्तीर्य मि-
नुयात्पितृदेवत्यो निखातस्स्याद्बर्-

मितः । यावान् । एव । यजमानः । तावतीम् । एव । अस्मिन्न् । ऊर्जम् । दधाति ॥ ११ ॥ [5]पि-तृणाम् । सदनम् । असि । इति । बर्हिः । अवेति । स्तृणाति । पितृदेवत्यमिति पितृ–देवत्यम् । हि । एतत् । यत् । निखातमिति नि–खातम् । यत् । बर्हिः । अनवस्तीर्येत्यनव–स्तीर्य । मिनुयात् । पितृदेवत्य इति पितृ–देवत्यः । निखात इति नि–खातः । स्यात् । बर्हिः । अवस्तीर्येत्यव–स्तीर्य ।

---

तस्माद्यजमानाय पर्याप्तामूर्जमस्मिन् यूपे दधाति । यद्वा—यावान् यावत्परिमाणः सपरिवारो यावत्कालं जीवी वा तत्पर्याप्तामूर्जं दधाति ॥

[5]पितृणामित्यादि ॥ गतम्* । पितृदेवत्यं निखातं भूमिप्रविष्टमेतत् पित्र्यं संपन्नं भूमित्वं जहाति । देवतान्तात्तादर्थ्ये यत्,

---

*सं ६-२-१०.[6]

हिर॑वस्तीर्य॑ मिनोत्य॒स्यामे॒वैनं॑ मि-
नोति यूपशक॒लमवा॑स्यति स॒तेज-
सं॒मे॒वैनं॑ मिनोति दे॒वस्त्वा॑ सवि॒-
ता मध्वा॑ऽन॒क्त्वित्या॑ह॒ तेज॑सै॒वैनम-

मि॒नोति॒ । अ॒स्याम् । ए॒व । ए॒नम् । मि॒नोति॒ । [6]यू॒प॒शक॒लमिति॑ यूप-श॒क॒लम् । अवेति॑ । अ॒स्य॒-ति॒ । स॒तेज॒समिति॒ स-ते॒ज॒सम् । ए॒व । ए॒नम् । मि॒नोति॒ । [7]दे॒वः । त्वा॒ । स॒वि॒ता । मध्वा॑ । अ॒न॒-क्तु॒ । इति॑ । आ॒ह॒ । तेज॑सा । ए॒व । ए॒नम् । अ॒न॒-

---

छान्दसो दीर्घः । पितृदेवत्य इति । निखातस्सर्वोऽपि यूपः पितृदेवत्यस्स्यात् बर्हिरवस्तरणाभावे । मिनुयादिति । प्रक्षिपेत् । डु मिञ् प्रक्षेपणे । अस्यामिति । बर्हिरवस्तरणावस्थायामेव पृथिव्यामेव वा यूपं मिनोति भूम्यवस्थानात् । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ॥

[6]यूपशकलमिति । प्रथमगृहीतं गर्तेऽवास्यति । सतेजसमिति । तेजसा सहितमेव यूपं प्रक्षिपति । 'प्रथमेन शकलेन सह तेजः परा पतति'* इति तस्य तेजस्त्वस्योक्तत्वात् ॥

[7]यूपस्याग्रमनक्ति—देवस्त्वा सवितेति ॥ गतम्† ॥

---

*सं. ६-३-३.[8] †सं. ६-३-३.[5]

नक्ति सुपिप्पलाभ्यस्त्वौषधीभ्य इ-
ति चषालं प्रति ॥ २० ॥ मुञ्चति
तस्माच्छीरूषत ओषधयः फलं गृ-
ह्णन्त्यनक्ति तेजो वा आज्यं यज-
मानेनाग्निष्ठाश्रिस्संमिता यदग्निष्ठा-
मश्रिमनक्ति यजमानमेव तेजसाऽ-

क्ति । [8]सुपिप्पलाभ्य इति सु-पिप्पलाभ्यः । त्वा ।
ओषधीभ्य इत्योषधि-भ्यः । इति । चषालम् । प्र-
तीति ॥ २० ॥ मुञ्चति । तस्मात् । शीरूषतः ।
ओषधयः । फलम् । गृह्णन्ति । [9]अनक्ति । तेजः ।
वै । आज्यम् । यजमानेन । अग्निष्ठेत्यग्नि-स्था ।
अश्रिः । सम्मितेति सं-मिता । यत् । अग्निष्ठा-
मित्यग्नि-स्थाम् । अश्रिम् । अनक्ति । यजमानम् ।

---

[8]सुपिप्पलाभ्य इति ॥गतम्* ॥

[9]अनक्तीति ॥ अग्निष्ठामश्रिमाज्येनेति सामर्थ्याद्गम्यते; यदा-
ह 'तेजो वा आज्यम्' इत्यादि । अपदात्परत्वान्निघाताभावः । तेजो-
हेतुराज्यम् । यजमानेन तुल्या अग्निष्ठा अग्निपार्श्वस्था अश्रिः ।
आन्तमिति । यावदन्तं अन्तमपि गृहीत्वा सर्वामग्निष्ठामश्रिमनक्ति
तेजसा सर्वं यजमानमनक्ति ॥

---

*सं. ६-१-३,18

नक्त्यान्तमनक्त्यान्तमेव यजमानं
तेजसाऽनक्ति सर्वतः परिं मृशत्य-
परिवर्गमेवास्मिन्तेजो दधात्युद्दिवꣳ
स्तभानान्तरिक्षं पृणेत्याहैषां लो-
कानां विधृत्यै वैष्णव्यर्चा ॥ २१ ॥

एव । तेजसा । अनक्ति । [10]आन्तमित्यां—अन्तम् । अनक्ति । आन्तमित्यां—अन्तम् । एव । यजमानम् । तेजसा । अनक्ति । सर्वतः । परीति । मृशति । अपरिवर्गमित्यपरि—वर्गम् । एव । अस्मिन् । तेजः । दधाति । [11]उदिति । दिवम् । स्तभान । एति । अन्तरिक्षम् । पृण । इति । आह । एषाम् । लोकानाम् । विधृत्या इति वि—धृत्यै । [12]वैष्णव्या । ऋचा ॥ २१ ॥ कल्पयति । वैष्णवः । वै । देवत-

---

[10]सर्वं यूपं परिमृशति परिमृजति नाग्निष्ठाश्रिमात्रमेव । पृथग्वचनं तु अश्र्यग्रचार्थम् । केचिदाहुः—अग्निष्ठायाः पृथग्वचनमनर्थकं मा भूदिति विकल्प इति । अपरे पुनराहुः—अग्निष्ठामेव सर्वां हस्तेन परिमृशतीति । अपरिवर्गमिति । किंचिदप्यपरिशेष्य सर्वमपि तेजो यजमाने दधाति ॥

[11]यूपमुच्छ्रयति—उद्दिवमिति ॥ व्याख्यातम्* ॥

[12]वैष्णव्येति ॥ 'ते ते धामानि'† इत्यनया 'विष्णोः

---

*सं ६-२-१०,[7] †सं, १-३-६,[11]

कल्पयति वैष्णवो वै देवतया
यूपस्स्वयैवैनं देवतया कल्पयति
द्वाभ्यां कल्पयति द्विपाद्यजमानः
प्रतिष्ठित्यै यं कामयेत तेजसैनं दे-
वताभिरिन्द्रियेण व्यर्धयेयमित्यग्नि-
ष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं
वाऽतिं नावयेत्तेजसैवैनं देवताभिरि-

या । यूपः । स्वया । एव । एनम् । देवतया । क-
ल्पयति । [13]द्वाभ्याम् । कल्पयति । द्विपादिति द्वि-
पात् । यजमानः । प्रतिष्ठित्या इति प्रति-स्थि-
त्यै । [14]यम् । कामयेत । तेजसा । एनम् । देवता-
भिः । इन्द्रियेण । वीति । अर्धयेयम् । इति । अ-
ग्निष्ठामित्यग्नि-स्थाम् । तस्य । अश्रिम् । आहव-
नीयादित्या-हवनीयात् । इत्थम् । वा । इत्थम् ।
वा । अतीति । नावयेत् । तेजसा । एव । एनम् ।

कर्माणि पश्यत '* इत्यनया च कल्पयति आपन्नमार्गेष्वनवद्यं स्थापयति । व्याख्यातमन्यत्† ॥

[13]द्वाभ्यामिति ॥ सामान्येन विधाय संख्यामनेन विधत्ते ॥

[14]यमित्यादि ॥ तेजआदिभिः व्यर्धयेयमिति वियोजयेयमिति

*सं. १-३-६[12] †सं. ६-३-३.[1]

न्द्रियेण व्यर्धयति यं कामयेत ते-
जसैनं देवताभिरिन्द्रियेण समर्धये-
यमिति ॥२२॥ अग्निष्ठां तस्याश्रिं-
माहवनीयेन सं मिनुयात्तेजसैवैनं
देवताभिरिन्द्रियेण समर्धयति ब्रह्म-
वनिं त्वा क्षत्रवनिमित्याह यथाय-

देवताभिः । इन्द्रियेणं । वीतिं । अर्धयति । [15]यम् ।
कामयेत । तेजसा । एनम् । देवताभिः । इन्द्रिये-
णं । समितिं । अर्धयेयम् । इतिं ॥ २२ ॥ अग्नि-
ष्ठामित्यंग्नि–स्थाम् । तस्यं । अश्रिम् । आहवनी-
येनेत्या–हवनीयेन । समितिं । मिनुयात् । तेजं-
सा । एव । एनम् । देवताभिः । इन्द्रियेणं । समि-
तिं । अर्धयति । [16]ब्रह्मवनिमिति ब्रह्म–वनिम् ।
त्वा । क्षत्रवनिमितिं क्षत्र–वनिम् । इतिं । आह ।

---

यं कामयेत तस्याग्निष्ठामाश्रिमाहवनीयादतिनावयेत् तेजआदिना व्यर्धं करोति यजमानम् ॥

[15]यमित्यादि ॥ समर्धयेयं समृद्धं कुर्यामिति । सम्मिनुयादिति । संगतां मिनुयात् आर्जवेन स्थापयेत् । गतमन्यत्* ॥

[16]'ब्रह्मवनिम्'† इति पुरीषेण पर्यूहनम् ॥

---

*सं ६-३-४.[14] †सं. ६-२-१३,[9]

जुरेवैतत्परि व्ययत्यूर्ग्वै रंशना य-
जंमानेन यूपस्संमितो यजंमानमे-
वोर्जा समंर्धयति नाभिदघ्ने परि व्य-
यति नाभिदघ्न एवास्मा ऊर्जं दधा-
ति तस्मांन्नाभिदघ्न ऊर्जा भुंञ्जते यं

यथायजुरितिं यथा–यजुः । एव । एतत् । [17]परीतिं । व्ययति । ऊर्क् । वै । रशना । यजंमानेन । यूपः । सम्मित इति सं–मितः । यजंमानम् । एव । ऊर्जा । समितिं । अर्धयति । नाभिदघ्न इतिं नाभि–दघ्ने । परीतिं । व्ययति । नाभिदघ्न इतिं नाभि–दघ्ने । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । नाभिदघ्न इतिं नाभि–दघ्ने । ऊर्जा । भुञ्जते । [18]यम् । कामयेत । ऊर्जा । एनम् ॥ २३ ॥

---

[17]परि व्ययतीति ॥ रशनया परितो वेष्टयति यूपम् । ऊर्वा इत्यादि । ऊर्गन्नम् । नाभिदघ्ने नाभिप्रमाणे मध्यमो रशनागुणो यथा भवति तथा परिव्ययति । 'प्रमाणे द्वयसच्' इत्यादिना दघ्नच् । नाभिदघ्न एवेति । नाभिदघ्ने नाभिप्रमाण एवोदरदेशे अस्मै यजमानस्य ऊर्जं स्थापयति नोर्ध्वं नाप्यधो विगमयति । तस्मान्नाभिदघ्न एव प्रदेशे स्थितया ऊर्जा अन्नेन भुञ्जते ॥

[18]यमित्यादि ॥ व्यर्धयेयं वियोजयेयमेनमिति । ऊर्ध्वामित्यादि ।

कामयेतोर्जैनम्॥२३॥ व्यर्धयेयमि-
त्यूर्ध्वां वा तस्यावाचीं वाऽवोहेदूर्जै-
वैनं व्यर्धयति यदि कामयेत वर्षुं-
कः पर्जन्यस्स्यादित्यवाचीमवोहेद्वृ-
ष्टिमेव नि यच्छति यदि कामये-
तावर्षुकस्स्यादित्यूर्ध्वामुदूहेद्वृष्टि-

वीति। अर्धयेयम्। इति। ऊर्ध्वाम्। वा। तस्य।
अवाचीम्। वा। अवेति। ऊहेत्। ऊर्जा। एव।
एनम्। वीति। अर्धयति। [19]यदि। कामयेत।
वर्षुकः। पर्जन्यः। स्यात्। इति। अवाचीम्।
अवेति। ऊहेत्। वृष्टिम्। एव। नीति। यच्छति।
[20]यदि। कामयेत। अवर्षुकः। स्यात्। इति।
ऊर्ध्वाम्। उदिति। ऊहेत्। वृष्टिम्। एव। उदि-

---

नाभिदघ्नादूर्ध्वपरिमाणामवाक्परिमाणां वा रशनामवोहेत् वक्ष्यमाण-प्रकारेणोपगूहेत्। व्यर्धयत्यूर्जा॥

[19]यदीत्यादि॥ वर्षुकः वर्षणशीलः पर्जन्यस्स्यात् इति यदि-कामयेत नाभिदघ्न एव परिवीतां रशनामवाचीमवोहेत् ऊर्ध्वमुत्कृ-ष्य पाशमवगूहेत्। वृष्टिं नियच्छति नीचैः प्रवर्तयति॥

[20]अवर्षकामनया तु ऊर्ध्वामुदूहेत् पाशमधोवकृष्य ऊर्ध्वमुदूहेत्।

मेवोद्यच्छति पितॄणां निखांतं मनु-
ष्याणामूर्ध्वं निखांतादा रंशनाया
ओषंधीना॰ रशना विश्वेषाम्॥२४॥
देवानांमूर्ध्व॰ रंशनाया. आ चषा-
लादिन्द्रस्य चषाल॰ साध्यानाम-
तिरिक्त॰ स वा एष सर्वदेवत्यो य-

ति । यच्छति । [21]पितॄणाम् । निखातमिति नि-खातम् । मनुष्याणाम् । ऊर्ध्वम् । निखातादिति नि-खातात् । एति । रशनायाः । ओषधीनाम् । रशना । विश्वेषाम् ॥ २४ ॥ देवानाम् । ऊर्ध्वम् । रशनायाः । एति । चषालात् । इन्द्रस्य । चषा-लम् । साध्यानाम् । अतिरिक्तमित्यति-रिक्तम् । सः । वै । एषः । सर्वदेवत्य इति सर्व-देवत्यः ।

---

वृष्टिमुद्यच्छति ऊर्ध्वं नयति, ततश्चावर्षुकः पर्जन्यस्स्यादिति । 'लषपत' इत्यादिना उकञ् ॥

[21]पितृणामित्यादि ॥ यूपस्य निखातमवटे प्रक्षिप्तमुपरवाख्यं तत्पितृणाम् । छान्दसो दीर्घाभावः । खनतेर्निष्ठायां 'जनसन' इत्यात्वम्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । तस्मा-दूर्ध्वमारशनायाः रशनास्थानात्प्राक् मनुष्याणाम् । रशनास्थानं तु ओषधीनां यूपविभागविधानाद्रशनायास्तत् स्थानं लक्ष्यते । तत

यूपो यद्यूपं मिनोति सर्वा एव दे-
वताः प्रीणाति यज्ञेन वै देवास्सुं-
वर्गं लोकमायन्तेऽमन्यन्त मनुष्या
नोन्वाभविष्यन्तीति ते यूपेन योप-
यित्वा सुवर्गं लोकमायन्तमृषयो

यत् । यूपः । यत् । यूपम् । मिनोति । सर्वाः ।
एव । देवताः । प्रीणाति । [22]यज्ञेन । वै । देवाः ।
सुवर्गमिति सुवः—गम् । लोकम् । आयन् । ते ।
अमन्यन्त । मनुष्याः । नः । अन्वाभविष्यन्तीत्यं-
नु—आभविष्यन्ति । इति । ते । यूपेन । योपयित्वा ।
सुवर्गमिति सुवः—गम् । लोकम् । आयन् । तम् ।
ऋषयः । यूपेन । एव । अनु । प्रेति । अजानन् ।

---

ऊर्ध्वं तु चषालस्थानात्प्राक् विश्वेषां देवानाम् । चषालस्थानं त्विन्द्रस्य । अतिरिक्तं चषालादुपरि साध्यानाम् । सोयं तादृशो यूपः सर्वदेवत्यः । देवतान्तात्तादर्थ्ये यत् । तस्मादनेन सर्वा देवताः प्रीणयन्ति ॥

[22]यज्ञेन वा इत्यादि ॥ यज्ञेन स्वर्गं गताः देवाः । ते गमनारम्भे अमन्यन्त—मनुष्या अप्यस्मानन्वाभविष्यन्तीति यज्ञेनास्माननुप्राप्स्यन्तीति । भू प्राप्तौ, व्यत्ययेन परस्मैपदम् । यद्वा—अनन्तरमेवास्मानागम्य भविष्यन्तीति अस्मत्सदृशास्सम्पद्यन्ते इति ।

यूपेनैवानु प्राजानन्तद्यूपस्य यूपत्वम्
॥ २५ ॥ यद्यूपं मिनोति सुवर्गस्य
लोकस्य प्रज्ञात्यै पुरस्तान्मिनोति
पुरस्ताद्धि यज्ञस्य प्रज्ञायतेऽप्रज्ञातꣳ
हि तद्यदतिपन्न आहुरिदं कार्यमासी-

तत् । यूपस्य । यूपत्वमिति यूप—त्वम् ॥ २५ ॥ यत् । यूपम् । मिनोति । सुवर्गस्येति सुवः—गस्य । लोकस्य । प्रज्ञात्या इति प्र—ज्ञात्यै । [23]पुरस्तात् । मिनोति । पुरस्तात् । हि । यज्ञस्य । प्रज्ञायत इति प्र—ज्ञायते । अप्रज्ञातमित्यप्र—ज्ञातम् । हि । तत् । यत् । अतिपन्न इत्यति—पन्ने । आहुः । इदम् । कार्यम् । आसीत् ।

---

'गतिर्गतौ' इति अनोः निघातस्समासश्च । ते यूपे मनुष्यान् योपयित्वा विमोह्य स्वर्गं गताः देवाः यूपस्य याथात्म्यविदः । तमृषय इति । यूपयाथात्म्यविदः यूपेन स्वर्गमनुप्राजानन् मनुष्यान्विमोह्य देवानामनन्तरं प्रकर्षेण ज्ञानं तद्वन्तः । तस्माद्यूपस्य यूपत्वं यूपविमोकमन्त्रः । छान्दसो वर्णविकारः । तस्माद्यूपः स्वर्गप्रज्ञानहेतुः ॥

[23]पुरस्तादिति ॥ आहवनीयस्य । पुरस्ताद्धीति । यज्ञस्य पुरस्ताद्धि कर्तव्यं प्रज्ञायते इदमत्र कार्यं भविष्यतीति । तदेव यज्ञस्याविनष्टमिति । विपर्यये विपर्ययमाह—अप्रज्ञातमिति । अति-

दिति साध्या वै देवा यज्ञमत्यम-
न्यन्त तान् यज्ञो नास्पृशत्तान् य-
द्यज्ञस्यातिरिक्तमासीत्तदस्पृशदति-
रिक्तं वा एतद्यज्ञस्य यदग्नावग्निं म-
थित्वा प्रहरत्यतिरिक्तमेतत् ॥२६॥

इति। [24]साध्याः। वै। देवाः। यज्ञम्। अतीति। अमन्यन्त। तान्। यज्ञः। न। अस्पृशत्। तान्। यत्। यज्ञस्य। अतिरिक्तमित्यति-रिक्तम्। आसीत्। तत्। अस्पृशत्। अतिरिक्तमित्यति-रिक्तम्। वै। एतत्। यज्ञस्य। यत्। अग्नौ। अग्निम्। मथित्वा। प्रहरतीति प्र-हरति। अतिरिक्तमित्यति-रिक्तम्। एतत् ॥ २६ ॥ यूपस्य।

---

पन्ने विनष्टे सति अहते अन्यथा कृते कर्मणि यदाहुर्लौकिकाः—इदं कार्यमासीत्, कर्तव्यमेव न कृतमस्माभिरासीत्, अन्यथाकृतमासीत् तस्मान्नष्टमेवेति कुतश्चिद्वैगुण्यात् क्रियाया अतिनिर्वृत्तिरतिपत्तिः। तस्मादतिपन्नस्याप्रज्ञातपर्यायत्वात् पुरस्ताद्भवस्यैव प्रज्ञातत्वात् प्रज्ञानहेतुयूपं पुरस्तान्मिनोतीति ॥

[24]अथ यदुक्तं चषालादतिरिक्तं साध्यानामिति, तदिदानीं समर्थ्यते—साध्या इत्यादिना ॥ भागाधिक्येन मननमतिमानः भागत्वेन पर्याप्तिः। अस्पृशत् अधिकं भागं लप्स्यमानमपर्याप्तोऽभवद्यज्ञः।

यूपस्य यदूर्ध्वं चषालात्तेषां तद्भाग-
धेयं तानेव तेन प्रीणाति देवा वै
सꣳस्थिते सोमे प्र स्रुचोहरन्प्र यूपं
तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म
इति ते प्रस्तरꣳ स्रुचां निष्क्रयण-

यत् । ऊर्ध्वम् । चषालात् । तेषाम् । तत् । भाग-
धेयमिति भाग-धेयम् । तान् । एव । तेन । प्री-
णाति । [25]देवाः । वै । सꣳस्थित इति सं-स्थिते ।
सोमे । प्रेति । स्रुचः । अहरन् । प्रेति । यूपम् ।
ते । अमन्यन्त । यज्ञवेशसमिति यज्ञ-वेशसम् ।
वै । इदम् । कुर्मः । इति । ते । प्रस्तरमिति प्र-
स्तरम् । स्रुचाम् । निष्क्रयणमिति निः-क्रयणम् ।

---

ततस्तानधिकं भागं लिप्समानान् यज्ञसम्बन्धि यदतिरिक्तं तदस्य-
शात् अभिमतभागपर्याप्तिसमर्थभभवत् निजभागधेयतया तत्स्वीकृत-
वन्तः । किं पुनस्तदित्याह—अतिरिक्तं वेत्यादि । तेनातिरिक्तेन
अतिरिक्तार्थिनस्साध्यान् प्रीणातीति यज्ञान्तरादतिरिक्तमस्य मथित्वा
प्रहरणं चषालादूर्ध्वं च प्रमाणातिरेकात् अतिरिक्तम् ॥

[25]देवा वा इत्यादि ॥ सोमे संस्थिते समाप्ते देवा यूपं च
प्राहरन् अग्नौ । 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न
निहन्यते । तथा कृतवन्तो देवाः अमन्यन्त यज्ञवेशसं यज्ञवि-

मपश्यंथ्स्वरुं यूपस्य सꣳस्थिते सो-
मे प्र प्रस्तरꣳ हरंति जुहोति स्वरु-
मयंज्ञवेशसाय ॥ २७ ॥

अपश्यन् । स्वरुम् । यूपस्य । सꣳस्थित इति सं-
स्थिते । सोमे । प्रेति । प्रस्तरमिति प्र-स्तरम् ।
हरंति । जुहोति । स्वरुम् । अयंज्ञवेशसायेत्ययंज्ञ-
वेशसाय ॥ २७ ॥

दधाति प्रत्यृचा समर्धयेयामित्यूर्जैनं विश्वेषां
यूपत्वमतिरिक्तमेतद्विचंत्वारिꣳशच्च ॥ ४ ॥

---

नाशं वा इत्थं वयं कुर्मः कृतवन्त इति यज्ञविनाशमिदमित्य-
मन्यन्त देवाः । ते तथा मन्यमाना देवाः स्रुचां निष्क्रयण-
साधनं प्रस्तरमपश्यन् स्रुचां स्थाने प्रस्तरः प्रहर्तव्य इति ।
ततस्स्वरुं यूपस्य निष्क्रयणमपश्यन् इत्येव । तस्मात्संस्थिते सोमे
प्रस्तरं च प्रहरति स्वरुं च जुहोति यज्ञस्याविनाशार्थम् ।
पूर्ववत्प्रथमा तिङ्विभक्तिर्न निहन्यते, द्वितीया च तिङः पर-
त्वात् । ‘भीह्रीभृहु’ इत्यादिना प्रत्ययात्पूर्वस्योदात्तत्वम् ॥

इति षष्ठे तृतीये चतुर्थोऽनुवाकः.

---

साध्या वै देवा अस्मिन्लोक आं-
सन्नान्यत्किं चन मिषत्तेऽग्निमेवाग्न-
ये मेधायाऽलंभन्त न ह्यंन्यदालम्भ्यं
मविंन्दुन्ततो वा इमाः प्रजाः प्रा-
जांयन्त यदुग्नावुग्निं मंथित्वा प्रह-

[1]साध्याः । वै । देवाः । अस्मिन् । लोके । आ-
सन् । न । अन्यत् । किं । चन । मिषत् । ते ।
अग्निम् । एव । अग्नयें । मेधांय । एतिं । अलभन्त ।
न । हि । अन्यत् । आलम्भ्यंमित्यां–लम्भ्यम् । अ-
विंन्दन् । [2]ततः । वै । इमाः । प्रजा इतिं प्र–जाः ।
प्रेतिं । अजायन्त । यत् । अग्नौ । अग्निम् । मथि-
त्वा । प्रहरतीतिं प्र–हरति । प्रजानामितिं प्र–जा-

---

[1]साध्या वा इत्यादि ॥ यदुक्तं 'यदग्नावग्निं मथित्वा प्रहरति'* इति तदधिकृत्यायमनुवाकः । अस्मिन्मनुष्यलोके साध्या देवाः पूर्वमासन्, न त्वन्यत्किंचिदपि मिषत् प्राणिवस्त्वासीत् तेजोभावात् । अग्निमेवाग्नये आलभन्त मेधार्थं यज्ञसिद्ध्यर्थम्, न ह्यन्यदालम्भ्यं आलम्भनार्हं अजादिकमविन्दन् अलभन्त । अर्हे कृत्यः । 'आङो यि' इति नुमागमः, 'हि च' इति निघातप्रतिषेधः ॥

[2]ततो वा इत्यादि ॥ रुद्रो वा इत्यादि । गतम् । अपि-

---

*सं. ६-२-१,[13]

रंति प्रजानां प्रजननाय रुद्रो वा एष यद॒ग्निर्यज॑मानः प॒शुर्यत्प॒शुमा॒लभ्या॒ग्निं मन्थे॑द्रु॒द्राय॒ यज॑मानम् ॥ २८ ॥ अपि॑ द॒ध्यात्प्र॒मायु॑कस्स्या॒दथो॒ खल्वा॑हुर॒ग्निस्सर्वा॑ दे॒वता॑ ह॒विरे॒तद्यत्प॒शुरिति॒ यत्प॒शुमा॒लभ्या॒-

नाम् । प्र॒जन॑ना॒येति॑ प्र–जन॑नाय । रु॒द्रः । वै । ए॒षः । यत् । अ॒ग्निः । यज॑मानः । प॒शुः । यत् । प॒शुम् । आ॒लभ्येत्या॑–लभ्य॑ । अ॒ग्निम् । मन्थे॑त् । रु॒द्राय॑ । यज॑मानम् ॥ २८ ॥ अपीति॑ । द॒ध्यात् । प्र॒मायु॑क॒ इति॑ प्र–मायु॑कः । स्या॒त् । [3]अ॒थो इति॑ । खलु॑ । आ॒हुः । अ॒ग्निः । सर्वाः॑ । दे॒वता॑ः । ह॒विः । ए॒तत् । यत् । प॒शुः । इति॑ । यत् । प॒शुम् । आ॒लभ्येत्या॑–लभ्य॑ । अ॒ग्निम् । मन्थ॑ति ।

---

दध्यादिति । अग्नये रुद्रात्मने हविर्भूतं यजमानमुपस्थाप्य अविहितं कुर्यात्, ततोसौ प्रमायुको मरणशीलस्स्यात् । मीञ् हिंसायां, छान्दस उकञ् । पशुमालभ्य मथनपक्षो दूषितः ॥

[3]इदानीं पक्षमिमं स्थापयति—अथो इति ॥ अग्निर्नाम हविरिति वेदार्थविद आहुः । इदानीमालभ्यैव पशुं अग्निं

ग्निं मन्थति हव्यायैवासन्नाय सर्वा देवता जनयत्युपाकृत्यैव मन्थ्यस्तन्नेवालब्धं नेवानालब्धमग्नेर्जनित्रं-

हव्याय । एव । आसन्नायेत्या—सन्नाय । सर्वाः । देवताः । जनयति । उपाकृत्येत्युप—आकृत्य । एव । मन्थ्यः । तत् । न । इव । आलब्धमित्या—लब्धम् । न । इव । अनालब्धमित्यना—लब्धम् । [4]अग्नेः । जनित्रम् । असि । इति । आह । अग्नेः । हि ।

मन्थेत् । एवं ह्यासन्नहविरर्थं सर्वा देवता जनयति सन्निधापयति हविरासाद्यैव तद्भागिनीर्देवतास्सन्निधापयति हविष्यासन्ने सुखसन्निधापनात् सर्वा देवता भवन्तीति तस्मादालभ्य मन्थ्य इति स्थिते पुनरप्युक्तदोषभयात् पक्षान्तरमप्याह—उपाकृत्यैव उपाकरणानन्तरमेव मन्थ्यः, न त्वालभ्यः । कः पुनरेवं गुणो लभ्यते इत्याह—तदित्यादि । भावे निष्ठा, व्यत्ययेन गतेः प्रकृतिस्वरत्वम् । यद्वा—कर्मण्येव, तत्पश्वाख्यं हविर्नालब्धमिव लब्धमिति व्यपदेशं तावन्नार्हति; अमरणात् । अनालब्धमिव च न भवति अनालब्धमित्यपि वक्तुं न शक्यते; उपाकृतत्वात्, आलम्भारम्भत्वादुपाकरणस्य । तस्मादनालब्धत्वात् रुद्रायापिधानदोषाभावः । आलब्धत्वाच्च हविरासाद्य देवतासन्निधापनाय गुणलाभः ॥

[4]'अग्नेर्जनित्रमसि'* इत्यादि मन्थनशकलनिधानम् ॥ अग्नेर्ह्येतज्ज-

*सं. १-३-७.३

मसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ ॥ २९ ॥ ह्येतावुर्वश्यस्यायुरसीत्याह मिथुनत्वाय घृतेनाक्ते वृषणं दधाथामित्याह वृष-

एतत् । जनित्रम् । [5]वृषणौ । स्थः । इति । आह । वृषणौ ॥ २९ ॥ हि । एतौ । [6]उर्वशी । असि । आयुः । असि । इति । आह । मिथुनत्वायेति मिथुन—त्वाय । [7]घृतेन । अक्ते इति । वृषणम् । दधाथाम् । इति । आह । वृषणम् । हि । एते इति ।

नित्रं शकलं जन्महेतुः प्रजननस्थानीयत्वात् । 'अग्नित्रादिभ्यः' इत्यतोपि जनेरित्रः ॥

[5]'वृषणौ स्थः'* इति वृषणौ दधाति ॥ वृषणौ ह्येतौ शकलविशेषौ, दर्भौ वा तत्स्थानीयत्वात् । वृषेः कनिन्प्रत्यये 'वा षपूर्वस्य निगमे' इति दीर्घाभावः ॥

[6]अधरोत्तरयोररण्योरादानं क्रमेण—'उर्वश्यसि, आयुरसि, पुरूरवाः'* इति ॥ मिथुनत्वाय भवति, स्त्रीपुंसलिङ्गत्वादुभयोः ॥

[7]आज्यस्थाल्यामरणी समनक्ति—घृतेनेति ॥ वृषणं वर्षितारं कामानामेते दधाते, ये अग्निं दधाते इत्येव । तस्माद्वृषणं दधाथामित्युच्यते इति भावः । 'हि च' इति निघाताभावः, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

*सं. १-३-७,४—६

णꣳ ह्येते दधाते ये अग्निं गायत्रं
छन्दोनु प्र जायस्वेत्याह छन्दोभिरे-
वैनं प्र जनयत्यग्नये मथ्यमानाया-
नु ब्रूहीत्याह सावित्रीमृचमन्वाह स-
वितृप्रसूत एवैनं मन्थति जाताया-

दधाते इति । ये इति । अग्निम् । [8]गायत्रम् । छ-
न्दः । अनु । प्रेति । जायस्व । इति । आह । छ-
न्दोभिरिति छन्दः—भिः । एव । एनम् । प्रेति ।
जनयति । [9]अग्नये । मथ्यमानाय । अन्विति । ब्रू-
हि । इति । आह । सावित्रीम् । ऋचम् । अन्वि-
ति । आह । सवितृप्रसूत इति सवितृ—प्रसूतः ।
एव । एनम् । मन्थति । जाताय । अन्विति । ब्रू-

[8]'गायत्रं छन्दोनु प्र जायस्व'* इत्याद्याः प्रजायोनीः यजमानं वाचयति प्रजनयितुर्वचनं, 'प्र जायस्व'* इति मन्त्रलिङ्गात् । यद्वा-वचनेन हेतुना छन्दोभिरग्निं प्रजनयति ॥

[9]'अग्नये मथ्यमानायानु ब्रूहि' इति संप्रैषमेतमाहाध्वर्युः । अथ होता सावित्रीमृचमन्वाह—'अभि त्वा देव सवितः'† इति । सवित्राऽनुज्ञात एवाग्निं मन्थति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । 'जातायानु ब्रूहि' इति जातेऽग्नौ संप्रेष्यति । प्रह्रियमाणायेति । प्रहरन् काण्डेकाण्डे पर्वणिपर्वणि कर्मपर्वणि

*सं. १-३-७,8—10 †सं. ३-५-११,9

नुं ब्रूहि ॥ ३० ॥ प्र ह्रियमाणायानुं ब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति गायत्रीस्सर्वा अन्वाह गायत्रछन्दा वा अग्निस्स्वेनै-वैनं छन्दसा समर्धयत्यग्निः पुरा भवत्यग्निं मथित्वा प्र हरति तौ सं-

हि ॥३०॥ प्रह्रियमाणायेति प्र-ह्रियमाणाय । अन्विति । ब्रूहि । इति । आह । काण्डेकाण्ड इति काण्डे-काण्डे । एव । एनम् । क्रियमाणे । समिति । अर्धयति । गायत्रीः । सर्वाः । अन्विति । आह । गायत्रछन्दा इति गायत्र-छन्दाः । वै । अग्निः । स्वेन । एव । एनम् । छन्दसा । समिति । अर्धयति । [10]अग्निः । पुरा । भवति । अग्निम् । मथित्वा । प्रेति । हरति । तौ । सम्भवन्ताविति

---

क्रियमाणे एनमग्निं समृद्धं करोत्येभिस्संप्रैषैरिति । गायत्रीरिति । सर्वेषु संप्रैषेषु होता गायत्रीरेव सर्वा अनुवाक्या अन्वाह, गायत्रछन्दस्त्वादग्नेः । तस्मादात्मीयच्छन्दोलाभेन अग्निस्समृद्धो भवति ॥

[10]अग्निः पुरेत्यादि ॥ अग्निः पूर्वमेवास्मिन्नायतने आहवनीयाख्ये । मथित्वा चान्यमग्निमस्मिन् प्रहरति । तावग्नी संभवन्तौ यजमानमभिसंभवतः विप्रतिपन्नमनस्कौ यजमानं ध्यायन्तावेव संभवन्तौ स्याताम् । मन्त्रलिङ्गं च 'भवतं नस्समनसौ '* इति ।

---

*सं. १-३-७,11

भवन्तौ यजमानमभि सं भवतो भवतं नस्समनसावित्याह शान्त्यै प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा ॥३१॥

सं–भवन्तौ । यजमानम् । अभि । समिति । भवतः । भवतम् । नः । समनसाविति स–मनसौ । इति । आह । शान्त्यै । [11]प्रहृत्येति प्र–हृत्य । जुहोति । जाताय । एव । अस्मै । अन्नम् । अपीति । दधाति । आज्येन । जुहोति । एतत् । वै । अग्नेः । प्रियम् । धाम । यत् । आज्यम् । प्रियेण । एव । एनम् । धाम्ना । समिति । अर्धयति । अथो इति । तेजसा ॥३१॥

यजमानमाह वृषणौ जातायानु ब्रूह्यप्यष्टादश च॥५

पूर्ववत्प्रथमा तिङ्विभक्तिर्न निहन्यते । भवतं न इति प्रहरणविशिष्टेनानेन मन्त्रेण शान्त्यै भवत्यग्नेः ॥

[11]प्रहृत्येति ॥ 'अग्नावग्निश्चरति'* इति प्रहरणानन्तरं जुहोति, जातायाग्नये अन्नमदनीयमपिदधाति उपनिदधाति आज्येनेत्यादि । गतम् ।† धाम स्थानम् । तेजो दीप्तिः ॥

इति षष्ठे तृतीये पञ्चमोनुवाकः.

*सं. १-३-७,12 †सं. ५-१-९,

इषे त्वेति बर्हिरा दत्त इच्छन्त इव ह्येष यो यजत उपवीरसीत्याहोप

[1]इषे । त्वा । इति । बर्हिः । एति । दत्ते । इच्छन्ते । इव । हि । एषः । यः । यजते । [2]उपवीरित्युप

[1]इषे त्वेति बर्हिरादत्ते इति ॥ गतम्* । मन्त्राम्नातक्रममुल्लङ्घ्य पशुमन्त्रैस्सहोपाकरणमन्त्रब्राह्मणमाम्नायते । उपाकृत्यैव मन्थ्य इत्येतदनुसारेण उपाकरणनियोजनयोर्मध्ये 'अग्नेर्जनित्रमसि'* इत्यादीनां मन्त्राणां ब्राह्मणमाम्नतम् । इच्छत इव हीति । इष्यत इतीट्, अन्नं स्वर्गादि वा इत्यर्थः । तदर्थं त्वामाददे इति मन्त्रार्थः । अत्र केनेष्यते इत्याकांक्षायां यजमानमेष्टारं दर्शयति । अन्नमिच्छतोस्य तत्सिद्ध्यर्थं त्वामाददे इति मन्त्रार्थो दर्शितो भवति । व्यत्ययेनात्मनेपदमिषे त्वेति ॥

[2]'उपवीरसि'* इत्यादिपशूनामुपाकरणमन्त्रः ॥ उप ह्येनानिति । यस्मादेनानुपाकरोति देवतासमीपे उपाकरोति तादर्थ्येनापि करोति पशून् तस्मात् उपवीरसीत्याहेत्यर्थः । वेतेरुपपूर्वाद्गतिकर्मणः कर्मणि क्विप् । अन्तर्भावितण्यर्थत्वादुपगमयितव्योसीति मन्त्रलिङ्गात्† । तत्र मन्त्रे ब्राह्मणे वा वचनव्यत्ययः । जातौ वा बहुलवचनम् । आग्नेयानुबन्ध्यापेक्षमित्येके, एकादशाग्नीषोमीयाः, एकादश सवनीया एकादश अनूबन्ध्या इत्ययमपि पक्षोस्तीति स्थापनार्थमेतदित्यन्ये । अपरे पुनराहुः—ससाधनां क्रियामुपसर्ग आह, एतानि च 'उपो देवान्'* इत्यनन्तरं वक्ष्यमाणा देवा निर्दिश्यन्ते । अयमर्थः—एवं देवानुप संगमय्य एनं पशुमाकरोति ॥

*सं. १-३-७.[1-3] †क—मन्त्रार्थलाभात्.

ह्येनानाकुरोत्युपो देवान्दैवीर्विशः प्रा-
गुरित्याह दैवीर्ह्येता विशस्सतीर्देवा-
नुप यन्ति वह्नीरुशिज इत्याहर्त्वि-
जो वै वह्नय उशिजस्तस्मादेवमाह

वीः । असि । इति । आह । उपेति । हि । एनान् ।
आकरोतीत्या–करोति । [3]उपो इति । देवान् । दै-
वीः । विशः । प्रेति । अगुः । इति । आह । दैवीः ।
हि । एताः । विशः । सतीः । देवान् । उपयन्ती-
त्युप–यन्ति । [4]वह्नीः । उशिजः । इति । आह ।
ऋत्विजः । वै । वह्नयः । उशिजः । तस्मात् । ए-

---

[3]दैवीर्हीति ॥ देवानामिमाः विशः प्रजास्सत्यो देवानग्नीषोमादीन् उपगच्छन्ति पश्ववयवाः अवदानभावमापन्नास्सर्वेऽपि । मनुष्या इत्येके । एता इति । विडपेक्ष्यं स्त्रीत्वम् । 'देवाद्यञञौ' इति यञ्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् 'हि च' इति निघाताभावे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च ॥

[4]ऋत्विजो वा इति ॥ वोढारः कर्मणो वह्नयः । 'वर्मणि[वहिश्रि]' इत्यादिना निप्रत्ययः, निदिति तत्रानुवर्तते । यागसमकालं शेषभक्षणं वा कामयमाना उशिजः । 'वशः किच्च' इतीप्रत्ययः । स्वदयति । वृद्ध्यभावश्छान्दसः । अदन्त इत्येके । त्वष्टा वा

बृहस्पते धारया वसूनीति ॥ ३२ ॥
आह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्म-
णैवास्मै पशूनवं रुन्धे हव्या ते स्व-
दन्तामित्याह स्वदयत्येवैनान्देव त्व-
ष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां
मिथुनानाꣳ रूपकृद्रूपमेव पशुषु द-
धाति रेवती रमध्वमित्याह पशवो

वम् । आह । बृहस्पते । धारय । वसूनि । इति ॥ ३२ ॥ आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । पशून् । अवेति । रुन्धे । हव्या । ते । स्वदन्ताम् । इति । आह । स्वदयति । एव । एनान् । देव । त्वष्टः । वसु । रण्व । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप-कृत् । रूपम् । एव । पशुषु । दधाति । रेवतीः । रमध्वम् । इति । आह । पशवः ।

इत्यादि । गतम्* । पशवो वा इत्यादि । दुग्धादिना धनेन तद्वत्वात् । सञ्ज्ञा चेयं पशूनाम् । 'रयेर्मतौ बहुलम्' इति संप्रसारणम्, 'संज्ञायाम्' इति मतुपो वत्वम्, पूर्ववत् 'रेशब्दाच्च' इति मतुप उदात्तत्वम्, पूर्ववत्पूर्वसवर्णदीर्घत्वम् ॥

*सं. ६-१-८10.

वै रेवतीः पशूनेवास्मै रमयति दे-
वस्यं त्वा सवितुः प्रंसव इतिं ॥ ३३
रशनामा दंत्ते प्रसूंत्या अश्विनोर्बा-
हुभ्यामित्यांहाश्विनौ हि देवानाम-
ध्वर्यू आस्तां पूष्णो हस्तांभ्यामि-
त्यांह यत्यां ऋतस्यं त्वा देवहविः

वै । रेवतीः । पशून् । एव । अस्मै । रमयति ।
[5] देवस्यं । त्वा । सवितुः । प्रसव इतिं प्र-सवे ।
इतिं ॥ ३३ ॥ रशनाम् । एतिं । दत्ते । प्रसूंत्या
इति प्र-सूत्यै । अश्विनोः । बाहुभ्यामितिं बाहु-
भ्याम् । इतिं । आह । अश्विनौ । हि । देवानाम् ।
अध्वर्यू इतिं । आस्तांम् । पूष्णः । हस्तांभ्याम् ।
इतिं । आह । यत्यै । ऋतस्यं । त्वा । देवहविरि-
तिं देव-हविः । पाशेंन । एतिं । रभे । इतिं ।

---

[5]देवस्य त्वेत्यादिरशनादानविधिर्गतः,* व्याख्यातश्चात्र 'आ ददे'† इत्यस्य शेषतया सावित्रवत्त्वे व्याचष्टे ब्राह्मणम् । ऋतस्य त्वेति रशनया पश्वभिधानम् । सत्यं वा इति । साधुः सत्यः । तदात्मना ऋतेनैनं आरभते बध्नाति । अक्ष्णयेति कण्ठगत्या प-

---

*सं ६-२-१०.[1] †सं. १-३-८.[1]

पाशेना रंभ इत्याह सत्यं वा ऋ-
तꣳ सत्येनैवैनमृतेना रंभतेऽक्षणया
परि हरति वध्यꣳ हि प्रत्यञ्चं प्रति
मुञ्चन्ति व्यावृत्त्यै धरूषा मानुषानि-
ति नि युनक्ति धृत्या अद्भ्यः ॥३४॥

आह । सत्यम् । वै । ऋतम् । सत्येन । एव । एनम् । ऋतेन । एति । रभते । अक्षणया । परीति । हरति । वध्यम् । हि । प्रत्यञ्चम् । प्रतिमुञ्चन्तीति प्रति–मुञ्चन्ति । व्यावृत्त्या इति वि–आवृत्त्यै । [9]धरूष । मानुषान् । इति । नीति । युनक्ति । धृत्यै । अद्भ्य इत्यत्–भ्यः ॥ ३४ ॥ त्वा । ओषधीभ्य

रिहरति वेष्टयति पशुम् । 'पशुरशनायाः दक्षिणमध्यर्धशीर्ष' इत्याचार्याः । हेतुमाह—वध्यं हीति । वध्यं वधार्हमनुपकारकं पशुम् । मरणारम्भे प्रत्यञ्चं प्रतीपं प्रतिकूलं प्राणवृत्तेशिशरोतीत्य ग्रीवायामेव प्रतिमुञ्चति। तस्मादेवं बन्धनं वध्यादस्य व्यावृत्त्यै भवति ॥

[6]नि युनक्तीति ॥ यूपे पशुं बध्नातीति विधिः । तद्धृत्यै धृष्टत्वाय भवति । अद्भ्यस्त्वेति पशुप्रोक्षणम् । अद्भ्य ओषधीभ्यश्च संभूतं त्वामद्भिः प्रोक्षामीति मन्त्रार्थं दर्शयति । कारणेन हि कार्याणां शुद्धिः । पवित्रेणोत्पूतत्वादोषधिशुद्धिरप्यस्तीति । यद्वा—आप ओषधयश्च भूयासुरित्येवमर्थं त्वामद्भिः प्रोक्षामीति मन्त्रार्थः। अद्भ्यस्संभूतत्वादद्भ्यो हीत्युक्तम् । तथाहि—पशोरपामोषधीनां

त्वौष॑धीभ्यः प्रोक्षामीत्या॑हाद्भ्यो ह्ये॑-
ष ओष॑धीभ्यस्सं भव॑ति यत्प॒शुर॒पां
पे॒रुर॒सीत्या॑हैष ह्य॑पां पा॒ता यो मे-
धा॑यार॒भ्यते॑ स्वात्तं चि॒त्सदे॑व॒ꣳ ह-
व्यमापो॑ देवी॒स्स्वद॑तैना॒मित्या॑ह स्व॒-

इत्योष॑धि-भ्यः । प्रेति॑ । उ॒क्षा॒मि॒ । इति॑ । आ॒ह॒ । अ॒द्भ्य इत्य॑त्-भ्यः । हि । ए॒षः । ओष॑धीभ्य॒ इत्यो-ष॑धि-भ्यः । सं॒भव॒तीति॑ सं-भव॑ति । [7]यत् । प॒शुः । अ॒पाम् । पे॒रुः । अ॒सि॒ । इति॑ । आ॒ह॒ । ए॒षः । हि । अ॒पाम् । पा॒ता । यः । मेधा॑य । आ॒र॒भ्यत॒ इत्या॑-र॒भ्यते॑ । [8]स्वा॒त्तम् । चि॒त् । सदे॑व॒मिति॒ स-दे॒व॒म् । ह॒व्यम् । आपः॑ । दे॒वीः । स्वद॑त । ए॒नम् । इति॑ ।

---

कार्यत्वात् कार्यकारणयोश्चाभिन्नत्वात् कार्यकारणपशुप्रोक्षणेनैव तत्कारणानां सिद्धिरिति ब्राह्मणाभिप्रायः । पूर्ववन्निघाताभावगत्यनुदात्तत्वसमासाः ॥

[7]अपां पेरुरसीति पाययति ॥ एष हीति । एष यज्ञार्थमारभ्यमाणः पशुः यागद्वारेणापां पाता रक्षिता । तस्मात्ताः पार्यन्ते इति पेरुरिति । पातेरुप्रत्ययं मन्यते । यदा तु पिबतेः तदा अपां पेरुः पाता भवति मन्त्रार्थोऽपि पठितव्यः । एष ह्यपां रक्षिता मेधार्थः पशुः, तस्मात्ताः पिबेति प्रार्थ्यन्ते इति ॥

[8]स्वात्तमिति अधस्तादवोक्षणम् । अन्तरत एवम् । एतैः त्रिभि-

दयंत्येवैनमुपरिष्टात्प्रोक्षंत्युपरिष्टादे-
वैनं मेध्यं करोति पाययंत्यन्तरत
एवैनं मेध्यं करोत्यधस्तादुपोक्षति
सर्वत एवैनं मेध्यं करोति ॥ ३५ ॥

अग्निना वै होत्रा देवा असुरानभ्य-
भवन्नग्नये समिध्यमानायानु ब्रूही-

आह । स्वदयंतीति । एव । एनम् । उपरिष्टात् । प्रेति । उक्षति । उपरिष्टात् । एव । एनम् । मेध्यम् । करोति । पाययंतीति । अन्तरतः । एव । एनम् । मेध्यम् । करोति । अधस्तात् । उपेति । उक्षति । सर्वतः । एव । एनम् । मेध्यम् । करोति ॥ ३५ ॥

वसूनीति प्रसव इत्यद्भ्योऽन्तरत
एवैनं दश च ॥ ६ ॥

[1]अग्निना । वै । होत्रा । देवाः । असुरान् । अभीति । अभवन् । अग्नये । समिध्यमानायेति

रुक्षणैः सर्वत एवैनं मेध्यं करोतीति । 'तसेश्च' इति तासिलादेशः ॥
इति षष्ठे तृतीये षष्ठोनुवाकः

[1]अग्निना वा इत्यादि ॥ गतम् । अग्नये समिध्यमानायानु-

त्याह भ्रातृव्याभिभूत्यै सप्तदश सा-
मिधेनीरन्वाह सप्तदशः प्रजापतिः
प्रजापतेराप्त्यै सप्तदशान्वाह द्वाद-
श मासाः पञ्चर्तवस्ससंवत्सरस्संव-
त्सरं प्रजा अनु प्र जायन्ते प्रजानां

सं-इध्यमानाय । अन्विति । ब्रूहि । इति । आ-
ह । भ्रातृव्याभिभूत्या इति भ्रातृव्य-अभिभूत्यै ।
सप्तदशेति सप्त-दश । सामिधेनीरिति सां-इधे-
नीः । अन्विति । आह । सप्तदश इति सप्त-दशः ।
प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-
पतेः । आप्त्यै । सप्तदशेति सप्त-दश । अन्विति ।
आह । द्वादश । मासाः । पञ्च । ऋतवः । सः ।
संवत्सर इति सं-वत्सरः । संवत्सरमिति सं-व-
त्सरम् । प्रजा इति प्र-जाः । अनु । प्रेति । जा-
यन्ते । प्रजानामिति प्र-जानाम् । प्रजननायेति

---

ब्रूहीति सामिधेनीसंप्रैषः । एवं संप्रैषादग्निनैव होत्रा भ्रातृव्या
नभिभवति सप्तदशेति सप्तदशत्वविधिः । गतः ॥

प्रजननाय देवा वै सामिधेनीरनूच्यं यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारम् ॥ ३६ ॥ आऽघारयत्ततो वै देवा यज्ञमन्वपश्यन् यत्तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्या असुरेषु वै यज्ञ आसीत्तं देवास्तूष्णीꣳहोमेनावृञ्जत यत्तू-

प्र-जननाय । [2]देवाः । वै । सामिधेनीरिति सां-इधेनीः । अनूच्येत्यनु-उच्यं । यज्ञम् । न । अन्विति । अपश्यन् । सः । प्रजापतिरिति प्रजा-पतिः । तूष्णीम् । आघारमित्यां-घारम् ॥३६॥ एति । अघारयत् । ततः । वै । देवाः । यज्ञम् । अन्विति । अपश्यन् । यत् । तूष्णीम् । आघारमित्यां-घारम् । आघारयतीत्यां-घारयति । यज्ञस्य । अनुख्यात्या इत्यनु-ख्यात्यै । असुरेषु । वै । यज्ञः । आसीत् । तम् । देवाः । तूष्णीꣳहोमेनेति तूष्णीं-होमेन ।

[2]देवा वा इत्यादि तूष्णीमाघारविधिः ॥ सामिधेनीमात्रेण देवा यज्ञं नान्वपश्यन् । तदा प्रजापतिस्तूष्णीं मन्त्र[न्त्रा]जपेन होममाघारयत् तत इत्यादि । गतम्* । असुरेष्वित्यादि । असुरैरात्मसात्कृतं यज्ञं देवास्तूष्णीं होमेनावृञ्जत आददत ॥

*सं २-५-११.6

ष्णीमांघारमांघारयंति भ्रातृंव्य-
स्यैव तद्यज्ञं वृंङ्क्ते परिधीन्त्सं मा-
र्ष्टि पुनात्येवैनान्त्रिस्त्रिस्सं मार्ष्टि त्र्या-
वृद्धि यज्ञोथो रक्षंसामपंहत्यै द्वादंश
सं पंद्यन्ते द्वादंश ॥ ३७ ॥ मासां-
स्संवत्सरस्संवत्सरमेव प्रीणात्यथो

अवृञ्जत । यत् । तूष्णीम् । आघारमित्यां—घारम् । आघारयतीत्यां—घारयंति । भ्रातृंव्यस्य । एव । तत् । यज्ञम् । वृङ्क्ते । [3]परिधीनितिं परि—धीन् । सभितिं । मार्ष्टि । पुनातिं । एव । एनान् । त्रिस्त्रिरिति त्रिः—त्रिः । समितिं । मार्ष्टि । त्र्यांवृदिति त्रि—आवृत् । हि । यज्ञः । अथो इतिं । रक्षंसाम् । अपंहत्या इत्यपं—हत्यै । द्वादंश । समितिं । पद्यन्ते । द्वादंश ॥ ३७ ॥ मासांः । संवत्सर इतिं सं—वत्सरः । संवत्सरमितिं सं—वत्सरम् । एव । प्री-

---

[3]परिधीनित्यादि ॥ त्र्यावृत् त्र्यावृत्तिकः । अथो अपि च त्रिस्त्रिर्मार्जनं रक्षसामहपत्यै भवति; आवृत्तेर्भयातिशयजनकत्वात् । द्वादशेति । अग्निसंमार्गेण सह द्वादश भवन्ति । अथो अपि च संवत्सरमेवास्मै यजमानाय सोमपानस्थानीयमुपदधाति । स्वर्गस्य लोकस्य तत्प्राप्त्यै भवति ॥

संवत्सरमेवास्मा उप दधाति सुव-
र्गस्य लोकस्य समष्ट्यै शिरो वा
एतद्यज्ञस्य यदाघारोऽग्निस्सर्वा देवता
यदाघारमाघारयन्ति शीर्षत एव
यज्ञस्य यजमानस्सर्वा देवता अव
रुन्धे शिरो वा एतद्यज्ञस्य यदाघार

णाति । अथो इति । संवत्सरमिति सं-वत्सरम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सु-वः-गस्य । लोकस्य । समष्ट्या इति सं-अष्ट्यै । [4]शिरः । वै । एतत् । यज्ञस्य । यत् । आघार इत्या-घारः । अग्निः । सर्वाः । देवताः । यत् । आघारमित्या-घारम् । आघारयतीत्या-घारयन्ति । शीर्षतः । एव । यज्ञस्य । यजमानः । सर्वाः । देवताः । अवेति । रुन्धे । शिरः । वै । एतत् । यज्ञस्य । यत् । आघार इत्या-घारः । आत्मा ।

[4]शिरो वा इत्यादि ॥ आघारो यज्ञस्य शिरस्थानीयः, प्राधान्यात्, प्राथम्याद्वा । गतमन्यन्* । आघारेण सर्वदेवतात्मनोऽग्नेरवरोधात् सर्वा देवता अवरुद्धा भवन्ति । तथा आघारणानन्तरं आत्मनः पशोस्समञ्जनात् आत्मन्येव यज्ञस्य शिरः प्रतिदधाति प्रतिष्ठापयति ॥

*सं. २-५-११, 16

आत्मा पशुरांघारमाघार्यं पशुꣳ समं-
नक्त्यात्मन्नेव यज्ञस्यं ॥ ३८ ॥ शिरः
प्रतिं दधाति सं ते प्राणो वायुना
गच्छतामित्यांह वायुदेवत्यों वै प्राणो
वायावेवास्यं प्राणं जुहोति सं यजं-
त्रैरङ्गांनि सं यज्ञपंतिराशिषेत्यांह

पशुः । आघारमित्यां—घारम् । आघार्येत्यां—घार्यं । पशुम् । समिति । अनक्ति । आत्मन्न् । एव । य-ज्ञस्यं ॥ ३८ ॥ शिरः । प्रतीतिं । दधाति । [5]समिति । ते । प्राण इति प्र—अनः । वायुना । गच्छ-ताम् । इति । आह । वायुदेवत्यं इति वायु—देव-त्यंः । वै । प्राण इति प्र—अनः । वायौ । एव । अस्य । प्राणमिति प्र—अनम् । जुहोति । समिति । यजंत्रैः । अङ्गांनि । समिति । यज्ञपंतिरिति यज्ञ—पतिः । आशिषेत्यां—शिषा । इति । आह । यज्ञ-

---

[5]सं ते प्राण इति ॥ जुह्वा पशुसमञ्जनं ललाटे । वायुभूतात्मा वायुदेवत्यः प्राणः । तद्वायावेवास्य पशोः प्राणं दधाति स्थापयति । संयजत्रैरिति ककुदि समञ्जनम् । सं यज्ञपतिरिति दक्षिणश्रोणिसमञ्जनम् । यज्ञपतिमेवेति । अस्य पशोः आशिषं फलं यजमानं गमयति ॥

यज्ञपतिमेवास्याशिषं गमयति वि-
श्वरूपो वै त्वाष्ट्र उपरिष्टात्पशुमभ्य-
वमीत्तस्मादुपरिष्टात्पशोर्नावं द्यन्ति
यदुपरिष्टात्पशुꣳ संमनक्ति मेध्यमे-
व ॥३१॥ एनं करोत्यृत्विजों वृणी-
ते छन्दाꣳस्येव वृणीते सप्त वृणीते

पतिमिति यज्ञ–पतिम् । एव । अस्य । आशिष-
मित्या–शिषम् । गमयति । [6]विश्वरूप इति विश्व–
रूपः । वै । त्वाष्ट्रः । उपरिष्टात् । पशुम् । अभीति
। अवमीत् । तस्मात् । उपरिष्टात् । पशोः ।
न । अवेति । द्यन्ति । यत् । उपरिष्टात् । पशुम् ।
समनक्तीति सं–अनक्ति । मेध्यम् । एव ॥ ३१ ॥
एनम् । करोति । [7]ऋत्विजः । वृणीते । छन्दाꣳ-
सि । एव । वृणीते । सप्त । वृणीते । सप्त । ग्रा-

[6]विश्वरूपस्त्वष्टुः पुत्रः पशुमुपरिष्टान्मुखे अभ्यवमीत् अभिवमनं कृतवान् । तस्मादशुद्धत्वादुपरिष्टान्नावद्यन्ति । उपरिष्टात्समञ्जनेन मेधार्हमेनं करोति ॥

[7]ऋत्विज इति ॥ अत्रैव वरणं न्याय्यं, इह विधानात् । छन्दांस्येवेति । सप्तत्वान्वयात्सप्तेति । सप्तदशो[शशब्दो] घृतादित्वादन्तोदात्तः । ग्राम्या आरण्या उक्ताः* । उभयस्येति । पशूनां छन्दसां च ॥

*सं. ६-१-८.२

सप्त ग्राम्याः पशवस्सप्तारण्यास्स-
प्त छन्दाꣳस्युभयस्यावरुद्ध्या एका-
दश प्रयाजान् यजति दश वै पशोः
प्राणा आत्मैकादशो यावानेव प-
शुस्तं प्र यजति वपामेकः परि श-

म्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दा-
ꣳसि । उभयस्य । अवरुद्ध्या इत्यव–रुद्ध्यै ।
एकादश । प्रयाजानिति प्र–याजान् । यजति ।
दश । वै । पशोः । प्राणा इति प्र–अनाः । आ-
त्मा । एकादशः । यावान् । एव । पशुः । तम् ।
प्रेति । यजति । वपाम् । एकः । परीति । शये ।

---

[8]एकादशेति संख्याविधिः ॥ दशेति । सप्त शीर्षण्याः, द्वा-
ववाञ्चौ, नाभिश्चेति । यावानिति । समस्तमेव पशुं प्रयजति
प्रथमतो यजति । वपामित्यादि । एवमेकादशसु प्रयाजेषु सत्सु
स्वयं गुणो भवति । योयमेकोन्त्यः प्रयाजः स आत्मैकादश
इत्युक्तः । सोयमेवं सति वपां परिशये । समीपशयनं परिश-
यनम्, तदव्यवधानेन वर्तते इति यावत् । वपाकालमास्ते इदानीं
न क्रियते । कीदृशोयं गुण इत्याह—आत्मैव ह्यात्मानं परि-
शेते एकादशस्यात्मत्वात् । आत्मा वपेति च पश्वात्मत्वात् ।
लक्षणे वा अनोः कर्मप्रवचनीयत्वं अन्त्यः प्रयाजो वपां ल-
क्षीकृत्य शेते इति । 'लोपस्त आत्मने पदेषु' इति तलोपः ॥

य आत्मैवात्मानं परिं शये वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्घृतेनाक्तौ पशुं त्रायेथामित्याह वज्रेणैवैनं वशे कृत्वाऽऽलभते॥४०॥

आत्मा । एव । आत्मानम् । परीति । शये । [१]वज्रः । वै । स्वधितिरिति स्व-धितिः । वज्रः । यूपशकल इति यूप-शकलः । घृतम् । खलु । वै । देवाः । वज्रम् । कृत्वा । सोमम् । अघ्नन् । घृतेन । अक्तौ । पशुम् । त्रायेथाम् । इति । आह । वज्रेण । एव । एनम् । वशे । कृत्वा । एति । लभते ॥४०॥

आघारं पद्यन्ते द्वादशात्मन्नेव यज्ञस्य मेध्यमेव खलु वा अष्टादश च ॥ ७ ॥

---

[१]घृतेनाक्ताविति स्वरुस्वधितिभ्यां पशुसमञ्जनम् । ताविह त्रायेथाम् । वज्रो वा इत्यादि । वज्रवदमोघसाधनं स्वाधितिः शस्त्रं यूपशकलं स्वरुश्च । अथ येनाज्येनाञ्चते तदपि वज्रमित्याह—घृतेनेत्यादि । तस्मादनेन मन्त्रेण ताभ्यां तादृशाज्याभ्यक्ताभ्यां पशोस्समञ्जने वज्रेणैव वशे कृत्वा विधेयीकृत्य पशुमालभते संज्ञयति ॥

इति षष्ठे तृतीये सप्तमोनुवाकः.

पर्यग्नि करोति सर्वहुतमेवैनं करो-
त्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य
स्कन्दति त्रिः पर्यग्नि करोति त्र्या-
वृद्धि यज्ञोथो रक्षसामपहत्यै ब्रह्म-

[1]पर्यग्नीति परि-अग्नि । करोति । सर्वहुतमिति सर्व-हुतम् । एव । एनम् । करोति । अस्कन्दाय । अस्कन्नम् । हि । तत् । यत् । हुतस्य । स्कन्दति । त्रिः । पर्यग्नीति परि-अग्नि । करोति । त्र्यावृदिति त्रि-आवृत् । हि । यज्ञः । अथो इति । रक्षसाम् । अपहत्या इत्यप-हत्यै । [2]ब्रह्मवादिन इति ब्रह्म-

---

[1]पर्यग्नीत्यादि ॥ परितोग्निर्यस्मिन् कर्मणि स पर्यग्निः । पशुमेवैतं यथा पशुयूपाहवनीयशामित्रचात्वालान्यन्तर्भवन्ति तथाऽऽहवनीयादुल्मुकमादाय त्रिःप्रदक्षिणं परियन्ति[येति] सर्वहुतमेव पशुं करोति, न किंचिदप्यस्य हीयते । ततश्चास्कन्दाय स्कन्नदोषाभावार्थं भवति । कथमित्याह—अस्कन्नं हीत्यादि । पर्यग्निकरणेन सर्वमिदमग्नौ हुतप्रायं क्रियते; यच्च हुतस्य निवृत्तप्रयोजनस्य स्कन्दति अस्कन्नमेव तत्, । न तत्र स्कन्नदोषः । त्रिरिति संख्याविधिः । गतः* ॥

[2]ब्रह्मवादिन इत्यादि ॥ अन्वारम्भः स्पर्शः । 'विचार्यमाणानाम्' इत्युभयत्र प्लुतः । मृत्यवे इत्यादि । मृत्यवे नीय-

---

*सं. ६-३-७.[3]

वादिनो॑ वदन्त्यन्वारभ्य॑ः पशू३र्ना-
न्वारभ्या३ इति॑ मृत्यवे॒ वा ए॒ष
नी॑यते॒ यत्प॒शुस्तं॒ यद॑न्वारभे॑त प्र-
मायु॑को॒ यज॑मानस्स्या॒दथो॒ खल्वा॑-
हुस्सुव॒र्गाय॒ वा ए॒ष लो॒काय॑ नीयते॒
यत् ॥ ४१ ॥ प॒शुरिति॒ यन्नान्वा॒र-

वा॒दिन॑ः । व॒द॒न्ति॒ । अ॒न्वा॒रभ्य॒ इत्य॑नु-आ॒रभ्य॑ः ।
प॒शू३ः । न । अ॒न्वा॒रभ्या३ इत्य॑नु-आ॒रभ्या३ः ।
इति॑ । मृ॒त्यवे॑ । वै । ए॒षः । नी॒य॒ते॒ । यत् । प॒शुः ।
तम् । यत् । अ॒न्वा॒रभे॒तेत्य॑नु-आ॒रभे॑त । प्र॒मायु॑क॒
इति॑ प्र-मायु॑कः । यज॑मानः । स्या॒त् । अथो॒ इ-
ति॑ । खलु॑ । आ॒हुः । सु॒व॒र्गायेति॑ सुवः-गाय॑ । वै ।
ए॒षः । लो॒काय॑ । नी॒य॒ते॒ । यत् ॥ ४१ ॥ प॒शुः ।

---

मानं पशुं यदि हस्तेनान्वारभेत मरणशीलो यजमानस्स्यात् । अथ स्वर्गाय नीयमानं पशुं यदि नान्वारभेत स्वर्गाद्धीयेत यजमानः । तस्मादुभयदोषपरिहारार्थं वपाश्रपणीभ्यामन्वारभेतैव । तद्धि हस्तेनास्पर्शनात् अन्वारब्दमिव न भवति । ताभ्यां स्पर्शनात् अनन्वारब्दमिव च न भवति । ततश्चोभयदोषाप्रसङ्ग इति । उभयत्र भावे निष्ठा ॥

भेत सुवर्गाल्लोकाद्यजमानो हीयेत वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्धमुप प्रेष्य होतर् हव्या देवेभ्य इत्याहेषितꣳ हि कर्म क्रियते रेवतीर्यज्ञपतिं प्रियधा

इति । यत् । न । अन्वारभेतेत्यनु–आरभेत । सुवर्गादिति सुवः–गात् । लोकात् । यजमानः । हीयेत । वपाश्रपणीभ्यामिति वपा–श्रपणीभ्याम् । अन्वारभत इत्यनु–आरभते । तत् । न । इव । अन्वारब्धमित्यनु–आरब्धम् । न । इव । अनन्वारब्धमित्यननु–आरब्धम् । [3]उप । प्रेति । इष्य । होतः । हव्या । देवेभ्यः । इति । आह । इषितम् ।

---

[3]अत्राश्राव्य प्रत्याश्राविते संप्रैष उपप्रैषः । उप प्रेष्येति ॥ तत्र प्रकर्षेण इष्टतामस्य देवसमीपे ख्यापयति । संप्रैषार्थं दर्शयितुमाह—इषितमिति । इष्टं ह्येतत्कर्म पशुयागाख्यं क्रियते; तस्मादेवमाहेति ॥

[4]रेवतीरिति पशुमुदश्चं नीयमानमनुमन्त्रयते ॥ अत्र यथा यजुषा प्रार्थ्यते 'यज्ञपतिं प्रियधाऽऽविशत' 'हविषस्त्मना यज समस्य तनुवा भव' 'यज्ञे यज्ञपतिं धाः'* इति तत्सर्वं तथा संपद्यते । एवमग्निना पुरस्तादित्यादि ॥

---

*सं. १-३-८.11

विज्ञातेत्याह यथायजुरेवैतदग्निना पु-
रस्तादेति रक्षसामपहत्यै पृथिव्या-
स्संपृचः पाहीति बर्हिः ॥ ४२ ॥
उपास्यत्यस्कन्दायास्कन्नꣳ हि तद्य-
द्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं

हि । कर्म । क्रियते । [4]रेवतीः । यज्ञपतिमिति यज्ञ-पतिम् । प्रियधेति प्रिय-धा । एति । विज्ञात । इति । आह । यथायजुरिति यथा-यजुः । एव । एतत् । अग्निना । पुरस्तात् । एति । रक्षसाम् । अपहत्या इत्यप-हत्यै । [5]पृथिव्याः । संपृच इति सं-पृचः । पाहि । इति । बर्हिः ॥ ४२ ॥ उपेति । अस्यति । अस्कन्दाय । अस्कन्नम् । हि । तत् । यत् । बर्हिषि । स्कन्दति । अथो इति । बर्हिषदमिति बर्हि-

[5]अग्रतो नीयमानेनाग्निना सहेति । शमिता पशुं नयन् आहवनीया-दुल्मुकमादायाग्नीध्रो गच्छति पशोः नीयमानस्य 'पृथिव्यास्संपृचः'* इति पशुनिहननस्थाने निहन्यमानाय बर्हिरुपास्यति । उपाकरणायान्यतरत् । अस्कन्दायेत्यादि । गतम्† । बर्हिषदं बर्हिषि सादितंकरोति । छान्दसः सलोपः ॥

*सं. १-३-८,[12] †सं. ६-३-८,[1]

करोति पराङा वर्ततेऽध्वर्युः पशो-
स्संज्ञप्यमानात्पशुभ्यं एव तन्नि ह्नु-
त आत्मनोनाव्रस्काय गच्छंति श्रि-
यं प्र पशूनाप्नोति य एवं वेद पश्चा-
ल्लोका वा एषा प्राच्युदानीयते य-

सदम् । एव । एनम् । करोति । [6]पराङ् । एति । वर्तते । अध्वर्युः । पशोः । संज्ञप्यमानादिति सं-ज्ञप्यमानात् । पशुभ्य इति पशु-भ्यः । एव । तत् । नीति । ह्नुते । आत्मनः । अनाव्रस्कायेत्य-ना-व्रस्काय । गच्छति । श्रियम् । प्रेति । पशून् । आप्नोति । यः । एवम् । वेद । [7]पश्चाल्लोकेति प-श्चात्-लोका । वै । एषा । प्राची । उदानीयत इ-त्युत्-आनीयते । यत् । पत्नी । नमः । ते । आ-

[6]पराङिति ॥ हन्यमानात्पशोः पराङ्मुख आवर्त्योऽध्वर्युः । तथा सति पशुभ्यो निह्नवः अपलापः कृतो भवति नाहमस्य मारयितेति पशुभ्यः ख्यापितं भवति । तच्चात्मनोनाव्रस्काय अच्छे-दाय भवति । व्रश्चतिस्सकारोपध इष्यते, घञि कुत्वे चुत्वं निवर्तते । गच्छतीत्यादि । वेदितुः फलम् ॥

[7]पश्चाल्लोकेत्यादि ॥ अत्र 'नमस्त आतान'* इति पत्नीमा-

*सं १-३-८.13

त्पत्नी नमस्त आतानेत्याहादित्य-
स्य वै रश्मयः ॥ ४३ ॥ आताना-
स्तेभ्य एव नमस्करोत्यनर्वा प्रेही-
त्याह भ्रातृव्यो वा अर्वा भ्रातृव्या-
पनुत्यै घृतस्य कुल्यामनु सह प्र-

तानेत्या–तान । इति । आह । आदित्यस्य । वै । रश्मयः ॥ ४३ ॥ आताना इत्या–तानाः । तेभ्यः । एव । नमः । करोति । अनर्वा । प्रेति । इहि । इति । आह । भ्रातृव्यः । वै । अर्वा । भ्रातृव्याप-नुत्या इति भ्रातृव्य–अपनुत्यै । [8]घृतस्य । कुल्याम् । अन्विति । सह । प्रजयेति प्र–जया । सह । रा-

दित्यमुदीक्षयति । 'अनर्वा प्रेहि'* इत्यादि प्राचीमेनामुदानयन्वा-चयति । तत्रेदमुच्यते । पश्चाल्लोका पश्चात्स्थानस्थिता इदानीं प्राच्युदानीयते पत्नी । तस्मात् 'नमस्त आतान'* इत्यादित्यमु-पतिष्ठते आभिमुख्येनातन्यमानोरश्मिः आतान इति कृत्वा । तदे-वाह—आदित्यस्य वा इति । मन्त्रे मतुब्लोपः । अनर्वेति । कुत्सितमरणम् । 'अवद्यावम' इति अर्तेः नन्प्रत्ययोर्वादेशश्च निपात्यते । तद्रहितः अनर्वा, 'भ्रातृव्यो वा अर्वा' इति ब्राह्मणे वनिप्प्रत्ययान्तस्य दर्शनात् सोपि तदर्थोस्तीति ज्ञायते । भ्रातृव्यापनुतिशब्दो दासीभारादिर्द्रष्टव्यः ॥

[8]घृतस्य कुल्यामित्यादि प्रार्थना ॥ आपो देवीरिति पत्नी-

*सं १-३-८.13—14

जया सह रायस्पोषेणेत्याहाशिषमे-
वैतामा शास्त आपो देवीश्शुद्धायु-
व इत्याह यथायजुरेवैतत् ॥ ४४ ॥
पशोर्वा आलंब्धस्य प्राणाञ्छुगृच्छ-

यः । पोषेण । इति । आह । आशिषमित्या—शि-
षम् । एव । एताम् । एति । शास्ते । आपः ।
देवीः । शुद्धायुव इति शुद्ध—युवः । इति । आह ।
यथायजुरिति यथा—यजुः । एव । एतत् ॥ ४४ ॥

लोकायं नीयते यद्दूही रश्मयस्समन्त्रिँ-
शच्च ॥ ८ ॥

[1]पशोः । वै । आलंब्धस्येत्या—लब्धस्य । प्रा-
णानिति प्र—अनान् । शुक् । ऋच्छति । वाक् ।

---

मपोवेक्षमाणां वाचयति । यथा यजुरिति । ऊर्ध्वं भूयास्मेत्येत-
द्यथा यजुस्संपद्यते एवेति ॥

इति षष्ठे तृतीये अष्टमोनुवाकः.

---

[1]पशोर्वा इत्यादि ॥ शुक् शोकः । 'वाक्त आ प्यायताम्'
इत्यादिभिः पत्नी अनुपूर्वं पशोः प्राणानाप्यायति । प्राणेभ्य इति

---

*सं १-३-९,[1]

ति वाक्त आ प्यायतां प्राणस्त आ
प्यायतामित्याह प्राणेभ्य एवास्य
शुचꣳ शमयति सा प्राणेभ्योधि पृ-
थिवीꣳ शुक्प्र विशति शमहोभ्या-
मिति नि नयत्यहोरात्राभ्यामेव पृ-

ते । एति । प्यायताम् । प्राण इति प्र-अनः । ते ।
एति । प्यायताम् । इति । आह । प्राणेभ्य इति
प्र-अनेभ्यः । एव । अस्य । शुचम् । शमयति ।
सा । प्राणेभ्य इति प्र-अनेभ्यः । अधीति । पृ-
थिवीम् । शुक् । प्रेति । विशति । शम् । अहो-
भ्यामित्यहः-भ्याम् । इति । नीति । नयति ।
अहोरात्राभ्यामित्यहः-रात्राभ्याम् । एव । पृथि-

---

ल्यब्लोपे पञ्चमी । अस्य पशोः प्राणेभ्य आदाय शोकं श-
मयति । सेत्यादि । सा शुक् प्राणेभ्योपनीता पृथिवीं प्रवि-
शति । अधिरनर्थकः । पृथिवीं वा अधिष्ठाय प्रविशति । अधिष्ठाय
प्रवेशोऽधिप्रवेशः । तच्छान्त्यर्थं शमहोभ्यामिति अतिशिष्टा अपः
दक्षिणतो न पृष्ठतः निनयति । अहोरात्राभ्यामिति । मन्त्रपद-
स्येदं विवरणम् । अहस्सहिता रात्रिरप्यहरित्युच्यते मन्त्रे । यद्वा—
व्यत्ययेन विरूपयोरप्येकशेषः प्रवर्तते । हेतौ तृतीया । अ-
होरात्राभ्यां हेतुभ्यामिति ॥

थित्यै शुचꣳ शमयत्योषधे त्राय-
स्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्या-
ह वज्रो वै स्वधितिः ॥ ४५ ॥ शा-
न्त्यै पार्श्वत आ छ्यति मध्यतो हि
मनुष्या आछ्यन्ति तिरश्चीनमा
छ्यत्यनूचीनꣳ हि मनुष्या आछ्य-

त्यै । शुचम् । शमयाति । [2]ओषधे । त्रायस्व । ए-
नम् । स्वधित इति स्व-धिते । मा । एनम् ।
हिꣳसीः । इति । आह । वज्रः । वै । स्वधितिरि-
ति स्व-धितिः ॥ ४५ ॥ शान्त्यै । पार्श्वतः । एति ।
एति । छ्यति । मध्यतः । हि । मनुष्याः । आछ्य-
न्तीत्या-छ्यन्ति । तिरश्चीनम् । एति । छ्यति ।
अनूचीनम् । हि । मनुष्याः । आछ्यन्तीत्या-छ्य-

---

[2]वपाग्रहणदेशे प्राचीनाग्रं बर्हिर्निदधाति—ओषधे इति ॥ तत्र स्वधितिं निदधाति—स्वधिते इति । गतम्* । पार्श्वत इति । पार्श्वे आच्छ्यति आच्छिनत्ति । मध्ये हेतुमाह—मध्यतो हि मनुष्याः सौनिकादयः आच्छ्यन्ति आच्छिन्दन्ति । उभयत्र आद्यादित्वात्तसिः । छो छेदने, दैवादिकः, 'ओतश्श्यनि' इति लोपः, 'हि च' इति निघाताभावः, 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च । तिरश्चीनमिति । तिर्यञ्चानं, नानूची-

---

*सं. ६-३-३.6—7

न्ति व्यावृ॑त्त्यै रक्ष॑सां भा॒गो॑सीति॑
स्थविम॒तो ब॒र्‌हिर॒क्त्वाऽपा॑स्यत्य॒स्नै-
व रक्षा॒ꣳसि नि॒रव॑दयत इ॒दम॒हꣳ
रक्षो॑ध॒मं तमो॑ नयामि॒ यो॑स्मान्द्वेष्टि॒
यं च॑ व॒यं द्वि॒ष्म इत्या॑ह॒ द्वौ वाव

न्ति॑ । व्यावृ॑त्त्या॒ इति॑ वि–आवृ॑त्त्यै । [3]रक्ष॑साम् । भा॒गः । अ॒सि॒ । इति॑ । स्थ॒वि॒मतः । ब॒र्‌हिः । अ॒-क्त्वा । अपेति॑ । अ॒स्य॒ति॒ । अ॒स्ना । ए॒व । रक्षा॒ꣳ-सि । नि॒रव॑दयत॒ इति॑ निः–अव॑दयत । इ॒दम् । अ॒हम् । रक्षः॑ । अ॒ध॒मम् । तमः॑ । न॒या॒मि॒ । यः॑ । अ॒स्मान् । द्वेष्टि॑ । यम् । च॒ । व॒यम् । द्वि॒ष्मः । इति॑ । आ॒ह॒ । द्वौ । वाव । पुरु॑षौ । यम् । च॒ ।

---

नमाछ्यति । हेतुं चाह—अनूचीनं पशुशरीरानुगुणं मनुष्या आछ्यन्ति न तिरश्चीनम् । तस्मात् व्यावृत्त्यर्थमेवं क्रियमाणं भवत्यस्य लौकिकात्पशोः ॥

[3]रक्षसां भागोसीति ॥ उपाकरणबर्हिषोर्मूलं लोहितेनाक्त्वा इमां दिशं निरस्यति । तदिदमाह—स्थविमत इति । स्थविमा स्थूलत्वम् । स्थूलदूरादिना यणादिलोपः गुणश्च । तेन तद्वान् प्रदेशो लक्ष्यते, मत्वर्थीयलोपो वा । तत आद्यादित्वात्तसिः । बर्हिः उपाकरणबर्हिः । 'रक्षांसि निरवदयते' इति वक्ष्यमाणत्वा द्विवकलाभः । अस्नेति । असृजा । पद्दन्नादिना असन्भावः ।

पुरुषौ यं चैव ॥ ४६ ॥ द्वेष्टि यश्चै-
नं द्वेष्टि तावुभावधमं तमो नयती-
षे त्वेति वपामुत्खिदतीच्छत इव
ह्येष यो यजते यदुपतृन्द्याद्रुद्रोऽस्य
पशून्घातुकस्स्याद्यन्नोप तृन्द्यादयता
स्यादन्ययोप तृणत्त्यन्यया न धृत्यै

एव ॥ ४६ ॥ द्वेष्टि । यः । च । एनम् । द्वेष्टि ।
तौ । उभौ । अधमम् । तमः । नयति । [4]इषे ।
त्वा । इति । वपाम् । उदिति । खिदति । इच्छते ।
इव । हि । एषः । यः । यजते । यत् । उपतृन्द्या-
दित्युप-तृन्द्यात् । रुद्रः । अस्य । पशून् । घातु-
कः । स्यात् । यत् । न । उपतृन्द्यादित्युप-तृन्द्यात् ।
अयता । स्यात् । अन्यया । उपतृणत्तीत्युप-तृण-

---

निरवदानं विनाशनम् । इदमहमित्यादि । गतम्* । अधमं तमः मृत्युः, नरकं वा ॥

[4]इषे त्वेति ॥ वपामुत्खिदति उद्धरति । खिद दैन्ये । इच्छत इवेति । यजमानस्येष्टत्वं दर्शयति । यदुपतृन्द्यादिति । वपाश्रपणीभ्यां वपां यद्युपतृन्द्यात् हिंस्यात् रुद्रः पशूनां हननपरस्स्यात् ।

---

*सं. ६-२-१०.[2]

घृतेनं द्यावापृथिवी प्रोर्णुवाथामित्यां-
ह द्यावापृथिवी एव रसेनानक्त्यच्छिं-
न्नः ॥४७॥ रायंस्सुवीर इत्यांह य-
थायजुरेवैतत्क्रूरमिंव वा एतत्कंरो-
ति यद्वपामुंत्खिदत्युर्वन्तरिंक्षमन्वि-

त्तिं । अन्यया । न । धृत्यै । [5]घृतेनं । द्यावापृथि-
वी इतिं द्यावा-पृथिवी । प्रेतिं । ऊर्णुवाथाम् । इ-
तिं । आह । द्यावापृथिवी इति द्यावा-पृथिवी ।
एव । रसेन । अनक्ति । अच्छिन्नः ॥४७॥ रायः ।
सुवीर इतिं सु-वीरः । इतिं । आह । यथायजु-
रितिं यथा-यजुः । एव । एतत् । क्रूरम् । इव ।
वै । एतत् । करोति । यत् । वपाम् । उत्खिदती-
त्युंत्-खिदतिं । उरु । अन्तरिक्षम् । अन्विति ।

---

'लषपदपत' इत्युकञ्, 'न लोकाव्यय' इति षष्ठीप्रतिषेधः । अथ यदि नोपतृन्द्यात् ताभ्यां तदा अयता अनियता स्यात् वपा । तस्मादन्यया एकया । अन्यया न । तद्धृत्यै धारणाय भवति । उ तृदिर् हिंसायाम्, 'एकान्याभ्यां समर्थाभ्याम्' इति निघाताभावः ॥

[5]घृतेनेति ॥ वपाश्रपण्येका । वपया प्रोर्णोति । द्यावापृथिवी इति । 'दिवो द्यावा' इति द्यावादेशः, 'वा छन्दसि' इति पू-

हीत्याह शान्त्यै प्र वा एषोऽस्माल्लो-
काच्च्यवते यः पशुं मृत्यवे नीयमा-
नमन्वारभते वपाश्रपणी पुनरन्वा-
रभतेऽस्मिन्नेव लोके प्रति तिष्ठत्य-
ग्निना पुरस्तादेति रक्षसामपहत्या
अथो देवता एव हव्येन ॥ ४८ ॥

इहि । इति । आह । शान्त्यै । प्रेति । वै । एषः । अस्मात् । लोकात् । च्यवते । यः । पशुम् । मृत्यवे । नीयमानम् । अन्वारभत इत्यनु–आरभते । वपाश्रपणी इति वपा–श्रपणी । पुनः । अन्वारभत इत्यनु–आरभते । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । [6]अग्निना । पुरस्तात् । एति । रक्षसाम् । अपहत्या इत्यप–हत्यै । अथो इति । देवताः । एव । हव्येन ॥ ४८ ॥ अन्विति । एति ।

---

र्वसवर्णदीर्घत्वम्, 'देवताद्वन्द्वे च' इत्युदात्तत्वम् । अच्छिन्न इति । वपामधस्तात्परिवासयति । क्रूरमिवेत्यादि । महदन्तरिक्षमनुगच्छे-त्युक्त्वा वपामादायेति तच्छान्त्यै भवति । प्र वा एष इति । गतम् ॥

[6]अग्निनेति ॥ उल्मुकेन सहाग्रतो गच्छति रक्षसामपघातार्थम् । अपि च देवता एव ह्येनाननुगच्छति, सर्वदेवतात्मकत्वादग्नेः । नान्त-

अन्वेति नान्तममङ्गारमति हरेद्यद-
न्तममङ्गारमतिहरेद्देवता अति म-
न्येत वायो वीहि स्तोकानामित्या-
ह तस्माद्विभक्तास्स्तोका अव पद्य-
न्तेऽग्रं वा एतत्पशूनां यद्वपाऽग्रमोष-

न । अन्तमम् । अङ्गारम् । अतीति । हरेत् । यत् ।
अन्तमम् । अङ्गारम् । अतिहरेदित्यति–हरेत् ।
देवताः । अतीति । मन्येत । [7]वायो इति । वीति । इ-
हि । स्तोकानाम् । इति । आह । तस्मात् । वि-
भक्ता इति वि–भक्ताः । स्तोकाः । अवेति । प-
द्यन्ते । अग्रम् । वै । एतत् । पशूनाम् । यत् ।

ममिति । अन्तं सर्वान्त्यमङ्गारमाहवनीयस्थं नातिहरेत् अतिक्रम्य न गच्छेत् । अन्तममितीकारलोपश्छान्दसः । यद्वा—अन्तमं अन्तिकतमं सन्निहिततमं 'अन्तात्यन्ते' इति........(?) ['तमेतादेश्च' इति तादिलोपः] । प्रथमं सन्निहिते त्वङ्गारे बर्हिषोग्रमुपास्यति ॥

[7]वायो वीहीति ॥ उपासनमन्त्रः बर्हिषः । 'तमेतादेश्च' इति चादिलोपः, छान्दसमन्तोदात्तत्वम्, उदात्तनिवृत्तिस्वरो वा । यद्यन्तमतीत्य गच्छेत् देवता अतिमन्येत । तस्मादिति । विविधं गच्छ, पृथक्पृथग्गच्छेति मन्त्रवचनात् विभक्ताः स्तोका वपाबिन्दवः पृथिव्यामवपद्यन्ते । अग्रं वा इति । वपानाम पशूनामग्रं प्रधानं, बर्हिर्नाम ओषधीनामग्रम् । अग्रेणैवेत्यादि । गतम् ॥

धीनां बर्हिरग्रेणैवाग्रꣳ समर्धयत्य-
थो ओषधीष्वेव पशून्प्रतिष्ठापयति
स्वाहाकृतीभ्यः प्रेष्येत्याह ॥ ४१ ॥
यज्ञस्य समिष्ट्यै प्राणापानौ वा
एतौ पशूनां यत्पृषदाज्यमात्मा व-

वपा । अग्रम् । ओषधीनाम् । बर्हिः । अग्रेण । एव । अग्रम् । समिति । अर्धयति । अथो इति । ओषधीषु । एव । पशून् । प्रतीति । स्थापयति । [8]स्वाहाकृतीभ्य इति स्वाहाकृति–भ्यः । प्रेति । इष्य । इति । आह ॥ ४१ ॥ यज्ञस्य । समिष्ट्या इति सं–इष्ट्यै । [9]प्राणापानाविति प्राण–अपानौ । वै । एतौ । पशूनाम् । यत् । पृषदाज्यमिति

[8]स्वाहाकृतीभ्य इति मैत्रावरुणं संप्रेष्यति 'होता यक्षदग्निम्'* इति । योयमन्त्यः प्रयाजः स स्वाहाकृतिशब्देनोच्यते । देवताबहुत्वाद्बहुवचनम् । स हि 'वपामेकः परि शये'† इति पूर्वं न कृतः, स इदानीं क्रियमाणो यज्ञस्य समष्ट्यै सम्यग्यागनिवृत्त्यर्थं भवति । स्वाहाशब्देन ऊर्यादित्वेन गतित्वात् 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्, छान्दसं क्तिनो दीर्घत्वं सांहितिकम् ॥

[9]प्राणापानाविति ॥ पृषदाज्यं नाम दधिमिश्रमाज्यं तत्प्राणापा-

*ब्रा. २-६-११. †सं. ६-३-७.[8]

पा पृषदाज्यमभिघार्य वपामभि घा-
रयत्यात्मन्नेव पशूनां प्राणापानौ द-
धाति स्वाहोर्ध्वनभसं मारुतं गच्छ-
तमित्याहोर्ध्वनभा ह स्म वै मारु-
तो देवानां वपाश्रपणी प्र हरति ते-

पृषत्–आज्यम् । आत्मा । वपा । पृषदाज्यमिति पृषत्–आज्यम् । अभिघार्येत्यभि–घार्य । वपाम् । अभीति । घारयति । आत्मन् । एव । पशूनाम् । प्राणापानाविति प्राण–अपानौ । दधाति । [10]स्वाहा । ऊर्ध्वनभसमित्यूर्ध्व–नभसम् । मारुतम् । गच्छतम् । इति । आह । ऊर्ध्वनभा इत्यूर्ध्व–नभाः । ह । स्म । वै । मारुतः । देवानाम् । वपा-

---

नस्थानीयम् । पशूनामात्मस्थानीया वपा । पृषदाज्यमित्यादि । गतम् । उपरि घृतासेचनमभिघारः ॥

[10]स्वाहोर्ध्वनभसमिति वपाश्रपण्योः प्रहरणम् । ऊर्ध्वनभा नाम देवानां वपाश्रपण्योः प्रहर्ता । तेनैवैते प्रहृते भवतः, अनेनैव मन्त्रेण प्रहरणात् । विषूची इति । विष्वङ् नाना अञ्चत इति विषूच्यौ व्यत्यस्ताग्रे । पूर्ववत्पूर्वसवर्णदीर्घत्वम्, 'चौ' इति पूर्वपदस्य दीर्घत्वम् । धातोरनच्कत्वाद्दीर्घश्च । परत्वान्निपातस्वर आद्युदात्तः प्रवर्तते । यद्वा—अव्ययपूर्वपदप्रकृतिस्वरत्वं,

नैवैने प्र हरति विषूची प्र हरति
तस्माद्विष्वञ्चौ प्राणापानौ ॥ ५० ॥
पशुमालभ्यं पुरोडाशं निर्वपति

अर्पणी इति वपा–अर्पणी । प्रेति । हरति । तेन । एव । एने इति । प्रेति । हरति । विषूची इति । प्रेति । हरति । तस्मात् । विष्वञ्चौ । प्राणापानाविति प्राण–अपानौ ॥ ५० ॥

स्वधितिश्चैवाच्छिन्नो हव्येनेष्येत्याह षट्त्रिंशच्च ॥ ९ ॥

[1]पशुम् । आलभ्येत्या–लभ्य । पुरोडाशम् । निरिति । वपति । समेधमिति स–मेधम् । एव ।

---

गत्याद्यभावात् कृदुत्तरपदप्रकृतिस्वराप्रसङ्गः । 'चौ' इत्यन्तोदात्तत्वं व्यत्ययेन न प्रवर्तते । तस्मादिति । ऊर्ध्वगतिः प्राणः, अधोगतिरपान इति विष्वक्क्रमनयोः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

इति षष्ठे तृतीये नवमोनुवाकः.

---

[1]पशुमालभ्येत्यादि ॥ पशोस्संज्ञपनानन्तरं पुरोडाशं निर्वपति, यजनानन्तरमेव वा । एवं हि समेधसमेवैनमालभते मेधानुरूपोयमालब्धो भवति । आनुरूप्ये अव्ययीभावः । यद्वा—समेधसं सरसमेवालभते, ओषधिनिमित्तत्वात्सारस्यम् ॥

समेधमेवैनमा लभते वपया प्रचर्य
पुरोडाशेन प्र चरत्यूर्ग्वै पुरोडाश
ऊर्जमेव पशूनां मध्यतो दधात्यथो
पशोरेव छिद्रमपि दधाति पृषदा-
ज्यस्योपहत्य त्रिः पृच्छति शृतꣳ

एनम् । एति । लभते । [2]वपया । प्रचर्येति प्र—च-
र्य । पुरोडाशेन । प्रेति । चरति । ऊर्क् । वै । पु-
रोडाशः । ऊर्जम् । एव । पशूनाम् । मध्यतः ।
दधाति । अथो इति । पशोः । एव । छिद्रम् ।
अपीति । दधाति । पृषदाज्यस्येति पृषत्—आज्य-
स्य । उपहत्येत्युप—हत्य । त्रिः । पृच्छति । शृ-

[2]वपयेति ॥ वपाप्रचरणानन्तरं पुरोडाशेन प्रचरितव्यम् । ऊर्वा इत्यादि । गतम् । मध्यत इति । वपाहविर्यागयोर्मध्ये पुरोडाशयागात् पशूनां मध्ये अन्नमेव दधाति । अपि च यच्छिद्रं वपासुषिरं पशोस्तदप्यपिदधाति तिरोदधाति घट्टयति* । पृषदाज्यस्येत्यादि । जुह्वा स्रुवेण पृषदाज्यस्य एकदेशमुपहत्य पार्श्वत आदाय । यद्वा—कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । पृषदाज्यं गृहीत्वा शमितारं त्रिः पृच्छति । हे शमितः किं शृतं पक्वं हव्यम् । अनन्त्यस्यापि 'प्रश्नाख्ययोः' इति प्लुतः । 'शृतं पाके' इति निपात्यते । त्रिषत्या हीति । त्रिरुक्तं सत्यं श्रद्धेयं

*छादयतीत्यपि पाठः.

हवी३इशमितरिति त्रिषत्या हि देवा
योऽशृतꣳ शृतमाह स एनसा प्रा-
णापानौ वा एतौ पशूनाम् ॥५१॥
यत्पृषदाज्यं पशोः खलु वा आल-
ब्धस्य हृदयमात्माऽभि समेति यत्पृ-
षदाज्येन हृदयमभिघारयत्यात्मन्ने-

तम् । हवी३ः । शमितः । इति । त्रिषत्या इति त्रि-सत्याः । हि । देवाः । यः । अशृतम् । शृतम् । आह । सः । एनसा । प्राणापानाविति प्राण-अपानौ । वै । एतौ । पशूनाम् ॥ ५१ ॥ यत् । पृषदाज्यमिति पृषत्-आज्यम् । पशोः । खलु । वै । आलब्धस्येत्या-लब्धस्य । हृदयम् । आत्मा । अभि । समिति । एति । यत् । पृषदाज्येनेति पृषत्-आज्येन । हृदयम् । अभिघारयतीत्यभि-घारयति । आत्मन्न् । एव । पशूनाम् । प्राणापाना-

येषां ते त्रिषत्याः । सुषामादित्वात्षत्वम् । य इत्यादि । यश्शमिता अशृतमेव हविः शृतमाह शृतमिति ब्रूते स एनसा उपलक्षितो भवति । सहयोगे वा तृतीया, एनस्वी भवति । तस्मात् शृते सत्यमेव शृतं ब्रूयात् । प्राणापानावित्यादि । गतम्* ।

*सं. ६-३-९.

व पशूनां प्राणापानौ दधाति पशु-
ना वै देवास्सुवर्गं लोकमायन्तेऽम-
न्यन्त मनुष्या नोन्वाभविष्यन्ती-
ति तस्य शिरश्छित्त्वा मेधं प्राक्षार-
यन्त्स प्रक्षोभवत्तत्प्रक्षस्य प्रक्षत्वं य-
त्प्लक्षशाखोत्तरबर्हिर्भवति समेध-

विति प्राण–अपानौ । दधाति । [3]पशुना । वै । दे-
वाः । सुवर्गमिति सुवः–गम् । लोकम् । आयन् ।
ते । अमन्यन्त । मनुष्याः । नः । अन्वाभविष्य-
न्तीत्यनु–आभविष्यन्ति । इति । तस्य । शिरः ।
छित्त्वा । मेधम् । प्रेति । अक्षारयन् । सः । प्रक्षः ।
अभवत् । तत् । प्रक्षस्य । प्रक्षत्वमिति प्रक्ष–त्वम् ।
यत् । प्लक्षशाखेति प्लक्ष–शाखा । उत्तरबर्हिरित्यु-
त्तर–बर्हिः । भवति । समेधस्येति स–मेधस्य ।

---

अभिसमेतीति । आभिमुख्येन हृदयप्रदेशमागच्छति । गतमन्यत्* ॥

[3]पशुना वा इत्यादि ॥ पशुना स्वर्गं गता देवाः मनुष्या-
णामपि पशुना अन्वागमनमाशङ्कमानास्तन्मा भूदिति तस्य पशो-
शिरश्छित्त्वा मेधं रसं प्राक्षारयन् । प्रक्षरणात्प्रक्षः, । कपिल-

---

*सं. ६-३-९,[9]

स्यैव ॥ ५२ ॥ पशोरवं द्यति पशुं वै ह्रियमाण२ँ रक्षा२ँस्यनु सचन्ते-ऽन्तरा यूपं चाहवनीयं च हरति रक्षंसामपंहत्यै पशोर्वा आलंब्धस्य मनोपं क्रामति मनोतांयै हविषोंव-

एव ॥ ५२ ॥ पशोः । अवेति । द्यति । पशुम् । वै । ह्रियमाणम् । रक्षा२ँसि । अन्विति । सचन्ते । अन्तरा । यूपम् । च । आहवनीयमित्या-हवनीयम् । च । हरति । रक्षसाम् । अपहत्या इत्यप-हत्यै । [4]पशोः । वै । आलब्धस्येत्या-लब्धस्य । मनः । अपेति । क्रामति । मनोतायै । हविषः । अवदीयमानस्येत्यव-दीयमानस्य । अन्विति । ब्रू-

---

कादित्वाच्छत्वविकल्पः, क्षरेश्छान्दसो डः । यदिति । प्लक्षो वृक्ष-विशेषः । उत्तरबर्हिरिति संज्ञा, यत्रावदानान्यवद्यति । समेध-स्येति । सरसस्यैव पशोरवदानं कृतं भवति, प्लक्षशाखायामवदा-नात् । पशुं वा इत्यादि । पशुमवदानार्थं ह्रियमाणं रक्षांस्यनु-सचन्ते पृष्ठतो भजन्ते । तस्माद्यूपाहवनीययोर्मध्येन हरति । 'अ-न्तराऽन्तरेण' इति द्वितीया । तद्रक्षसामपहत्यै भवति तद्रक्षसां प्रवेशाभावाय ॥

[4]पशोर्वा इत्यादि ॥ अपक्रमणं नाशः । मनोताया इति

दीयमानस्यानु ब्रूहीत्याह मनं एवा-
स्यावं रुन्ध एकादशावदानान्यवं द्य-
ति दश वै पशोः प्राणा आत्मैका-
दशो यावानेव पशुस्तस्यावं ॥५३॥
द्यति हृदयस्याग्रेऽवं द्यत्यथ जिह्वा-

हि । इति । आह । मनः । एव । अस्य । अवेति ।
रुन्धे । [5]एकादश । अवदानानीत्यव–दानानि । अ-
वेति । द्यति । दश । वै । पशोः । प्राणा इति प्र–
अनाः । आत्मा । एकादशः । यावान् । एव ।
पशुः । तस्य । अवेति ॥ ५३ ॥ द्यति । हृदयस्य ।
अग्रे । अवेति । द्यति । अथ । जिह्वायाः । अथ ।

---

संप्रैषः । मनोता अग्निः, यथा—'त्वं ह्यग्ने प्रथमो मनोता'* इति । मनसा उता मनोता । पृषोदरादिः ॥

[5]एकादशेति ॥ प्रयाजेषु व्याख्यातम्† । हृदयस्येत्यादिक्रमविधिः । यद्वा इति क्रमसमर्थनम् । हृदयस्थितं जिह्वयाऽवद्याति । तदुरसोधि निर्वदति उरसा ऊर्ध्वं निष्क्रम्य उरोबलेन वाग्रूपेणावतिष्ठते । एतद्वा इति । एतावदेव पशोः यथापूर्वं आनुपूर्व्येणावदेयं अर्थक्रमानुरोधादेव हृदयादीनि त्रीण्यङ्गानि लोकेऽपि प्रसिद्धक्रमाणि । एवमनेन क्रमेणावदायोत्तरेषामष्टानामङ्गानां यथा-

*तै. ब्रा. ३-६-१०, †सं ६-३-७,४

या अथ वक्षसो यद्वै हृदयेनाभि ग-
च्छति तज्जिह्वया वदति यज्जिह्वया
वदति तदुरसोधि निर्वदत्येतद्वै पशो-
र्यथापूर्वं यस्यैवमवदाय यथाकाम-
मुत्तरेषामव द्यति यथापूर्वमेवास्य
पशोरवत्तं भवति मध्यतो गुदस्याव

वक्षसः । यत् । वै । हृदयेन । अभिगच्छतीत्यभि-गच्छति । तत् । जिह्वया । वदति । यत् । जिह्वया । वदति । तत् । उरसः । अधि । निरिति । वदति । एतत् । वै । पशोः । यथापूर्वमिति यथा-पूर्वम् । यस्य । एवम् । अवदायेत्यव-दाय । यथाकाममिति यथा-कामम् । उत्तरेषामित्युत्-तरेषाम् । अवद्यतीत्यव-द्यति । यथापूर्वमिति यथा-पूर्वम् । एव । अस्य । पशोः । अवत्तम् । भवति । मध्यतः । गुदस्य । अवेति । द्यति । मध्यतः । हि ।

---

काममवद्यति; अर्थक्रमाभावात् स्वाभिमतेन क्रमेणावद्यति अस्यैव पशोः यथापूर्वमेवावदानं कृतं भवति । क्रमाभावान्नातिक्रमेणावत्तं भवति । मध्यत इति । केचिदाहुः—पञ्चानामवदाय ततो गुदस्यावद्यतीति । तेन सामर्थ्याद्विकल्प इति । अन्य आहुः—गुदं त्रेधा कृत्वा मध्यमस्यावद्यति उत्तमस्य वेति । मध्यतो हि देहे प्राणोवतिष्ठते । उत्तमः उ-

द्याति मध्यतो हि प्राण उत्तमस्या-
वं द्याति ॥ ५४ ॥ उत्तमो हि प्रा-
णो यदीतरं यदीतरमुभयमेवाजा-
मि जायमानो वै ब्राह्मणस्त्रिभिर्
ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो
यज्ञेन देवेभ्यः प्रजया पितृभ्य एष

प्राण इति प्र-अनः । उत्तमस्येत्युत्-तमस्य । अ-वेति । द्याति ॥ ५४ ॥ उत्तम इत्युत्-तमः । हि । प्राण इति प्र-अनः । यदि । इतरम् । यदि । इतरम् । उभयम् । एव । अजामि । [6]जायमानः । वै । ब्राह्मणः । त्रिभिरिति त्रि-भिः । ऋणवेत्यृण-वा । जायते । ब्रह्मचर्येणेति ब्रह्म-चर्येण । ऋषिभ्य इत्यृषि-भ्यः । यज्ञेन । देवेभ्यः । प्रजयेति प्र-जया । पितृभ्य इति पितृ-भ्यः । एषः । वै ।

---

उततमो हि प्राणः मुखनासिकेन निर्गतत्वात् । यदीतरमिति । 'नेतराच्छन्दसि' इत्यडादेशाभावः । अन्यतरपक्षसमाश्रयणेऽपि न दोष इति प्रतिपादयितुं वीप्सादिमध्यतोपादानम् । यदि वा उत्तमस्योभयमप्येतत् । अजामि आलस्यरहितं निर्दोषमिति यावत् ॥

[6]जायमान इत्यादि ॥ जायमानावस्थ एव त्रिभिः ऋणैः ऋणवान् जायते ब्राह्मणः । 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः,

वा अनृणो यः पुत्री यज्वा ब्रह्मचा-
रिवासी तदवदानैरेवाव दयते तदव-
दानानामवदानत्वं देवासुराः संय-
त्ता आसन्ते देवा अग्निमब्रुवन्त्वया
वीरेणासुरानभि भवामेति ॥५५॥

अनृणः । यः । पुत्री । यज्वा । ब्रह्मचारिवासीति ब्रह्मचारि–वासी । तत् । अवदानैरित्यव–दानैः । एव । अवेति । दयते । तत् । अवदानानामित्यव–दानानाम् । अवदानत्वमित्यवदान–त्वम् । [7]देवासुरा इति देव–असुराः । संयत्ता इति सं–यत्ताः । आसन् । ते । देवाः । अग्निम् । अब्रुवन् । त्वया । वीरेण । असुरान् । अभीति । भवाम । इति ॥५५॥

---

प्रत्ययान्तोदात्तत्वम् । यद्वा—'ह्रस्वनुड्भ्यां मतुप्' इति विधीयमानस्यापि भवति । तदवदानैरिति । यद्देवेभ्यः ऋणं तदवदानैः हृदयादिभिः [वि]युज्यमानैरवदयते विनाशयति । एवमेषामवदानत्वमिति स्तुतिः । करणे ल्युट् ॥

[7]देवासुरा इत्यादि ॥ गतम् । उद्धारमिति । उत्कृष्टं हरणमुद्धारः ज्येष्ठभाग इति प्रसिद्धः यस्सामान्यभागस्योपरिभागः, तमहमुद्धारैरुद्धरेयेति । स एतमिति । एतं वक्ष्यमाणदोःप्रभृतिमुद्धारत्वेनोदहरताग्निः । अत्र 'अक्षणयाऽव द्यति'* इति वक्ष्यमाण-

---

*सं. ६-३-१०,[9]

सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्वार्धस्य गुदं मध्यतश्श्रोणिं जघनार्धस्य ततो देवा अभवन्पराऽसुरा यत्त्र्यङ्गाणाꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृ-

सः । अब्रवीत् । वरम् । वृणै । पशोः । उद्धारमित्युत्–हारम् । उदिति । हरै । इति । सः । एतम् । उद्धारमित्युत्–हारम् । उदिति । अहरत । दोः । पूर्वार्धस्येति पूर्व–अर्धस्य । गुदम् । मध्यतः । श्रोणिम् । जघनार्धस्येति जघन–अर्धस्य । ततः । देवाः । अभवन् । परेति । असुराः । [4]यत् । त्र्यङ्गाणामिति त्रि–अङ्गानाम् । समवद्यतीति सं–अवद्यति । भ्रातृव्याभिभूत्या इति भ्रातृव्य–अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रा-

---

त्वात् दक्षिणा दोस्सव्या श्रोणिरिति गम्यते । ततोग्निना वीरेण देवा अभवन् भूतिमन्तस्संपन्नाः । असुराश्च पराभूताः । 'चादिलोपे विभाषा' इति निघाताभावः ॥

[4]यत्त्र्यङ्गाणामिति ॥ त्रीण्यङ्गानि त्र्यङ्गानि । 'दिक्संख्ये

व्यो भवत्यक्ष्णयाऽवं द्यति तस्मा-
दक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्र-
तिष्ठित्यै ॥ ५६ ॥

मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै

तृव्यः । भवति । [9]अक्ष्णया । अवेति । द्यति । त-
स्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति । ह-
रन्ति । प्रतिष्ठित्या इति प्रति-स्थित्यै ॥ ५६ ॥

एतौ पशूनाꣳ समेधस्यैव तस्यावोत्तमस्या-
वं द्यतीति पञ्चचत्वारिꣳशच्च ॥१०॥

[1]मेदसा । स्रुचौ । प्रेति । ऊर्णोति । मेदोरूपा

---

संज्ञायाम्' इति समासः सप्तर्षिवत् । तेषां दोःप्रभृतीनां समव-
दानमेकत्रावदानम् । भ्रातृव्याभिभूत्यै भवतीत्यादि । गतम्* ॥

[9]अक्ष्णयेति ॥ दक्षिणस्या दोष्णः सव्यायाश्च श्रोणेरवदानात् ।
तस्मादित्यादि । व्याख्यातम्† । तस्मादक्ष्णयाऽवदानं प्रतिष्ठित्यै भवति ॥

इति षष्ठे तृतीये दश

---

[1]मेदसेत्यादिवर्गः ॥ ऊधसो मांसं मेदः । स्रुचौ जुहूप-
भृतौ । मेदोरूपाः मेदस्स्वभावाः पशवः । यूषन्निति । यूष्णो

*सं. ६-२-५.[7] †सं. ५-२-७.

पशवो रूपमेव पशुषु दधाति यूष-
न्नवधाय प्रोर्णोति रसो वा एष प-
शूनां यद्यू रसमेव पशुषु दधाति
पार्श्वेन वसाहोमं प्र यौति मध्यं वा
एतत्पशूनां यत्पार्श्वꣳ रसं एष प-
शूनां यद्वसा यत्पार्श्वेन वसाहोमं

इति मेदः—रूपाः । वै । पशवः । रूपम् । एव ।
पशुषु । दधाति । यूषन् । अवधायेत्यव—धाय ।
प्रेति । ऊर्णोति । रसः । वै । एषः । पशूनाम् ।
यत् । यूः । रसम् । एव । पशुषु । दधाति । [2]पा-
र्श्वेन । वसाहोममिति वसा—होमम् । प्रेति । यौति ।
मध्यम् । वै । एतत् । पशूनाम् । यत् । पार्श्वम् ।
रसः । एषः । पशूनाम् । यत् । वसा । यत् । पा-
र्श्वेन । वसाहोममिति वसा—होमम् । प्रयौतीति

---

रसात्स्रुतं जलम् । पद्दन्नादिना यूषन्भावः, 'सुपां सुलुक्' इति सप्तम्या लुक् । अवधाय प्रक्षिप्य । रसो वा इत्यादि । गतम् ॥

[2]पार्श्वेनेति ॥ पार्श्वाख्येन पश्वङ्गेन वसाहोमं वसां हेतव्यां प्रयौति

प्रयौति मध्यत एव पशूनाꣳ रसं द-
धाति घ्नन्ति ॥ ५७ ॥ वा एतत्पशुं
यथ्संज्ञपयन्त्यैन्द्रः खलु वै देवतया
प्राण ऐन्द्रोपान ऐन्द्रः प्राणो अङ्गे-
अङ्गे नि देध्यदित्याह प्राणापानावेव
पशुषु दधाति देवं त्वष्टर्भूरि ते सꣳ-
समेत्वित्याह त्वाष्ट्रा हि देवतया प-
शवो विषुरूपा यथ्सलक्ष्माणो भ-

प्र—यौति । मध्यतः । एव । पशूनाम् । रसम् । दधाति । घ्नन्ति ॥५७॥ वै । एतत् । पशुम् । यत् । संज्ञपयन्तीति सं—ज्ञपयन्ति । ऐन्द्रः । खलु । वै । देवतया । प्राण इति प्र—अनः । ऐन्द्रः । अपान इत्यप—अनः । ऐन्द्रः । प्राण इति प्र—अनः । अङ्गेअङ्ग इत्यङ्गे—अङ्गे । नीति । देध्यत् । इति । आह । प्राणापानाविति प्राण—अपानौ । एव । पशुषु । दधाति । देव । त्वष्टः । भूरि । ते । सꣳसमिति सं—सम् । एतु । इति । आह । त्वाष्ट्राः । हि । देवतया । पशवः । विषुरूपा इति विषु—रूपाः ।

आलोळयति । रसात्मको द्रव्य*विशेषो वसा । पशुषु अवदानेषु ॥

*क—आज्य

वृथेत्याह विषुरूपा ह्येते सन्तस्स-
लक्ष्माण एतर्हि भवन्ति देवत्रा य-
न्तम् ॥५८॥ अवसे सखायोनु त्वा
माता पितरो मदन्त्वित्याहानुमत-
मेवैनं मात्रा पित्रा सुवर्गं लोकं गं-
मयत्यर्धर्चे वसाहोमं जुहोत्यसौ वा
अर्धर्च इयमर्धर्च इमे एव रसेनान-
क्ति दिशो जुहोति दिश एव रसे-

यत् । सलक्ष्माण इति स–लक्ष्माणः । भवथ । इ-
ति । आह । विषुरूपा इति विषु–रूपाः । हि ।
एते । सन्तः । सलक्ष्माण इति स–लक्ष्माणः ।
एतर्हि । भवन्ति । देवत्रेति देव–त्रा । यन्तम् ॥ ५८ ॥
अवसे । सखायः । अन्विति । त्वा । माता । पि-
तरः । मदन्तु । इति । आह । अनुमतमित्यनु–
मतम् । एव । एनम् । मात्रा । पित्रा । सुवर्गमिति
सुवः–गम् । लोकम् । गमयति । अर्धर्च इत्यर्ध–
ऋचे । वसाहोममिति वसा–होमम् । जुहोति ।
असौ । वै । अर्धर्च इत्यर्ध–ऋचः । इयम् । अर्ध-
र्च इत्यर्ध–ऋचः । इमे इति । एव । रसेन । अन-
क्ति । दिशः । जुहोति । दिशः । एव । रसेन ।

नानक्त्यथो दिग्भ्य एवोर्जꣳ रसम-
वं रुन्धे प्राणापानौ वा एतौ पशू-
नां यत्पृषदाज्यं वानस्पत्याः खलु
॥ ५९ ॥ वै देवतया पशवो यत्पृष-
दाज्यस्योपहत्याह वनस्पतयेऽनु ब्रू-
हि वनस्पतये प्रेष्येति प्राणापानावेव
पशुषु दधात्यन्यस्यान्यस्य समव-
त्तꣳ समवद्यति तस्मान्नानारूपाः

अनक्ति । अथो इति । दिग्भ्य इति दिक्-भ्यः । एव । ऊर्जम् । रसम् । अवेति । रुन्धे । प्राणापानाविति प्राण-अपानौ । वै । एतौ । पशूनाम् । यत् । पृषदाज्यमिति पृषत्-आज्यम् । वानस्पत्याः । खलु ॥ ५९ ॥ वै । देवतया । पशवः । यत् । पृषदाज्यस्येति पृषत्-आज्यस्य । उपहत्येत्युप-हत्य । आह । वनस्पतये । अन्विति । ब्रूहि । वनस्पतये । प्रेति । इष्य । इति । प्राणापानाविति प्राण-अपानौ । एव । पशुषु । दधाति । अन्यस्यान्यस्येत्यन्यस्य-अन्यस्य । समवत्तमिति सं-अवत्तम् । समवद्यतीति सं-अवद्यति । तस्मात् ।

पशवो यूष्णोप सिञ्चति रसो वा
एष पशूनां यद्यू रसमेव पशुषु द-
धातीडामुप ह्वयते पशवो वा
इडा पशूनेवोप ह्वयते चतुरुप ह्वय-
ते ॥ ६० ॥ चतुष्पादो हि पशवो
यं कामयेतापशुस्स्यादित्यमेदस्कं

नानारूपा इति नाना-रूपाः । पशवः । [3]यूष्णा ।
उपेति । सिञ्चति । रसः । वै । एषः । पशूनाम् ।
यत् । यूः । रसम् । एव । पशुषु । दधाति । [4]इ-
डाम् । उपेति । ह्वयते । पशवः । वै । इडा । प-
शून् । एव । उपेति । ह्वयते । चतुः । उपेति । ह्व-
यते ॥ ६० ॥ चतुष्पाद इति चतुः-पादः । हि ।
पशवः । [5]यम् । कामयेत । अपशुः । स्यात् ।
इति । अमेदस्कमित्यमेदः-कम् । तस्मै । एति ।

---

[3]यूष्णेत्यादि ॥ गतम्* ॥

[4]इडामित्यादि ॥ गतमेव† । 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् ॥

[5]यमित्यादि ॥ अमेदस्कं अल्पमेदस्कं शुष्कं निर्भजति निर-
स्यति । मेदस्वत् प्रभूतमेदस्कम् ॥

---

*सं. ६-३-११.1 †सं. २-६-७.8

तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति मेदस्वत्तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवति प्रजापतिर्यज्ञमसृजत स आज्यम् ॥ ६१ ॥ पुरस्तादसृजत पशुं मध्यतः

दध्यात् । मेदोरूपा इति मेदः–रूपाः । वै । पशवः । रूपेण । एव । एनम् । पशुभ्य इति पशु–भ्यः । निरिति । भजति । अपशुः । एव । भवति । यम् । कामयेत । पशुमानिति पशु–मान् । स्यात् । इति । मेदस्वत् । तस्मै । एति । दध्यात् । मेदोरूपा इति मेदः–रूपाः । वै । पशवः । रूपेण । एव । अस्मै । पशून् । अवेति । रुन्धे । पशुमानिति पशु–मान् । एव । भवति । [6]प्रजापतिरिति प्रजा–पतिः । यज्ञम् । असृजत । सः । आज्यम् ॥ ६१ ॥ पुरस्तात् । असृजत । पशुम् । मध्यतः ।

[6]प्रजापतिरित्यादि ॥ गतम् । पश्चात्सृष्टत्वात् पृषदाज्यमिश्रं भवति । हेतुमाह—पश्चात्सृष्टं हीति । अस्मिन् काले इष्टशिष्ट-

पृषदाज्यं पश्चात्तस्मादाज्येन प्रया-
जा इज्यन्ते पशुनां मध्यतः पृष-
दाज्येनानूयाजास्तस्मादेतन्मिश्रमिं-
व पश्चात्सृष्टꣳ ह्येकादशानूयाजान्
यजति दश वै पशोः प्राणा आ-

पृषदाज्यमिति पृषत्–आज्यम् । पश्चात् । तस्मात् । आज्येन । प्रयाजा इति प्र–याजाः । इज्यन्ते । पशुनां । मध्यतः । पृषदाज्येनेति पृषत्–आज्येन । अनूयाजा इत्यनु–याजाः । तस्मात् । एतत् । मिश्रम् । इव । पश्चात्सृष्टमिति पश्चात्–सृष्टम् । हि । [7]एकादश । अनूयाजानित्यनु–याजान् । यजति । दश । वै । पशोः । प्राणा इति प्र–अनाः ।

मिवाभवत् भवति । एकेन पर्याप्तसृष्ट्यभावात् सर्वत आहृत्य सृष्टमिव भवतीति नूनमिदं मिश्रमभूदिति मन्यामह इत्यर्थः । पश्चादिति निपात्यते ॥

[7]एकादशेति ॥ व्याख्यातं प्रयाजेषु* । घ्नन्ति वा इत्यादि ।

*सं. ६-३-७,८

त्मैकादशो यावानेव पशुस्तमनु य-
जति घ्नन्ति वा एतत्पशुं यथ्संज्ञपयं-
न्ति प्राणापानौ खलु वा एतौ प-
शूनां यत्पृषदाज्यं यत्पृषदाज्येना-
नूयाजान् यजंति प्राणापानावेव
पशुषु दधाति ॥ ६२ ॥

आत्मा । एकादशः । यावान् । एव । पशुः । तम् । अन्विति । यजति । घ्नन्ति । वै । एतत् । पशुम् । यत् । संज्ञपयन्तीति सं—ज्ञपयन्ति । प्राणापानाविति प्राण—अपानौ । खलु । वै । एतौ । पशूनाम् । यत् । पृषदाज्यमिति पृषत्—आज्यम् । यत् । पृषदाज्येनेति पृषत्—आज्येन । अनूयाजानित्यनु—याजान् । यजंति । प्राणापानाविति प्राण—अपानौ । एव । पशुषु । दधाति ॥ ६२ ॥

घ्नन्ति यन्तं खलु चतुरुप ह्वयत आज्यं य-
त्पृषदाज्येन षट्च ॥ ११ ॥

---

व्याख्यातप्रायं समदर्शनेन* ॥

---

*सं ६-३-११.[2]

चात्वा॑लात्सुव॒र्गाय॑ य॒द्वैस॒र्जना॑नि वैष्ण॒व्य॑र्चा पृ॑थि॒व्यै सा॒ध्या इ॒षे त्वेत्य॒ग्निना॒ पर्य॑ग्नि प॒शोः प॒शुमा॒लभ्य॒ मेद॑सा स्रु॒चावेका॑दश ॥ ११ ॥

चात्वा॑लाद्दे॒वानु॒पैति॑ मुञ्चति प्रा॒ह्रि॒यमा॑णाय॒ पर्य॑ग्नि प॒शुमा॒लभ्य॒ चतु॑ष्पादो॒ हि प॒शवो॒ द्विष॑ष्टिः ॥ ६२ ॥

॥ हरिः ओं ॥

---

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये षष्ठकाण्डे तृतीयप्रश्ने एकादशोनुवाकः.

समाप्तश्च प्रपाठकः.



यज्ञेन वै प्रजापतिः प्रजा असृजत
ता उपयड्भिरेवासृजत यदुपयजं उप-
यजंति प्रजा एव तद्यजमानस्सृजते
जघनार्धादवं द्यति जघनार्धाद्धि प्र-

[1]यज्ञेन। वै। प्रजापतिरिति प्रजा–पतिः। प्रजा इति प्र–जाः। असृजत। ताः। उपयड्भिरित्युपयट्–भिः। एव। असृजत। यत्। उपयज इत्युप–यजः। उपयजतीत्युप–यजंति। प्रजा इति प्र–जाः। एव। तत्। यजमानः। सृजते। [2]जघनार्धादिति जघन–अर्धात्। अवेति। द्यति। जघनार्धादिति जघन–अर्धात्। हि। प्रजा इति प्र–

---

[1]यज्ञेन वा इत्यादि ॥ अनूयाजसमीपे इज्यन्ते इत्युपयजः गुदप्रच्छेदयागाः समुद्रादिदेवत्याः अनूयाजानां वषट्कृते वषट्कृते जुहोति। 'विजुपे छन्दसि' इति विच्। 'यदुपयज उपयजन्ति' इति उपयड्यागविधिः। 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च ॥

[2]जघनार्धादिति ॥ जघनस्थानात् गुदपार्श्वात्। कुत एतत्? 'योवद्यति गुदस्य'* इत्युत्तरत्र वक्ष्यमाणत्वात्। जघनाद्धीति। पूर्ववद्गतिनिघातसमासौ, 'हि च' इति तिङो निघाताभावः ॥

---

*सं. ६-४-१.7

जाः प्रजायन्ते स्थविमतोवं द्यति स्थ-
विमतो हि प्रजाः प्रजायन्तेऽसंभि-
न्दन्नवं द्यति प्राणानामसंभेदाय न
पर्यावर्तयति यत्पर्यावर्तयेदुदावर्तः प्र-

जाः । प्रजायन्त इति प्र—जायन्ते । [3]स्थविमतः ।
अवेति । द्यति । स्थविमतः । हि । प्रजा इति प्र—
जाः । प्रजायन्त इति प्र—जायन्ते । [4]असंम्भिन्द-
न्नित्यसं—भिन्दन्न् । अवेति । द्यति । प्राणानामि-
ति प्र—अनानाम् । असंम्भेदायेत्यसं—भेदाय । [5]न ।
पर्यावर्तयतीति परि—आवर्तयति । यत् । पर्यावर्त-
येदिति परि—आवर्तयेत् । उदावर्तः । प्रजा इति प्र—

[3]स्थविमत इति ॥ स्थूलतराज्जघनसमीपात् गुदात् पूर्ववत् भावेन भाववतो लक्षणात् । 'अपादाने चाहीयरुहोः' इति तसिः । स्थविमतो हीति । स्थूलतराज्जघनसमीपात् ॥

[4]असंभिन्दन्निति ॥ अमिश्रयन् । अपिवायन्नित्येके ॥

[5]न पर्यावर्तयतीति ॥ न पुनरावर्तयतीति । 'गतिर्गतौ' इति निघातस्समासश्च । यत्पर्यावर्तयेदिति । निघाते प्रतिषिद्धे गतिद्वयस्यानुदात्तत्वं समासश्च । उदावर्तो रोगविशेषः प्रजानां ग्राहकस्स्यात् । छान्दस उकञ् ॥

जा ग्राहुकस्स्यात्समुद्रं गच्छ स्वा-
हेत्याह रेतः ॥१॥ एव तद्दधात्यन्त-
रिक्षं गच्छ स्वाहेत्याहाऽन्तरिक्षेणैवा-
स्मै प्रजाः प्रजनयत्यन्तरिक्षꣳ ह्यनु
प्रजाः प्र जायन्ते देवꣳ सवितारं ग-
च्छ स्वाहेत्याह सवितृप्रसूत एवा-
स्मै प्रजाः प्र जनयत्यहोरात्रे गच्छ

जाः । ग्राहुकः । स्यात् । [6]समुद्रम् । गच्छ । स्वाहा । इति । आह । रेतः ॥१॥ एव । तत् । दधाति । अन्तरिक्षम् । गच्छ । स्वाहा । इति । आह । अन्तरिक्षेण । एव । अस्मै । प्रजा इति प्र—जाः । प्रेति । जनयति । अन्तरिक्षम् । हि । अन्विति । प्रजा इति प्र—जाः । प्रजायन्त इति प्र—जायन्ते । देवम् । सवितारम् । गच्छ । स्वाहा । इति । आह । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । अस्मै । प्रजा इति प्र—जाः । प्रेति । जनयति । अहोरात्रे इत्यहः—रात्रे ।

---

[6]समुद्रमित्यादयः उपयजां मन्त्राः ॥ रेत एवेति । आत्मन्युपचितं करोतीति । अन्तरिक्षेणेति हेतुना । कथमित्याह—अन्तरिक्षं अवकाशं हि अनुप्राप्य प्रजाः प्रजायन्ते । सवितृप्र-

स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्र-
जाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः
प्रजायन्ते मित्रावरुणौ गच्छ स्वा-
हा ॥ २ ॥ इत्याह प्रजास्वेव प्रजा-
तासु प्राणापानौ दधाति सोमं ग-
च्छ स्वाहेत्याह सौम्या हि देवतया
प्रजा यज्ञं गच्छ स्वाहेत्याह प्रजा

गच्छ । स्वाहा । इति । आह । अहोरात्राभ्यामि-
त्यहः-रात्राभ्याम् । एव । अस्मै । प्रजा इति प्र-
जाः । प्रेति । जनयति । अहोरात्रे इत्यहः-रात्रे ।
हि । अन्विति । प्रजा इति प्र-जाः । प्रजायन्त
इति प्र-जायन्ते । मित्रावरुणाविति मित्रा-वरु-
णौ । गच्छ । स्वाहा ॥ २ ॥ इति । आह । प्रजा-
स्विति प्र-जासु । एव । प्रजातास्विति प्र-जाता-
सु । प्राणापानाविति प्राण-अपानौ । दधाति ।
सोमम् । गच्छ । स्वाहा । इति । आह । सौम्याः ।
हि । देवतया । प्रजा इति प्र-जाः । यज्ञम् । ग-
च्छ । स्वाहा । इति । आह । प्रजा इति प्र-जाः ।

---

सूत इति । सवित्राऽनुज्ञात एव । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अहोरात्रे इति । लक्षणेऽनोः कर्मप्रव-

एव यज्ञियाः करोति छन्दाꣳसि ग-
च्छ स्वाहेत्याह पशवो वै छन्दाꣳ-
सि पशूनेवाव रुन्धे द्यावापृथिवी
गच्छ स्वाहेत्याह प्रजा एव प्रजाता
द्यावापृथिवीभ्यामुभयतः परि गृह्णा-
ति नभः ॥३॥ दिव्यं गच्छ स्वाहेत्या-
ह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं
नि यच्छत्यग्निं वैश्वानरं गच्छ स्वा-

एव । यज्ञियाः । करोति । छन्दाꣳसि । गच्छ । स्वाहा । इति । आह । पशवः । वै । छन्दाꣳसि । पशून् । एव । अवेति । रुन्धे । द्यावापृथिवी इति द्यावा-पृथिवी । गच्छ । स्वाहा । इति । आह । प्रजा इति प्र-जाः । एव । प्रजाता इति प्र-जाताः । द्यावापृथिवीभ्यामिति द्यावा-पृथिवीभ्याम् । उभयतः । परीति । गृह्णाति । नभः । ३ ॥ दिव्यम् । गच्छ । स्वाहा । इति । आह । प्रजाभ्य इति प्र-जाभ्यः । एव । प्रजाताभ्य इति प्र-जाताभ्यः । वृष्टिम् । नीति । यच्छति । अग्निम् । वैश्वानरम् । गच्छ । स्वाहा । इति । आह । प्रजा इति प्र-जाः । एव । प्रजा-

हेत्याह प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते पशोर्वा आलब्धस्य हृ-

ता इति प्र-जाताः । अस्याम् । प्रतीति । स्था-पयति । [7]प्राणानामिति प्र-अनानाम् । वै । एषः । अवेति । द्यति । यः । अवद्यतीत्यव-द्यति । गुदस्य । मनः । मे । हार्दि । यच्छ । इति । आह । प्राणानिति प्र-अनान् । एव । यथास्थानमिति यथा-स्थानम् । उपेति । ह्वयते । [8]पशोः । वै । आ-

चनीयत्वम् । प्राणापानाविति । प्राणापानात्मकत्वान्मित्रावरुणयोः । सौम्या इति । सोमाट्टचण् ॥

[7]प्राणानामित्यादि ॥ यो गुदस्यावद्यति प्राणानामेवायमवद्यति । 'यद्वृत्तात्' इति निघाते प्रतिषिद्धे 'ओतश्श्यनि' इति लोपे उदात्तनिवृत्तिस्वरेण श्यन एवोदात्तत्वम् । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, 'उदात्तवता तिङा' इति समासः । (बर्हिषि हस्तयोर्निर्माजनं—अङ्क्यस्त्वेत्यादि ।) यथास्थानमिति । गुदावदाने प्रच्युतात्स्वस्मिन्नेव स्थाने पुनरुपह्वयते आनीय स्थापयति ॥

[8]पशोर्वा इत्यादि ॥ गतम्* । अदप्स्वाति । हृदयशूलमुद्वा-

*सं. ६-३-९. 1

दयꣳ शुगृच्छति सा हृदयशूलम् ॥४
अभि समेति यत्पृथिव्याꣳ हृदयशू-
लमुद्वासयेत्पृथिवीꣳ शुचाऽर्पयेद्यद-
प्स्वपश्शुचाऽर्पयेच्छुष्कस्य चार्द्रस्य
च सन्धावुद्वासयत्युभयस्य शान्त्यै यं
द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति॥५॥

लब्धस्येत्या—लब्धस्य । हृदयम् । शुक् । ऋच्छति ।
सा । हृदयशूलमिति हृदय—शूलम् ॥ ४ ॥ अभि ।
समिति । एति । यत् । पृथिव्याम् । हृदयशूलमि-
ति हृदय—शूलम् । उद्वासयेदित्युत्—वासयेत् । पृ-
थिवीम् । शुचा । अर्पयेत् । यत् । अप्स्वित्यप्—
सु । अपः । शुचा । अर्पयेत् । शुष्कस्य । च ।
आर्द्रस्य । च । सन्धाविति सं—धौ । उदिति । वा-
सयति । उभयस्य । शान्त्यै । यम् । द्विष्यात् ।
तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति ॥ ५ ॥

रेतो मित्रावरुणौ गच्छ स्वाहा नभो हृद-
यशूलं द्वात्रिꣳशच्च ॥ १ ॥

सयेदित्येव । शुष्कस्य चेत्यादि । पृथिव्या अपां च सन्धौ हृदयशूलमुद्वासयति उदकसमीपे इत्यर्थः । उभयस्येति । पृथिव्या अपां च शान्त्यै सुखाय तद्भवति । यमित्यादि । गतम्* ॥

इति षष्ठे चतुर्थे प्रथमोनुवाकः.

*सं. २-६-४,९

देवा वै यज्ञमाग्नींध्रे व्यंभजन्त त-
तो यदत्यशिंष्यत तदंब्रुवन्वसंतु नु
नं इदमिति तद्वंसतीवरीणां वसती-
वरित्वं तस्मिंन्प्रातर्न समंशक्नुवन्त-

[1] देवाः । वै । यज्ञम् । आग्नींध्र इत्याग्नि-इध्रे ।
वीति । अभजन्त । ततः । यत् । अत्यशिंष्यतेत्यं-
ति-अशिंष्यत । तत् । अब्रुवन् । वसंतु । नु ।
नः । इदम् । इति । तत् । वसतीवरीणाम् । वस-
तीवरित्वमिति वसतीवरि-त्वम् । तस्मिन् । प्रातः ।
न । समिति । अशक्नुवन् । तत् । अप्स्वित्यप्-सु ।

---

[1] देवा वा इत्यादि ॥ देवा एव यज्ञमाग्नीध्रे व्यभजन्त विभज्य गृहीतवन्तः । ततो विभक्ताद्यदत्यशिष्यत विभक्तशेषं यदतिरिक्तमासीत् तदब्रुवन् देवाः । नन्विदमपि नोऽस्माकमेव सर्वेषां साधारणं वसतु । इदमपि श्वः प्रातर्विभक्तारस्स्म इति । तस्माद्वसतीवरीणामपां वसतीवरित्वम्, वसतीवरीरूपेण विभक्तशेषस्स्थित इति दर्शयति । वस्तद्वसति तद्वत्यो वसतीवर्यः साधारण्येन गृहीत्वा स्थिताः आपः । 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः, 'वनोरच' इति ङीब्रेफौ, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । 'कृदिकारादक्तिनः' इति ङीषन्तो वा वसतीशब्दः, व्यत्ययेन वनिप उदात्तत्वम् । वनिर्वा प्रत्ययान्तरम् । तस्मिन्विभक्तशेषे श्वः प्रातः न समशक्नुवन् संविभक्तुं शक्ता नासन् ।

द॒प्सु प्रावे॑शय॒न्ता वं॑सती॒वरी॑रभव॒-
न्वसती॒वरी॑र्गृह्णाति य॒ज्ञो वै वं॑सती॒-
वरी॑र्य॒ज्ञमे॒वारभ्य॑ गृही॒त्वोपं॑ वसति॒
यस्या॑गृहीता अ॒भि नि॒म्रोचे॒दना॑रब्धो-
स्य य॒ज्ञस्स्या॑त् ॥६॥ य॒ज्ञं विच्छिं-

प्रेति॑ । अ॒वे॒श॒य॒न् । ताः । व॒स॒ती॒वरीः॑ । अ॒भ॒व॒न् ।
[2]व॒स॒ती॒वरीः॑ । गृ॒ह्णा॒ति॒ । य॒ज्ञः । वै । व॒स॒ती॒वरीः॑ ।
य॒ज्ञम् । ए॒व । आ॒रभ्येत्या॑—रभ्यं॑ । गृ॒ही॒त्वा । उ-
पेति॑ । व॒स॒ति॒ । यस्यं॑ । अगृ॑हीताः । अ॒भीति॑ ।
नि॒म्रोचे॒दिति॑ नि—म्रोचे॑त् । अना॑रब्ध॒ इत्यना॑—र॒-
ब्ध॒ः । अ॒स्य॒ । य॒ज्ञः । स्या॒त् ॥ ६ ॥ य॒ज्ञम् । वी-

---

तदविभागयोग्यं मन्यमानाः देवाः अप्सु प्रावेशयन् क्वाप्युपयो क्ष्यते इति अप्सु निहितवन्तः । यद्वा—किमनेनेत्यप्सु प्राक्षिपन् ता वसतीवर्यो नामाभवन् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥

[2]वसतीवरीर्गृह्णातीति विधिः ॥ यज्ञो वा इति । यज्ञशेषस्य तद्रूपेण विततत्वात् । तस्माद्वसतीवरीर्गृहीत्वा य उपवसति यज्ञमेवारभ्य प्रस्तुत्य वसति । यद्वा—यज्ञं गृहीत्वा धारयित्वैव यज्ञमुपवसति । अग्निसमीपे वास उपवासः । यस्येत्यादि । अगृहीता वसतीवरीरभिलक्ष्य निम्रोचेत् अस्तमियात् सूर्यो यस्य

न्द्याज्ज्योतिष्यां वा गृह्णीयाद्धिरण्यं
वाऽवधाय सशुक्राणामेव गृह्णाति
यो वा ब्राह्मणो बहुयाजी तस्य कु-
म्भ्यानां गृह्णीयात्स हि गृहीतवस-

ति । छिन्द्यात् । ज्योतिष्याम् । वा । गृह्णीयात् ।
हिरण्यम् । वा । अवधायेत्यव-धाय । सशुक्राणा-
मिति स-शुक्राणाम् । एव । गृह्णाति । [3]यः । वा ।
ब्राह्मणः । बहुयाजीति बहु-याजी । तस्य । कु-
म्भ्यानाम् । गृह्णीयात् । सः । हि । गृहीतवसतीव-

---

यज्ञोनारब्धः स्यात् अप्रस्तुत एव भवेत् पूर्वेद्युः । ततः श्वः उत्त-रेद्युः यज्ञं विच्छिन्द्यात् । ज्योतिष्या वा इत्यादि । उल्कया द्योतयित्वा ज्योतिष्मतीर्गृह्णीयात् । मत्वर्थीयो यत्, 'तत्र साधुः' इति वा । केचिदाहुः—'उपयाम'* इत्यनया ऋचा गृह्णीया-दिति । तत्र ज्योतिष्मत्या ऋचा ग्राह्याः ज्योतिष्याः । हिरण्यं वा कुम्भेऽवधाय गृह्णीयात् । एवमुभयस्मिन्नपि पक्षे सशुक्राणामेव सादित्यानामेव गृहीता भवन्ति ॥

[3]यो वेति ॥ बहुयाजी सोमयाजी तस्य कुम्भ्याः तदीयगृ-हकुम्भस्थिताः । तस्य गृहीतवसतीवरीकत्वात् तत्संबन्धिन्यस्सर्वा अप्यापो वसतीवरीतुल्या भवन्तीति ॥

---

*सं. १-४-३.1

तीवरीको वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवारभ्य गृहीत्वोप वसति यदन्वीपं तिष्ठन्गृह्णीयान्निर्मार्गुका अस्मात्पशवस्स्युः प्रतीपं तिष्ठन्गृह्णाति प्रतिरुध्यैवास्मै

रीक इति गृहीत–वसतीवरीकः । [4]वसतीवरीः । गृह्णाति । पशवः । वै । वसतीवरीः । पशून् । एव । आरभ्येत्या–रभ्य । गृहीत्वा । उपेति । वसति । यत् । अन्वीपम् । तिष्ठन् । गृह्णीयात् । निर्मार्गुका इति निः–मार्गुकाः । अस्मात् । पशवः । स्युः । प्रतीपम् । तिष्ठन् । गृह्णाति । प्रतिरुध्येति प्रति–रुध्य ।

---

[4]वसतीवरीरिति ॥ द्वितीयं विदधाति गुणान्तरमभिधास्यामीति । पशवो वा इति । तद्धेतुत्वात्ताच्छब्द्यम् । यदन्वीपमिति अन्वीपमनुगतस्रोतस्कं तिष्ठन् यत् गृह्णीयात् । यद्वा—अन्वीपं गृह्णीयात् कुम्भेन वा आत्मना वा अनुस्रोतसमवस्थितेन । अनुगता आपोनेनेति 'ऋक्पूः' इति समासान्तः, 'द्व्यन्तरुपसर्गेभ्योप ईत्' । निर्मार्गुकाः विनाशनशीलाः पशवोस्मात्स्युः । मार्ग अन्वेषणे, छान्दस उकञ् । यद्वा—निर्गमनशीलाः, गमेः 'लषपत' इत्यादिना उकञ्, वर्णव्यत्ययो रेफोपजनश्च । प्रतीपमिति । प्रतिस्रोतसं तिष्ठन् तादृशेन कुम्भेन गृह्णीयात् । पूर्ववदीत्वम् । प्रतिरुध्येत्यादि । गतम् ॥

पशून्गृह्णातीन्द्रः ॥७॥ वृत्रमहन्त्सो-
ऽपो॒ऽभ्यम्रियत तासां यन्मेध्यं य-
ज्ञियꣳ सदेवमासीत्तदत्यमुच्यत ता
वहन्तीरभवन्वहन्तीनां गृह्णाति या
एव मेध्या यज्ञियास्सदेवा आपस्ता-

एव । अस्मै । पशून् । गृह्णाति । [5]इन्द्रः ॥ ७ ॥
वृत्रम् । अहन् । सः । अपः । अभीति । अम्रिय-
त । तासाम् । यत् । मेध्यम् । यज्ञियम् । सदेव-
मिति स–देवम् । आसीत् । तत् । अतीति । अमु-
च्यत । ताः । वहन्तीः । अभवन् । वहन्तीनाम् ।
गृह्णाति । याः । एव । मेध्याः । यज्ञियाः । सदेवा
इति स–देवाः । आपः । तासाम् । एव । गृह्णाति ।

---

[5]इन्द्र इत्यादि ॥ व्याख्यातम्* । तासामित्यादि । तासामपां संबन्धि यन्मेध्यादिलक्षणं रूपं तदत्यमुच्यत अतीत्यापो बहिस्स्वयमेवामुच्यत वेगेन मुक्तमभवत् । कर्मकर्तर्यात्मनेपदम् । ता वहन्तीरिति । ततः प्रभृत्यापो वहन्त्योभवन् । तस्माद्वहन्तीनामेव गृह्णाति । मेध्यादिलक्षणा एव गृहीता भवन्ति । नान्तमा इत्यादि । अन्तमा अन्तिकतमा आपो वहन्तीरतीयात् अतिक्रम्य नेयात् । 'तमे तादेश्च' इति तादिलोपः । यदि ता अतीयात् यज्ञमेवा-

---

*सं. ६-१-१. [17]

सामेव गृह्णाति नान्तमा वहन्तीरतीयाद्यदन्तमा वहन्तीरतीयाद्यज्ञमाति मन्येत न स्थावराणां गृह्णीयाद्वरुणगृहीता वै स्थावरा यत्स्थावराणां गृह्णीयात् ॥ ८ ॥ वरुणेनास्य यज्ञं ग्राहयेद्यद्वै दिवा भवत्यपो रात्रिः

न । अन्तमाः । वहन्तीः । अतीति । इयात् । यत् । अन्तमाः । वहन्तीः । अतीयादित्यति–इयात् । यज्ञम् । अतीति । मन्येत । न । स्थावराणाम् । गृह्णीयात् । वरुणगृहीता इति वरुण–गृहीताः । वै । स्थावराः । यत् । स्थावराणाम् । गृह्णीयात् ॥८॥ वरुणेन । अस्य । यज्ञम् । ग्राहयेत् । [6]यत् । वै । दिवा । भवति । अपः । रात्रिः । प्रेति । विशति ।

---

तिमन्येत, वहन्तीनां मेध्यादिरूपवत्त्वात् । स्थावराः स्थानशीलाः ग्राह्याः तटाकादिस्थाः सरित्स्वपि । 'स्थेशभास' इति वरच् । वरुणगृहीता इति । वरुणेन गृहीता इति निरूढत्वात् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यदित्यादि । गतम् ॥

[6]यद्वा इत्यादि ॥ यदा दिवसः प्रवर्तते तदा रात्रिरपः प्रविशति, तस्माद्दिवा आपस्ताम्रा ईषद्रक्ताः दृश्यन्ते शुक्लकृष्णप्रभवत्वात्ताम्रस्य । कर्मणि छान्दसो लिट्, 'इरयोरे' इति रे आ-

प्र विंशति तस्मांत्ताम्रा आपो दि-
वां ददृश्रे यन्नक्तं भवंत्यपोहः प्र वि-
शति तस्मांच्चन्द्रा आपो नक्तं ददृ-
श्रे छायायैं चातपंतश्च सन्धौ गृंह्णा-
त्यहोरात्रयोरेवास्मै वर्णं गृह्णाति ह-
विष्मंतीरिमा आप इत्याह हविष्कृं-

तस्मांत् । ताम्राः । आपंः । दिवां । ददृश्रे । यत् ।
नक्तंम् । भवंति । अपः । अहंः । प्रेतिं । विशति ।
तस्मांत् । चन्द्राः । आपंः । नक्तंम् । ददृश्रे । छा-
यायैं । च । आतपंत इत्यां—तपंतः । च । सन्धा-
वितिं सं—धौ । गृह्णाति । अहोरात्रयोरित्यंहः—रा-
त्रयोंः । एव । अस्मै । वर्णम् । गृह्णाति । [7]हविष्मं-
तीः । इमाः । आपंः । इतिं । आह । हविष्कृंता-

देशः । नक्तमह्नः प्रवेशात् चन्द्राश्शुक्ला आपो दृश्यन्ते । तस्माच्छाया-तपसन्धौ ग्रहणात् अहोरात्रयोरेव वर्णग्रहणात् उभयानुग्रहलाभः ॥

[7]'हविष्मतीः'* इति ग्रहणमन्त्रः ॥ हविष्कृतानामिति । कृतं हविस्स्वरूपं हविष्ट्वं यासामिति । बहुव्रीहौ निष्ठायाः पूर्वनिपाते 'जातिकालसुखादिभ्यः परवचनम्' इति परनिपातः । यद्वा—हविष्ट्वेन संस्कृताः हविष्कृताः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।

*सं.१-३-१२.1

तानामेव गृह्णाति हविष्मा॑ँ अस्तु ॥ १ ॥ सूर्य इत्या॑ह सशुक्राणामेव गृह्णात्यनुष्टुभा॑ गृह्णाति वाग्वा अ॑नुष्टु-ग्वाचैवैनास्सर्वया गृह्णाति चतुष्प-दयर्चा गृह्णाति त्रिस्सा॑दयति सप्त सं प॑द्यन्ते सप्तपदा शक्व॑री पशव-

नामिति हविः—कृतानाम् । एव । गृह्णाति । हविष्मान् । अस्तु ॥ १ ॥ सूर्यः । इति । आह । सशुक्राणामि-ति स—शुक्राणाम् । एव । गृह्णाति । अनुष्टुभेत्यनु—स्तुभा । गृह्णाति । वाक् । वै । अनुष्टुगित्यनु—स्तुक् । वाचा । एव । एनाः । सर्वया । गृह्णाति । चतुष्प-दयेति चतुः—पदया । ऋचा । गृह्णाति । [8]त्रिः । सादयति । सप्त । समिति । पद्यन्ते । सप्तपदेति सप्त—

सशुक्राणामित्यादि । सज्योतिषां सादित्यानाम् । अनुष्टुभेति । 'हविष्मतीः'* इत्यनया । छन्दस्तुतिरियं, सर्वस्य वाङ्मयस्यानुष्टुभत्वात् तेनैव गृहीता भवन्ति । चतुष्पदयेति । 'संख्यासुपूर्वस्य' इति लोपस्समासान्तः, 'टाबृचि' इति टाप्, 'पादः पत्' इति पद्भावः ॥

[8]त्रिरिति ॥ उभयोरुपसादयतीति विधास्यति । तत्राहवनीय-मभितो द्विस्सादयति । सकृज्जघनेन गार्हपत्यम् । सप्तेत्यादि ।

*सं. १-३-१२.

इशाक्करी पशूनेवाव रुन्धेऽस्मै वै लो-
काय गार्हपत्य आ धीयतेऽमुष्मा
आहवनीयो यद्गार्हपत्य उपसादये-
दस्मिन्लोके पशुमान्थ्स्याद्यदाहवनी-
येऽमुष्मिन्न् ॥ १० ॥ लोके पशु-
मान्थ्स्यादुभयोरुप सादयत्युभयो रे-
वैनं लोकयोः पशुमन्तं करोति

पदा । शक्करी । पशवः । शक्करी । पशून् । एव । अ-
वेति । रुन्धे । अस्मै । वै । लोकाय । गार्हपत्य
इति गार्ह-पत्यः । एति । धीयते । अमुष्मै ।
आहवनीय इत्या-हवनीयः । यत् । गार्हपत्य इति
गार्ह-पत्ये । उपसादयेदित्युप-सादयेत् । अस्मिन्न् ।
लोके । पशुमानिति पशु-मान् । स्यात् । यत् ।
आहवनीय इत्या-हवनीये । अमुष्मिन्न् ॥ १० ॥
लोके । पशुमानिति पशु-मान् । स्यात् । उभ-
योः । उपेति । सादयति । उभयोः । एव । एनम् ।
लोकयोः । पशुमन्तमिति पशु-मन्तम् । करोति ।

---

गतम्* । पशुहेतुत्वात्ताच्छब्द्यं शक्कर्याः अस्मा इत्यादि । गतम्* । गार्ह-
पत्य इति । औपश्लेषिके अधिकरणे सप्तमी । उभयोरित्यादि । गतम्* ॥

---

*सं. ६-१-८. 2, 11

सर्वतः परि हरति रक्षसामपहत्या
इन्द्राग्नियोर्भागधेयीस्स्थेत्याह यथा-
यजुरेवैतदाग्नीध्र उप वासयत्येतद्वै
यज्ञस्यापराजितं यदाग्नीध्रं यदेव
यज्ञस्यापराजितं तदेवैना उप वा-

[9]सर्वतः । परीति । हरति । रक्षसाम् । अपहत्या इत्यप-हत्यै । इन्द्राग्नियोरितीन्द्र-अग्नियोः । भागधेयीरिति भाग-धेयीः । स्थ । इति । आह । यथायजुरिति यथा-यजुः । एव । एतत् । [10]आग्नीध्र इत्याग्नि-इध्रे । उपेति । वासयति । एतत् । वै । यज्ञस्य । अपराजितमित्यपरा-जितम् । यत् । आग्नीध्रमित्याग्नि-इध्रम् । यत् । एव । यज्ञस्य । अपराजितमित्यपरा-जितम् । तत् । एव । एनाः ।

---

[9]सर्वत इति ॥ 'इन्द्राग्नियोः'* इत्यादीनि मन्त्रपदानि व्याख्याय यथा यजुर्वदति 'जागृत'* इति तथा भवत्येव जाग्रत्येव ॥

[10]यज्ञार्थमाप उपवासयति आग्नीध्रमुपेत्य रात्रिं वासयति वसतीवरीः । अपराजितमिति । रक्षःप्रभृतिभिरनभिभूतं स्थानम्, अग्नीधश्शरणम् । 'अग्नीधश्शरणे रण्' । तदेवेति । तत्स्थानमुपेत्य एना वसतीवरीर्वासयति ॥

---

*सं १-३-१२,[3,6]

सयति यतः खलु वै यज्ञस्य वि-
तंतस्य न क्रियते तदनु यज्ञꣳ र-
क्षाꣳस्यवं चरन्ति यद्वहंन्तीनां गृ-
ह्णातिं क्रियमांणमेव तद्यज्ञस्यं शये
रक्षंसामनंन्ववचाराय न ह्येता ई-

उपेतिं । वासयाति । [11]यतंः । खलुं । वै । यज्ञस्यं ।
वितंतस्येति वि-ततस्य । न । क्रियतें । तत् । अ-
न्वितिं । यज्ञम् । रक्षाꣳसि । अवेतिं । चरन्ति ।
यत् ।वहंन्तीनाम् । गृह्णातिं । क्रियमांणम् । एव ।
तत् । यज्ञस्यं । शये । रक्षंसाम् । अनंन्व चाराये-
त्यनंनु-अवचाराय । न । हि । एताः । ईलयंन्ति ।

---

[11]यतः खल्वित्यादि ॥ यज्ञस्य वितायमानस्य संबन्धि कर्म यतः यतः प्रभृति न क्रियते तदनु तदेव लक्षीकृत्य हेतुं वा कृत्वा रक्षांसि यज्ञं तस्मिंस्तस्मिन् छिद्रे अवचरन्ति अवकुर्वन्ति, तस्माद्वहन्तीनां गृह्णाति । तत्कर्म क्रियमाणमेव शये शेते लुप्तं न भवति । 'लोपस्त आत्मनेपदेषु' इति तलोपः । वहन्ती-ग्रहणं स्वयंयज्ञत्वात् वहन्तीनाम् । यथोक्तं 'वहन्तीनां गृह्णाति या एव मेध्या यज्ञियास्सदेवा आपः'* इति । तस्माच्छिद्राभा-वाद्रक्षसामनन्वचाराय भवति । न ह्येता ईलयन्ति गच्छन्ति

---

*सं. ६-४-२.5

लयन्त्या तृतीयसवनात्परि शेरे यज्ञस्य सन्तत्यै ॥ ११ ॥
ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युस्स्याद्यस्सोममुपावहरन्थ्सर्वाभ्यो

एति । तृतीयसवनादिति तृतीय–सवनात् । परीति । शेरे । यज्ञस्य । सन्तत्या इति सं–तत्यै ॥ ११ ॥

स्यादिन्द्रो गृह्णीयादस्त्वमुष्मिन्क्रियते षड्विꣳशतिश्च ॥ २ ॥

[1]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । सः । तु । वै । अध्वर्युः । स्यात् । यः । सोमम् । उपावहरन्नित्युप–अवहरन् । सर्वाभ्यः । देवताभ्यः ।

---

आतृतीयसवनात् परिशेरे परिशेरते अविचलिता अवतिष्ठन्ते । पूर्ववत्तलोपः, 'अतो गुणे' पररूपत्वम् । तत् यज्ञस्याविच्छेदाय अविच्छेदेव चन्द्रो [च्छेदेन चलना] भावः ॥

इति षष्ठे चतुर्थे द्वितीयोनुवाकः.

---

[1]ब्रह्मवादिन इत्यादि ॥ स एवाध्वर्युर्भवितुमर्हति । तोरन्त्यलोपश्छान्दसः । यः सोमं हविर्धानादुपावहरन् अवतारयन् सर्वाभ्यो

देवताभ्य उपावहरेदिति हृदे त्वेत्या-
ह मनुष्येभ्य एवैतेनं करोति मनं-
से त्वेत्याह पितृभ्यं एवैतेनं करोति
दिवे त्वा सूर्याय त्वेत्याह देवेभ्यं ए-
वैतेनं करोत्येतावतीर्वै देवतास्ताभ्यं
एवैनꣳ सर्वाभ्य उपावं हरति पुरा

उपावहरेदित्युप—अवहरेत् । इति । हृदे । त्वा । इति । आह । मनुष्येभ्यः । एव । एतेनं । करोति । मनंसे । त्वा । इति । आह । पितृभ्य इति पितृ—भ्यः । एव । एतेनं । करोति । दिवे । त्वा । सूर्याय । त्वा । इति । आह । देवेभ्यः । एव । एतेनं । करोति । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । उपावंहरतीत्यु-प—अवंहरति । [2]पुरा । वाचः ॥ १२ ॥ प्रवंदितो-

---

देवताभ्यः सर्वदेवतार्थं उपावहरेत् उपावहरणं जानातीति । मनुष्येभ्य इत्यादि । हृदयमात्रवन्तो मनुष्या विशिष्टं मननं मनः तद्वन्तः पितरः द्युलोकवासिनो देवाः सूर्यमण्डलवर्तिनश्च । एतावत्य एव देवता भवन्ति, तस्मादनेन मन्त्रेणोपावहरणं सर्वदेवतार्थमिति ॥

[2]पुरा वाच इत्यादि ॥ पक्ष्यादीनां वाग्वदनारम्भात्प्राक् प्रातरनुवाकमुपाकरोति 'प्रातर्यावभ्यः' इत्यादिकं संप्रैषमाह । यावती काचि-

वाचः ॥ १२ ॥ प्रवंदितोः प्रातरनुवा-
कमुपाकंरोति यावंत्येव वाक्तामवं रु-
न्धेऽपोग्रेऽभि व्याहंरति यज्ञो वा आ-
पो यज्ञमेवाभि वाचं वि सृंजति स-
र्वाणि छन्दाꣳस्यन्वांह पशवो वै छ-
न्दाꣳसि पशूनेवावं रुन्धे गायत्रिया
तेजंस्कामस्य परिं दध्यात्त्रिष्टुभेन्द्रि-

रिति प्र—वदितोः । प्रातरनुवाकमितिं प्रातः—अनु-
वाकम् । उपाकंरोतीत्युंप—आकंरोति । यावंती ।
एव । वाक् । ताम् । अवेतिं । रुन्धे । [3]अपः ।
अग्रे । अभिव्याहंरतीत्यंभि—व्याहंरति । यज्ञः ।
वै । आपंः । यज्ञम् । एव । अभीतिं । वाचंम् ।
वीतिं । सृजति । [4]सर्वाणि । छन्दाꣳसि । अन्वितिं ।
आह । पशवंः । वै । छन्दाꣳसि । पशून् । एव ।
अवेतिं । रुन्धे । गायत्रिया । तेजंस्कामस्येति ते-
जंः—कामस्य । परीतिं । दध्यात् । त्रिष्टुभा । इ-

---

त्सर्वा वाक्, तां अप्रोदितां प्रथममन्यैरनुक्तामेव स्वयमवरुन्धे ॥

[3]अपोग्रे इति ॥ आरम्भे अपोभिव्याहरति आपो देवीरिति । तेन यज्ञान्विता अपोभिलक्ष्य वाचं विसृजति वाग्विसृष्टा भवति ॥

[4]सर्वाणीत्यादि ॥ प्रातरनुवाके प्रेषणानन्तरं ब्रूयात् । परिदध्यात्

यकामस्य जगत्या पशुकामस्यानु-
ष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञका-
मस्य विराजाऽन्नकामस्य शृणोत्व-
ग्निस्समिधा हवम् ॥ १३ ॥ म इ-
त्याह सवितृप्रसूत एव देवताभ्यो

न्द्रियकामस्येतीन्द्रिय-कामस्य। जगत्या। पशुका-
मस्येति पशु-कामस्य । अनुष्टुभेत्यनु-स्तुभा ।
प्रतिष्ठाकामस्येति प्रतिष्ठा-कामस्य । पङ्क्त्या । य-
ज्ञकामस्येति यज्ञ-कामस्य । विराजेति वि-रा-
जा । अन्नकामस्येत्यन्न-कामस्य । [5]शृणोतु । अ-
ग्निः। समिधेति सं-इधा। हवम्॥ १३ ॥ मे। इति।
आह । सवितृप्रसूत इति सवितृ-प्रसूतः । एव ।

समापयेत् । गतमन्यत्* ॥

[5]यत्राभिजानात्यभूदुषारुशत्पशुरिति तत्प्रचरण्या जुहोति—
शृणोत्वग्निरिति ॥ सवितृप्रसूत इति । सवित्राऽनुज्ञात एव
देवताभ्यो निवेद्य विज्ञाप्य अपोच्छैति अपोभिप्राप्तुं गच्छति ।
एकधनादिलक्षणाः अप इष्य होतरित्यादिस्संप्रैषः । इषितमि-

*सं. ६-२-१०.[13—17]

निवेद्यापोऽच्छैत्यप इंष्य होतरित्याँ-
हेषितꣳ हि कर्म क्रियते मैत्रावरुण-
स्य चमसाध्वर्यवा द्रवेत्याँह मित्रा-
वरुँणौ वा अपां नेतारौ ताभ्यांमेवै-
ना अच्छैति देवीरापो अपां नपा-
दित्याहाहुँत्यैवैना निष्क्रीयं गृह्णात्य-

देवताभ्यः । निवेद्येति नि-वेद्य । अपः । अच्छ ।
एति । अपः । इष्य । होतः । इति । आह । इषि-
तम् । हि । कर्म । क्रियते । मैत्रावरुणस्येति मै-
त्रा-वरुणस्य । चमसाध्वर्यविति चमस-अध्वर्यो ।
एति । द्रव । इति । आह । मित्रावरुणाविति मि-
त्रा-वरुणौ । वै । अपाम् । नेतारौ । ताभ्याम् ।
एव । एनाः । अच्छ । एति । [6]देवीः । आपः ।
अपाम् । नपात् । इति । आह । आहुत्येत्या-हु-
त्या । एव । एनाः । निष्क्रीयेति निः-क्रीय । गृ-

---

त्यादि । हे होतः अपः कर्म अपामानयनलक्षणं इष्य इच्छेति यस्मादाह तस्मादिषितं हि कर्म क्रियते । मैत्रावरुणस्येत्यादि । मित्रावरुणयोः अपां वृष्टेः नेतृत्वात् एवमुच्यते । ताभ्यां सह अपोच्छैति॥

[6]देवीराप इत्यप्सु तृणमन्तर्धाय जुहोति आहुतिप्रदानेन एना

थो हविष्कृतानामेवाभिघृतानां गृ-
ह्णाति ॥ १४ ॥ कार्षिरसीत्याह
शमलमेवासामप प्लावयति समुद्र-
स्य वोक्षित्या उन्नय इत्याह तस्मा-
दद्यमानाः पीयमाना आपो न क्षी-

ह्णाति । अथो इति । हविष्कृतानामिति हविः—कृ-
तानाम् । एव । अभिघृतानामित्यभि—घृतानाम् ।
गृह्णाति ॥ १४ ॥ [7]कार्षिः । असि । इति । आह ।
शमलम् । एव । आसाम् । अपेति । प्लावयति ।
समुद्रस्य । वः । अक्षित्यै । उदिति । नये ।
इति । आह । तस्मात् । अद्यमानाः । पीयमा-

---

अपो निष्क्रीय आत्मसात्कृत्य गृह्णाति । अथो हविष्कृतानां हवि-
ष्ट्वमापादितानां अभिघारणस्थानीयोयं होम इत्यर्थः । हविष्ट्वा-
पादनेन संस्कृता हविष्कृताः । 'तृतीया कर्मणि' इति पूर्वपद-
प्रकृतिस्वरत्वम् ॥

[7]कार्षिरसीति दर्भैराहुतिमपप्लावयति ॥ शमलं मलांशमपप्लावयति
अपनयति । 'समुद्रस्य वोक्षित्या उन्नये'* इति अभिहुतानां मैत्रा-
वरुणचमसेन गृह्णाति । तस्मादद्यमाना इत्यादि । क्षुन्निवृत्त्यर्थ-
मद्यमानाः पिपासानिवृत्त्यर्थं पीयमानाः ॥

---

*तै. सं. १-३-१३.[6]

यन्ते योनिर्वै यज्ञस्य चात्वालं यज्ञो वसतीवरीर् होतृचमसं च मैत्रावरुणचमसं च स॒ꣳस्पर्श्यं वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादेवैना योनेः प्र जनयत्यध्वर्योवेरपा३ इत्याहोतेमंनन्ना

नाः । आपः । न । क्षीयन्ते । [8]योनिः । वै । यज्ञस्य । चात्वालम् । यज्ञः । वसतीवरीः । होतृचमसमिति होतृ–चमसम् । च । मैत्रावरुणचमसमिति मैत्रावरुण–चमसम् । च । सꣳस्पर्श्येति सं–स्पर्श्य । वसतीवरीः । व्यानयतीति वि–आनयति । यज्ञस्य । सयोनित्वायेति सयोनि–त्वाय । अथो इति । स्वात् । एव । एनाः । योनेः । प्रेति । जनयति । अध्वर्यो इति । अवेः । अपा३ः । इति । आह । उत । ईम् । अनन्नमुः । उत । इमाः ।

---

[8]योनिर्वा इत्यादि ॥ ततः पुरीषमादाय धिष्ण्योपवपनात् योनित्वम् । प्रसाधनसाधनत्वाद्यज्ञो हि स्वयं वसतीवर्यः । उपरि चात्वाले चमसौ परस्परं संस्पर्शयित्वा तत्र वसतीवरीर्व्यानयति परस्परमानयति यज्ञस्य सयोनित्वाय स्वयोनाविव यज्ञस्स्थापितो यथा स्यात् । अपि च स्वादेव योनेः एता यज्ञात्मिकाः प्रजनयति उत्पादयति ॥

[9]अध्वर्योवेरपा इति होताऽध्वर्युं पृच्छति ॥ हे अध्वर्यो कि-

मुरुतेमाः पश्येति वावैतदाह यद्य-
ग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ
नि मार्ष्टि यद्यतिरात्रो यजुर्वदन्प्र पं-

पश्य । इति । वाव । एतत् । आह । [10]यदि । अ-
ग्निष्टोम इत्यग्नि-स्तोमः । जुहोति । यदि । उ-
क्थ्यः । परिधाविति परि-धौ । नीति । मार्ष्टि ।
यदि । अतिरात्र इत्यति-रात्रः । यजुः । वदन् ।

---

मपः अवेः लब्धवानसि । विद्लृ लाभे, लुङि सिज्लुकि 'दश्च' इति रुत्वम् । प्रश्ने वाक्यस्य टेः प्लुतः । अत्र यत्प्रतिवचनं 'उतेमनन्नमुः' इति तस्याभिप्रायमाह—उतेमा इत्यादि । अत्र लाभप्रश्ने लब्धवानस्म्यहमिति प्रतिवक्तव्ये उतेमनन्नमुरिति यदुक्तं तस्यायमभिप्रायः—तथा हि न केवलमिमा लब्धवानस्म्यहं उत अपि तु अनन्नमुः इमाः अत्यर्थं मामुपसंप्राप्ताः दर्शयितुमपि शक्यन्ते । द्रष्टुम शक्यमपि हि आत्मसात्कृतलब्धमुच्यते । इमास्त्वापो न तथा, उपनता एवेमाः; तत्किमुच्यते लब्धवानस्मीति; अपित्विमाः पश्येति एतदर्थरूपमाहायं मन्त्र इति ॥

[10]प्रचरणीयशेषात्क्रतुकरणं जुहोति—'यमग्ने पृत्सु मर्त्यम्'* इति ॥ यद्ययमग्निष्टोमः, अथवा यद्युक्थ्यः परिधौ निर्मार्ष्ट्यनेन मन्त्रेण । अथ यद्यतिरात्रः एतं मन्त्रं वदन् प्रपद्यते हविर्धानम् । यज्ञ-

---

*सं. १-३-१३.7

घते यज्ञक्रतूनां व्यावृत्त्यै ॥ १५ ॥
देवस्य त्वा सवितुः प्रसव इति
ग्रावाणमा दत्ते प्रसूत्या अश्विनो-
र्बाहुभ्यामित्याहाश्विनौ हि देवानां-

प्रति । घते । यज्ञक्रतूनामिति यज्ञ—क्रतूनाम् । व्यावृत्त्या इति वि—आवृत्त्यै ॥ १५ ॥

वाचो हवमभिघृतानां गृह्णात्युत
पञ्चविंशतिश्च ॥ ३ ॥

[1] देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । इति । ग्रावाणम् । एति । दत्ते । प्रसूत्या इति प्र—सूत्यै । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । इति । आह । अश्विनौ । हि । देवानाम् ।

क्रतवः यूपवन्तो यागाः । तेषां व्यावृत्त्यै विभागार्थमेवं कुर्यादिति ॥

इति षष्ठे चतुर्थे तृतीयोनुवाकः.

---

[1] देवस्य त्वेत्यादि ॥ ग्रावाणमुपांशुसवनम् । गतमन्यत्* । पशवो वा इत्यादि । तद्धेतुत्वात्ताच्छब्द्यम् । व्यान उपांशु-

*सं. ६-३-६.5

मध्वर्यू आस्तां पूष्णो हस्ताभ्यामि-
त्याह यत्यै पशवो वै सोमो व्यान
उपाꣳशुसवनो यदुपाꣳशुसवनमभि
मिमीते व्यानमेव पशुषु दधाती-
न्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्रा-
य हि सोम आह्रियते पञ्च कृत्वो

अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति ।
आह । यत्यै । पशवः । वै । सोमः । व्यान इति वि–
अनः । उपाꣳशुसवन इत्युपाꣳशु–सवनः । यत् ।
उपाꣳशुसवनमित्युपाꣳशु–सवनम् । अभीति ।
मिमीते । व्यानमिति वि–अनम् । एव । पशुषु ।
दधाति ।[2]इन्द्राय । त्वा । इन्द्राय । त्वा । इति । मिमीते ।
इन्द्राय । हि । सोमः । आह्रियत इत्या–ह्रियते । पञ्च ।

---

सवनो ग्रावा, यथोक्तं—'प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ व्यान उपांशुसवनः'* इति । तस्माद्यदुपांशुसवनमभिलक्ष्य तस्योपरि मिमीते व्यानं पशुषु स्थापयति ॥

[2]इन्द्राय त्वेन्द्रायत्वेत्यादि ॥ 'इन्द्राय त्वा वृत्रघ्ने,'† 'इन्द्राय त्वा वृत्रतुरे'† इत्यादीनां मन्त्राणां प्रतीकप्रदर्शनार्थमिदम् । इन्द्राय

---

*सं.६-४-६. †सं. १-४-१.3—4

यजुंषा मिमीते ॥ १६ ॥ पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावं रुन्धे पञ्च कृत्वंस्तूष्णीं दश सं पंद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवं रुन्धे श्वात्रास्स्थं वृत्रतुर इत्याहैष वा अपाꣳ सोमपीथो य एवं

कृत्वंः । यजुंषा । मिमीते ॥ १६ ॥ पञ्चाक्षरेति पञ्चं–अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । पञ्चं । कृत्वंः । तूष्णीम् । दशं । समितिं । पद्यन्ते । दशाक्षरेति दशं–अक्षरा । विराडितिं वि–राट् । अन्नंम् । विराडितिं वि–राट् । विराजेतिं वि–राजां । एव । अन्नाद्यमित्यंन्न–अद्यंम् । अवेतिं । रुन्धे । [3]श्वात्राः । स्थ । वृत्रतुर इतिं वृत्र–तुरंः । इतिं । आह । एषः । वै । अपाम् । सोमपीथ इतिं सोम–पीथः । यः ।

हि प्राधान्येन सोम आह्रियते । पञ्च कृत्व इति । क्रियाभ्यावृत्तिवचनं शब्दान्तरं, आद्युदात्तत्वात् । पञ्चाक्षरेत्यादि । गतम्* ॥

[3]श्वात्रा इति ॥ होतृचमसीयाभिरद्भिः† एकदेशेन राज्ञ

*सं. ६-१-९.9—10

†सीयानामपामित्यपि पाठः.

वेद नाप्स्वार्तिमार्छति यत्ते सोम
दिवि ज्योतिरित्याहैभ्य एवैनम् ॥
१७ ॥ लोकेभ्यस्सं भरति सोमो वै
राजा दिशोभ्यध्यायत्स दिशोनु प्रा-
विशत्प्रागपागुदगधरागित्याह दिग्भ्य

एवम् । वेद । न । अप्स्वित्यप्-सु । आर्तिम् ।
एति । ऋच्छति । [4]यत् । ते । सोम । दिवि ।
ज्योतिः । इति । आह । एभ्यः । एव । एनम्
॥ १७ ॥ लोकेभ्यः । समिति । भरति । सोमः ।
वै । राजा । दिशः । अभीति । अध्यायत् । सः ।
दिशः । अनु । प्रेति । अविशत् । प्राक् । अपाक् ।
उदक् । अधराक् । इति । आह । दिग्भ्य इति

---

उपसर्जनम् । एष खल्वपां सोमपीथः सोमपानं प्रथममापस्सोमं पिबन्ति, 'सोमस्य पिबत'* इति मन्त्रलिङ्गात् । अप्स्विति निमित्तात्सप्तमी । अप्निमित्तामार्तिं न गच्छति एवं वेदिता ॥

[4]यत्ते सोमेति राज्ञोभिमन्त्रणम् ॥ एभ्य इति । लोकत्रयार्थं राजानं एकत्र संगृह्णाति । सोमो वा इत्यादि । अभ्यध्यायत् अभ्यकामयत । अथ कामयमानो दिशोनुप्राविशत् । तस्मात्प्रागपागिति निग्राहोपायनं दिग्भ्यो राज्ञ इत्येकत्र संभर-

---

*सं. १-४-१.8

एवैन॒ꣳ सं भ॑रत्यथो॒ दिश॑ ए॒वास्मा॒
अवं रु॒न्धेऽम्ब॒ निष्व॒रेत्या॑ह॒ का॒मुका
ए॒न॒ꣳ स्त्रियो॑ भवन्ति॒ य ए॒वं वेद॒
यत्ते॒ सो॒मादा॑भ्यं॒ नाम॒ जागृ॒वीति॑॥
॥ १८ ॥ आ॒हैष वै सोम॑स्य सोम-

दिक्-भ्यः । ए॒व । ए॒नम् । समिति॑ । भ॒र॒ति॒ ।
अथो॒ इति॑ । दिश॑ः । ए॒व । अ॒स्मै॒ । अवेति॑ । रु॒न्धे॒ ।
[5]अम्ब॑ । नीति॑ । स्व॒र॒ । इति॑ । आ॒ह॒ । का॒मु॑काः ।
ए॒नम् । स्त्रियः॑ । भ॒व॒न्ति॒ । यः । ए॒वम् । वेद॑ ।
[6]यत् । ते॒ । सो॒म॒ । अदा॑भ्यम् । नाम॑ । जागृ॑वि ।
इति॑ ॥ १८ ॥ आ॒ह॒ । ए॒षः । वै । सोम॑स्य ।

---

णाय भवति । अपि च दिशश्चास्मै यजमानाय अवरुन्धे, वशीकरोति दिग्वासिनः ॥

[5]यां भार्यां कामयेत तां मनसा ध्यायेत्—अम्ब निष्वरेति ॥ 'अम्ब मातः' इत्यादीनि स्त्रीणां प्रीतिजननानि पूजावचनानि यैः प्रयुक्तैः एनं कामयन्ते स्त्रियः । अथ एवं वेदितारं सर्वास्स्त्रियः कामुका भवन्ति । स्वस्त्रियश्च विशेषेण । 'लषपत' इत्युकञ्प्रत्ययः, 'न लोकाव्यय' इति षष्ठीप्रतिषेधः ॥

[6]यत्ते सोमादाभ्यमिति ॥ उपांशुपावमानानामनुसवनं द्वौद्वावंशू महाभिषवेष्वपिसृजति । एष खलु सोमस्यापि सोमपीथः सोम-

पीथो य एवं वेद न सौम्यामार्ति-
मार्च्छति घ्नन्ति वा एतथ्सोमं यद-
भिषुण्वन्त्यꣳशूनप गृह्णाति त्रायंत
एवैनं प्राणा वा अꣳशवः पशव-
स्सोमोꣳशून्पुनरपि सृजति प्राणा-

सोमपीथ इति सोम-पीथः। यः। एवम्। वेद।
न। सौम्याम्। आर्तिम्। एति। ऋच्छति। [7]घ्न-
न्ति। वै। एतत्। सोमम्। यत्। अभिषुण्वन्ती-
त्यभि-सुन्वन्ति। अꣳशून्। अपेति। गृह्णाति।
त्रायते। एव। एनम्। प्राणा इति प्र-अनाः।
वै। अꣳशवः। पशवः। सोमः। अꣳशून्।
पुनः। अपीति। सृजति। प्राणानिति प्र-अनान्।

---

पानम्। सोमोपि सोममपि प्रथममेव पिबति। 'सोमाय स्वाहा'* इति च मन्त्रलिङ्गम्। एवं वेदिता सोमनिमित्तामार्तिं न गच्छति॥

[7]घ्नन्तीत्यादि॥ अंशवो लताः। षडंशूनवगृह्णाति संघातादपादत्ते। तेनैतं सोमं त्रायते वधपरिहारेण रक्षति। प्राणा वा इत्यादि। प्राणस्थानीया अंशवः। संघातावयवा लताः पशुस्थानीयाः। संघातात्मा सोमः। तस्मादंशून् महाभिषवेषु पुनरपिसृजति पूर्वमपनीतान् पुनस्संघाते एकीकरोति, प्राणानेव

---

*सं. १-४-१.[12]

नेव पशुषु दधाति द्वौद्वावपि सृजति
तस्माद्द्वौद्वौ प्राणाः ॥ १९ ॥
प्राणो वा एष यदुपाꣳशुर्यदुपाꣳश्व-
ग्रा ग्रहा गृह्यन्ते प्राणमेवानु प्र यं-

एव । पशुषु । दधाति । द्वौद्वाविति द्वौ—द्वौ । अ-
पीति । सृजति । तस्मात् । द्वौद्वाविति द्वौ—द्वौ ।
प्राणा इति प्र—अनाः ॥ १९ ॥

यजुषा मिमीत एनं जागृवीति च-
तुश्चत्वारिꣳशच्च ॥ ४ ॥

[1]प्राण इति प्र—अनः । वै । एषः । यत् । उ-
पाꣳशुरित्युप—अꣳशुः । यत् । उपाꣳश्वग्रा इत्यु-
पाꣳशु—अग्राः । ग्रहाः । गृह्यन्ते । प्राणमिति प्र—

---

पशुषु स्थापयति । द्वौद्वाविति । द्वौद्वौ संसृष्टौ प्रक्षिपति । तस्माच्चक्षुरादयः प्राणाः द्वौद्वौ संहत्यकारिणौ भवतः ॥

इति षष्ठे चतुर्थे चतुर्थोऽनुवाकः.

---

[1]प्राणो वा इत्यादि ॥ प्राणस्थितिहेतुत्वाताच्छब्द्यम् । उपांश्वग्राः उपांशुप्रथमाः अनुप्रयन्ति अगनुच्छन्ति ॥

न्त्यरुणो ह स्माहौपवेशिः प्रातस्सव-
न एवाहं यज्ञꣳ सꣳ स्थापयामि
तेन ततस्सꣳस्थितेन चरामीत्यष्टौ
कृत्वोग्रेऽभिषुणोत्यष्टाक्षरा गायत्री
गायत्रं प्रातस्सवनं प्रातस्सवनमेव
तेनाप्नोत्येकादश कृत्वो द्वितीयमेका-

अनम् । एव । अनु । प्रेति । यन्ति । [2]अरुणः । ह । स्म । आह । औपवेशिरित्यौप–वेशिः । प्रातस्सवन इति प्रातः–सवने । एव । अहम् । यज्ञम् । सम् इति । स्थापयामि । तेन । ततः । सꣳस्थितेनेति सं–स्थितेन । चरामि । इति । अष्टौ । कृत्वः । अग्रे । अभीति । सुनोति । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । गायत्रम् । प्रातस्सवनमिति प्रातः–सवनम् । प्रातस्सवनमिति प्रातः–सवनम् । एव । तेन । आप्नोति । एकादश । कृत्वः । द्वितीयम् । एकादशाक्षरेत्येकादश–अक्षरा । त्रि-

---

[2]अरुणो हेत्यादि ॥ उपवेशस्यापत्यं अरुणो नाम आह स्म— अहं प्रातस्सवन एव यज्ञं संस्थापयामि समापयामि सोमं, ततश्च प्रातस्सवन एव समाप्तौ तेन यज्ञेनेत्थंभूतश्चरामीति प्रतिज्ञामाह ।

दशाक्षरा त्रिष्टुप्त्रैष्टुभं माध्यंन्दिनम्
॥ २० ॥ सवंनं माध्यंन्दिनमेव स-
वंनं तेनांप्नोति द्वादंश कृत्वंस्तृतीयं
द्वादंशाक्षरा जगंती जागंतं तृतीय-
सवनं तृतीयसवनमेव तेनांप्नोत्ये-
तां हु वाव स यज्ञस्य संस्थिति-

ष्टुप् । त्रैष्टुंभम् । माध्यंन्दिनम् ॥ २० ॥ सवंनम् । माध्यंन्दिनम् । एव । सवंनम् । तेनं । आप्नोति । द्वादंश । कृत्वंः । तृतीयम् । द्वादंशाक्षरेति द्वादंश—अक्षरा । जगंती । जागंतम् । तृतीयसंवनमिति तृतीय—सवनम् । तृतीयसवनमिति तृतीय—सव-नम् । एव । तेनं । आप्नोति । [3]एताम् । हु । वा-व । सः । यज्ञस्यं । संस्थितिमिति सं—स्थितिम् ।

---

प्रयोजनं च वक्ष्यति—अस्कन्दायेति । कथं पुनः प्रातस्सवन एव यज्ञसंस्थापनेत्यत आह—अष्टौ कृत्व इत्यादि । क्रियाभ्यावृत्तिवाचिशब्दान्तरमिदं, न प्रत्ययः । अभिषवे अष्टत्वाद्यन्वयात् गायत्र्यादिसवनत्रयलाभः । त्रिष्टुब्जगतीशब्दौ उत्सादिः ॥

[3]एतां हेत्यादि ॥ एतां यज्ञस्य संस्थितिं सोरुण उवाच । किमर्थम्? अस्कन्दाय स्कन्नदोषाभावाय । कथं पुनस्तदभाव इत्याह—अस्कन्नं हीत्यादि । गतम्* ॥

---

*सं. ६-३-८.[1]

मुवाचास्कंन्दायास्कंन्नꣳ हि तद्यद्यज्ञ-
स्य सꣳस्थितस्य स्कन्दत्यथो खल्वा-
हुर्गायत्री वाव प्रातस्सवने नातिवा-
द इत्यनंतिवादुक एनं भ्रातृंव्यो भ-
वति य एवं वेद तस्मांदष्टावंष्टौ ॥

उवाच । अस्कंन्दाय । अस्कंन्नम् । हि । तत् । यत् ।
यज्ञस्यं । सꣳस्थितस्येति सं-स्थितस्य । स्कन्दं-
ति । [4]अथो इतिं । खलुं । आहुः । गायत्री । वा-
व । प्रातस्सवन इतिं प्रातः-सवने । न । अति-
वाद इत्यंति-वादें । इतिं । अनंतिवादुक इत्यनं-
ति-वादुकः । एनम् । भ्रातृंव्यः । भवति । यः ।
एवम् । वेदं । तस्मांत् । अष्टावंष्टावित्यंष्टौ-अ-

---

[4]अथो खल्वित्यादि पक्षान्तरम् ॥ गायत्री खलु प्रातस्सवनेन अतिवादे न वर्तते अतिवादं न सहते, गायत्रत्वात्प्रातस्सवनस्य । गायत्र्या एव ह्यतिवादास्त्रिष्टुबादयः । तस्माच्छन्दोन्तरमयुक्तं प्रातस्सवने इत्यरुणादन्य आहुः । एवं वेदितारं भ्रातृव्यः अनतिवादुकः अतिक्रम्य वचनशीलोतिवादुकः । छान्दस उकञ्, पूर्ववत् षष्ठ्यभावः । यस्मादेवं प्रातस्सवने गायत्र्या नातिवादः तस्मादष्टावष्टौकृत्वः एकादशकृत्वः इत्यादि मुक्त्वा सर्वेष्वपि पर्यायेषु अष्टकृत्व एवाभिषुत्यमभिषोतव्यम् । छान्दसः क्यप् ॥

कृत्वोभिषुत्यं ब्रह्मवादिनो वदन्ति पवित्रंवन्तोन्ये ग्रहा गृह्यन्ते किंपवित्र उपाꣳशुरिति वाक्पवित्र इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनं पवयति वृष्णो अꣳशुभ्यामित्याह वृष्णो ह्येतावꣳशू यौ

ष्टौ ॥ २१ ॥ कृत्वः । अभिषुत्यमित्यभि-सुत्यम् । [5]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । पवित्रंवन्त इति पवित्र-वन्तः । अन्ये । ग्रहाः । गृह्यन्ते । किंपवित्र इति किं-पवित्रः । उपाꣳशुरित्युप-अꣳशुः । इति । वाक्पवित्र इति वाक्-पवित्रः । इति । ब्रूयात् । वाचः । पतये । पवस्व । वाजिन् । इति । आह । वाचा । एव । एनम् । पवयति । वृष्णः । अꣳशुभ्यामित्यꣳशु-भ्याम् । इति । आह । वृष्णः । हि । एतौ । अꣳशू इति । यौ । सोमस्य । गभस्तिपूत इति

---

[5]ब्रह्मवादिन इत्यादि ॥ दशापवित्रवन्त एवान्ये सर्वे ग्रहा गृह्यन्ते । अयमुपांशुग्रहः किंपवित्रः केन पवित्रेण तद्वानिति पृच्छन्ति ब्रह्मवादिनः । वाक्पवित्र इत्युत्तरं ब्रूयात् तेभ्यः । वा-

सोमस्य गभस्तिपूत इत्याह गभ-
स्तिना ह्येनं पवयति देवो देवानां
पवित्रमसीत्याह देवो ह्येषः ॥२२॥
सन्देवानां पवित्रं येषां भागोसि ते-
भ्यस्त्वेत्याह येषाꣳ ह्येष भागस्ते-
भ्य एनं गृह्णाति स्वाकृतोसीत्याह
प्राणमेव स्वमकृत मधुमतीर्न इष-

गभस्ति-पूतः । इति । आह । गभस्तिना । हि ।
एनम् । पवयति । देवः । देवानाम् । पवित्रम् ।
असि । इति । आह । देवः । हि । एषः ॥२२॥
सन् । देवानाम् । पवित्रम् । येषाम् । भागः ।
असि । तेभ्यः । त्वा । इति । आह । येषाम् ।
हि । एषः । भागः । तेभ्यः । एनम् । गृह्णाति ।
स्वाकृतः । असि । इति । आह । प्राणमिति प्र-
अनम् । एव । स्वम् । अकृत । मधुमतीरिति
मधु-मतीः । नः । इषः । कृधि । इति । आह ।

चस्पतये इत्येतद्वचनमेव पवित्रमस्य । तस्माद्वाचैवैतयैनं पवयति किं दशापवित्रेण । सोमस्य खल्वंशू वृष्णोंशू वर्षितृत्वात् । सोमस्य गभस्तिमत्त्वेन गभस्तिनैनं पवयति । हस्तो गभस्तिरिति केचित् । स्वयं देवः सन् देवानां पवित्रं भवत्येषः । येषामेष भागः तेभ्य

स्कृधीत्याह सर्वमेवास्मा इद५ स्वं-
दयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्ये-
भ्यः पार्थिवेभ्य इत्याहोभयेष्वेव दे-
वमनुष्येषु प्राणान्दधाति मनस्त्वा॥
॥ २३ ॥ अष्टित्याह मन एवाश्नुत
उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेव-

सर्वम् । एव । अस्मै । इदम् । स्वदयति । विश्वे-
भ्यः । त्वा । इन्द्रियेभ्यः । दिव्येभ्यः । पार्थिवेभ्यः ।
इति । आह । उभयेषु । एव । देवमनुष्येष्विति
देव—मनुष्येषु । प्राणानिति प्र—अनान् । दधा-
ति । मनः । त्वा ॥ २३ ॥ अष्टु । इति । आह ।
मनः । एव । अश्नुते । उरु । अन्तरिक्षम् । अ-
न्विति । इहि । इति । आह । अन्तरिक्षदेवत्यं

---

एवायं गृहीतो भवति । प्राणमेव स्वमात्मीयं करोति । छान्द-
सो लुङ् । मन्त्रे 'स्वांकृतोसि'* इति च्वेराम् ईत्वापवादः । एव-
मादेश इति दर्शयति सर्वमस्मै स्वादु करोति ॥

[6]विश्वेभ्यस्त्वेति ॥ गतम्[†] । प्राणा वै स्वभवस इत्यादि ।
मन्त्रे सुभव इति स्वभवसां प्राणापानानां परोक्षमामन्त्रणमिति
दर्शयति । स्वस्मिन्नात्मनि जाता देवा स्स्वभवसः, तेषु परोक्षं

---

*सं.१-४-२.[4] †सं. ६-१-११.

त्यो हि प्राणस्स्वाहा त्वा सुभवस्सू-
र्यायेत्याह प्राणा वै स्वभवसो देवा-
स्तेष्वेव परोक्षं जुहोति देवेभ्यस्त्वा
मरीचिपेभ्य इत्याहादित्यस्य वै र-
श्मयो देवा मरीचिपास्तेषां तद्भाग-
धेयं तानेव तेन प्रीणाति यदि का-

इत्यन्तरिक्ष—देवत्यः । हि । प्राण इति प्र—अनः । स्वाहा । त्वा । सुभव इति सु—भवः । सूर्याय । इति । आह । प्राणा इति प्र—अनाः । वै । स्वभ-वस इति स्व—भवसः । देवाः । तेषु । एव । परो-क्षमिति परः—अक्षम् । जुहोति । देवेभ्यः । त्वा । मरीचिपेभ्य इति मरीचि—पेभ्यः । इति । आह । आदित्यस्य । वै । रश्मयः । देवाः । मरीचिपा इति मरीचि—पाः । तेषाम् । तत् । भागधेयमिति भाग—धेयम् । तान् । एव । तेन । प्रीणाति । [7]य-

हुतं भवति । स्वभवस इति । आदित्यस्य वै रश्मय इत्या-दि । गतम्* ॥

[7]यदीत्यादि ॥ वर्षुकः वर्षणशीलः पर्जन्यस्स्यादिति यदि

*सं. ६-३-८.

मयेत वर्षुकः पर्जन्यः ॥ २४ ॥
स्यादिति नीचा हस्तेन नि मृज्या-
द्वृष्टिमेव नि यच्छति यदि कामये-
तावर्षुकस्स्यादित्युत्तानेन नि मृ-
ज्याद्वृष्टिमेवोद्यच्छति यद्यभिचरेद्-

दि । कामयेत । वर्षुकः । पर्जन्यः ॥२४॥ स्यात् । इति । नीचा । हस्तेन । नीति । मृज्यात् । वृष्टिम् । एव । नीति । यच्छति । यदि । कामयेत । अवर्षुकः । स्यात् । इति । उत्तानेनेत्युत्-तानेन । नीति । मृज्यात् । वृष्टिम् । एव । उदिति । यच्छति । [4]यदि । अभिचरेदित्यभि-चरेत् । अ-

---

कामयेत तदा नीचा अधोमुखेन हस्तेन निमृज्यात् शोधयेत् । वृष्टिं नियच्छति न्यक्पातयति । अवर्षुकः अवर्षणशीलः, पूर्ववदुक्तम् । उत्तानमुखः उद्यच्छति ऊर्ध्वमाकर्षति ॥

[4]यद्यभिचरेदित्यादि ॥ अमुं देवदत्तं जहि मारय अथानन्तरं तुभ्यं ग्रहं होष्यामि नेदानीमिति भविष्यति निर्देशं कुर्यात् । आहुतिमेव प्रेप्सन् प्राणस्सूर्यो वा एनमभिचरितव्यं हन्ति नाशयति । अथ यदि दूरे स्यादभिचरितव्यः तदा आतमितोस्तिष्ठेत् यावन्तं कालं निरुच्छ्वासस्स्थातुं न शक्नुयात् तावन्तं का-

मुं जुह्यथं त्वा होष्यामीतिं ब्रूयादाहुं-
तिमेवैनं प्रेप्सन् हंन्ति यदिं दूरे स्या-
दा तमिंतोस्तिष्ठेत्प्राणमेवास्यांनुग-
त्यं हन्ति यद्यंभिचरेंदमुष्यं ॥२५॥
त्वा प्राणे सांदयामीतिं सादयेदसं-
न्नो वै प्राणः प्राणमेवास्यं सादयति

मुम् । जहि । अथं । त्वा । होष्यामि । इतिं । ब्रूयात् । आहुंतिमित्या–हुतिम् । एव । एनम् । प्रेप्सन्निति प्र–ईप्सन्न् । हन्ति । यदिं । दूरे । स्यात् । एतिं । तमिंतोः । तिष्ठेत् । प्राणमिति प्र–अनम् । एव । अस्य । अनुगत्येत्यंनु–गत्यं । हन्ति । [१]यदिं । अभिचरेदित्यंभि–चरेत् । अमुष्यं ॥ २५ ॥ त्वा । प्राण इतिं प्र–अने । सादयामि । इतिं । सादयेत् । असंन्नः । वै । प्राण इतिं प्र–अनः । प्राणमिति प्र–अनम् । एव । अ-

---

लमुच्छ्वसन् तिष्ठेत् । अस्याभिचरितव्यस्य प्राणमनुगत्यैनं हन्ति ॥

[१]यद्यभिचरेदित्यादि ॥ प्रयोगान्तरमुच्यते । अभिचरन्नमुष्य देवदत्तस्य प्राणे त्वां सादयामीति हुत्वा पात्रं सादयेत् । प्राणो वा असन्नः अनष्टः अनेन सादनेन अस्य प्राणमेव सादयति नाशयति ॥

षड्भिर॒ꣳशुभि॑ः पवयति॒ षड्वा ऋ॒तव॑
ऋ॒तुभि॑रे॒वैन॑ं पवयति॒ त्रिः प॑वयति॒
त्रयं इमे लो॒का ए॒भिरे॒वैन॑ं लो॒कैः
प॑वयति ब्रह्मवा॒दिनो॑ वदन्ति॒ कस्मा॑-
थ्स॒त्यात्त्रयः पशू॒नाꣳ हस्तादा॒ना इ-
ति॒ यत्त्रिरु॑पा॒ꣳशुꣳ हस्तेन वि गृ॒ह्णा-

स्य॒ । सा॒दय॒ति॒ । [10]षड्भिरिति॒ षट्-भि॑ः । अ॒ꣳशुभि॒रि-
त्य॒ꣳशु-भि॑ः । प॒व॒य॒ति॒ । षट् । वै । ऋ॒तव॑ः । ऋ॒तु-
भि॒रित्यृ॒तु-भि॒ः । ए॒व । ए॒नम् । प॒व॒य॒ति॒ । त्रिः ।
प॒व॒य॒ति॒ । त्रय॑ः । इ॒मे । लो॒काः । ए॒भिः । ए॒व ।
ए॒नम् । लो॒कैः । प॒व॒य॒ति॒ । ब्र॒ह्म॒वा॒दि॒न इति॑ ब्र-
ह्म-वा॒दिन॑ः । व॒द॒न्ति॒ । कस्मा॑त् । स॒त्यात् । त्र-
य॑ः । प॒शू॒नाम् । हस्ता॑दा॒ना इति॒ हस्त॑-आ॒दा॒नाः ।
इति॑ । यत् । त्रिः । उ॒पा॒ꣳशुमित्यु॑प-अ॒ꣳशुम् ।
हस्ते॑न । वि॒गृ॒ह्णा॒तीति॑ वि-गृ॒ह्णाति॑ । तस्मा॑त् । त्र-

[10]षड्भिरिति ॥ द्वाभ्यांद्वाभ्याम् । त्रिरित्यादि । गतम्* ।
ब्रह्मवादिन इत्यादि । कस्मात्कारणात्पशूनां मध्ये त्रय एव
हस्तादाना इति वदन्ति ब्रह्मवादिनः । यदित्याद्युत्तरम्—यस्मा-

*सं. ६-१-१.[18]

ति तस्मात्त्रयः पशूनाꣳ हस्तादानाः पुरुषो हस्ती मर्कटः ॥ २६ ॥ देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपाꣳशौ यज्ञꣳ

यः । पशूनाम् । हस्तादाना इति हस्त—आदानाः । पुरुषः । हस्ती । मर्कटः ॥ २६ ॥

माध्यंन्दिनमष्टावष्टावेव मनस्त्वा पर्जन्योमुष्य पुरुषो द्वे च ॥ ५ ॥

[1]देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । उपाꣳशावित्युप—अꣳशौ । यज्ञम् । सꣳस्थाप्यमिति सं—स्था-

---

दुपांशुग्रहमञ्जलिना त्रिर्गृह्णाति तस्मात्त्रय एव हस्तादानाः हस्तः आदानः आदानकरणं येषां ते तथोक्ताः । के पुनस्त्रय इत्याह—पुरुष इत्यादि ॥

इति षष्ठे चतुर्थे पञ्चमोनुवाकः

---

[1]देवा वा इत्यादि ॥ उपांशौ ग्रहे यज्ञं संस्थाप्यमपश्यन् । तथा कृतवन्तश्च देवाः । आत्मकृतं सर्वमसुरैस्तथाकृतं दृष्ट्वा

सꣳस्थाप्यमपश्यन्तमुपाꣳशौ सम-
स्थापयन्तेऽसुरा वज्रमुद्यत्य देवान-
भ्यायन्त ते देवा बिभ्यत इन्द्रमु-
पाधावन्तानिन्द्रोऽन्तर्यामेणान्तरधत्त
तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्या-
मो गृह्यते भ्रातृव्यानेव तद्यजमा-

प्यम् । अपश्यन् । तम् । उपाꣳशावित्युप-अꣳ-
शौ । समिति । अस्थापयन्न् । ते । असुराः । व-
ज्रम् । उद्यत्येत्युत्-यत्य । देवान् । अभीति ।
आयन्त । ते । देवाः । बिभ्यतः । इन्द्रम् । उपे-
ति । अधावन्न् । तान् । इन्द्रः । अन्तर्यामेणेत्य-
न्तः-यामेन । अन्तः । अधत्त । तत् । अन्तर्याम-
स्येत्यन्तः-यामस्य । अन्तर्यामत्वमित्यन्तर्याम-
त्वम् । यत् । अन्तर्याम इत्यन्तः-यामः । गृ-
ह्यते । भ्रातृव्यान् । एव । तत् । यजमानः । अ-

---

असुराणामप्रतिपत्त्यर्थं उपांशौ यज्ञं संस्थाप्य केन चिदुपायेन समापनीयं दृष्ट्वा तथा कृतवन्तः । अथासुरास्तत्प्रकारानभिज्ञास्सं-जातक्रोधा वज्रमायुधमुद्यम्य हस्ते गृहीत्वा देवान् हन्तुमभ्यायन्त आभिमुख्येनागताः । अथ देवा भीता इन्द्रं शरणं गताः । अ-

नोन्तर्धत्तेऽन्तस्ते ॥ २७ ॥ दधामि
द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन्म-

न्तः । धत्ते । अन्तः । ते ॥ २७ ॥ दधामि । द्यावापृथिवी इति द्यावा—पृथिवी । अन्तः । उरु । अन्तरिक्षम् । इति । आह । एभिः । एव । लोकैः । यजमानः । भ्रातृव्यान् । अन्तः । धत्ते । [2]ते । देवाः । अमन्यन्त । इन्द्रः । वै । इदम् । अभूत् । यत् । वयम् । स्मः । इति । ते । अब्रुवन् ।

---

थेन्द्रस्तानसुरान् अन्तर्यामेण ग्रहेणान्तरधत्त अन्तर्हितान्विनष्टानकरोत् । तदित्यादि । अन्तर्यमनमन्तर्धानं, तद्येन भवति सोन्तर्यामः । यदित्यादि । गतम् ॥

[2]ते देवा इत्यादि ॥ इन्द्र एवेदं विश्वमभूत् यद्वयं स्मः याऽस्माकं विभूतिस्सा इन्द्रस्यैव विभूतिरभूत् न वयं स्म इति । अथ ते देवा इन्द्रमब्रुवन्—हे मघवन् अस्मानपि अन्वाभज त्वय्यागतेऽस्मिन् विश्वाधिपत्ये अस्मानप्यनुभागिनः कुर्विति । अथेन्द्रस्सजोषा देवैरित्युक्तः ये चैव देवाः परे उत्कृष्टा ये चावरे निकृ-

घंवन्ननु न आ भजेति सजोषा दे-
वैरवरैः परैश्चेत्यंब्रवीद्ये चैव देवाः
परे ये चावरे तानुभयान् ॥ २८ ॥
अन्वाभंजथ्सजोषा देवैरवरैः परैश्चे-
त्याह ये चैव देवाः परे ये चावरे
तानुभयानन्वाभंजत्यन्तर्यामे मघव-

मघंवन्निति मघं–वन्न् । अन्विति । नः । एति ।
भज । इति । सजोषा इति स–जोषाः । देवैः ।
अवरैः । परैः । च । इति । अब्रवीत् । ये । च ।
एव । देवाः । परे । ये । च । अवरे । तान् ।
उभयान् ॥ २८ ॥ अन्वाभंजदित्यंनु–आभंजत् ।
सजोषा इति स–जोषाः । देवैः । अवरैः । परैः ।
च । इति । आह । ये । च । एव । देवाः । परे ।
ये । च । अवरे । तान् । उभयान् । अन्वाभंजती-
त्यंनु–आभंजति । अन्तर्याम इत्यन्तः–यामे ।
मघवन्निति मघ–वन्न् । मादयस्व । इति । आह ।

ष्टाः तानुभयानन्वाभजत् । 'अवरैः परैश्च, मादयस्व'* इति लिङ्गात् । यथा यजमानो यज्ञेयज्ञे उभयानन्वाभजाति । यज्ञादेवेति । सम्य-

*सं. १-४-३.[2]

न्मादयस्वेत्याह यज्ञादेव यजमानं
नान्तरेत्युपयामगृहीतोसीत्याहापा-
नस्य धृत्यै यदुभावपवित्रौ गृह्येयां-
तां प्राणमपानोनु न्यृच्छेत्प्रमायुक-

यज्ञात् । एव । यजमानम् । न । अन्तः । एति ।
उपयामगृहीत इत्युपयाम-गृहीतः । असि । इति ।
आह । अपानस्येत्यप-अनस्य । धृत्यै । [4]यत् ।
उभौ । अपवित्रौ । गृह्येयाताम् । प्राणमिति प्र-
अनम् । अपान इत्यप-अनः । अनु । नीति ।
ऋच्छेत् । प्रमायुक इति प्र-मायुकः । स्यात् ।

---

ग्यज्ञनिर्वृत्त्याऽपि यज्ञे मघवा माद्यतीति । अन्तरायो विनाशः ॥

[3]उपयामगृहीत इत्यादि ग्रहणमन्त्रः ॥ अपानस्येति । अन्तर्यामस्यापानस्थितिहेतुत्वात् तस्योपयामगृहीतत्वं प्रजानामपानस्य धारणाय भवति ॥

[4]यदुभावित्यादि ॥ यद्युपांश्वन्तर्यामौ अपवित्रौ दशापवित्ररहितौ गृह्येयातां प्राणमनु निर्गच्छेदपानः, अव्यवधानात् । ततश्च प्रमायुकस्स्याद्यजमानः अपानाभावात् । यदाऽप्ययमन्तर्यामः पवित्रवान् गृह्यते तदा तयोर्मध्ये दशापवित्रस्यावस्थानात् प्राणापानौ विधृतौ विविधं भिन्नस्रोतस्कौ धारितौ भवतः । ततस्तयोर्यथायथप्रवृत्तेः न प्रमायुकत्वम् ॥

स्स्यात्पवित्रंवानन्तर्यामो गृह्यते ॥
॥२१॥ प्राणापानयोर्विधृत्यै प्राणा-
पानौ वा एतौ यदुंपाꣳश्वन्तर्यामौ
व्यान उंपाꣳशुसवंनो यं कामयेत
प्रमायुंकस्स्यादित्यसꣳस्पृष्टौ तस्यं
सादयेद्व्यानेनैवास्यं प्राणापानौ वि-
च्छिंनत्ति ताजक्प्र मीयते यं काम-

पवित्रंवानितिं पवित्रं–वान् । अन्तर्याम इत्यं-
न्तः–यामः । गृह्यते ॥ २१ ॥ प्राणापानयोरितिं
प्राण–अपानयोः । विधृत्या इति वि–धृत्यै । [5]प्राणा-
पानाविति प्राण–अपानौ । वै । एतौ । यत् । उपाꣳ-
श्वन्तर्यामावित्युंपाꣳशु–अन्तर्यामौ । व्यान इतिं
वि–अनः । उपाꣳशुसवंन इत्युंपाꣳशु–सवंनः ।
यम् । कामयेत । प्रमायुंक इतिं प्र–मायुंकः ।
स्यात् । इतिं । असꣳस्पृष्टावित्यसं–स्पृष्टौ । तस्यं ।
सादयेत् । व्यानेनेतिं वि–अनेनं । एव । अस्य ।
प्राणापानाविति प्राण–अपानौ । वीतिं । छिनत्ति ।
ताजक् । प्रेतिं । मीयते । यम् । कामयेत । स-

---

[5]प्राणापानौ वा इत्यादि ॥ असंस्पृष्टौ मध्ये स्थितेनोपांशुस-

येन सर्वमायुरियादिति सꣳस्पृष्टौ
तस्यं सादयेद्व्यानेनैवास्यं प्राणापा-
नौ सं तनोति सर्वमायुरेति ॥३०॥
वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवा-

र्वम् । आयुः । इयात् । इति । सꣳस्पृष्टाविति सं-
स्पृष्टौ । तस्यं । सादयेत् । व्यानेनेति वि-अने-
नं । एव । अस्य । प्राणापानाविति प्राण-अपा-
नौ । समिति । तनोति । सर्वम् । आयुः ।
एति ॥ ३० ॥

त उभयान्गृह्यते चतुश्चत्वारिꣳशच्च ॥ ६ ॥

[1]वाक् । वै । एषा । यत् । ऐन्द्रवायव इत्यैन्द्र--
वायवः । यत् । ऐन्द्रवायवाग्रा इत्यैन्द्रवायव-अग्राः ।

---

वनेन उपांश्वन्तर्यामौ सादयेत् । ताजक् तदानीमेव । गतमन्यत् ॥

इति षष्ठे चतुर्थे षष्ठोनुवाकः.

---

[1]वाग्वा एषेत्यादि ॥ तत्प्रवृत्तिहेतुत्वात्ताच्छब्द्यम् । ऐन्द्रवायवोग्रं

यवाग्रा ग्रहा गृह्यन्ते वाचमेवानु
प्र यन्ति वायुं देवा अब्रुवन्त्सोमꣳ
राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै
मदग्रा एव वो ग्रहा गृह्यान्ता इति
तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते

ग्रहाः । गृह्यन्ते । वाचम् । एव । अनु । प्रेति । यन्ति । [2]वायुम् । देवाः । अब्रुवन् । सोमम् । राजानम् । हनाम । इति । सः । अब्रवीत् । वरम् । वृणै । मदग्रा इति मत्–अग्राः । एव । वः । ग्रहाः । गृह्यान्तै । इति । तस्मात् । ऐन्द्रवायवाग्रा इत्यैन्द्रवायव–अग्राः । ग्रहाः । गृह्यन्ते । तम् ।

---

प्रथमो येषां ते तथोक्ताः । वाचमनु प्रयन्ति प्रथमप्रवक्तारं वाचाऽनुगम्य यज्ञं प्रारभन्ते, तदनन्तरभावात् ॥

[2]वायुं देवा इत्यादि ॥ त्वया सहायेन सोमं राजानममृतात्मानं भक्षणाय पीडयामः इति वायुमब्रुवन् । स वायुर्देवानब्रवीत् अहं वरं वृणै । किमिति—मदग्रा इति । मदीयो ग्रहः अग्रं प्रथमो येषां ते तथोक्ताः मदग्राः युष्माकं ग्रहा गृह्यान्तै । लेट्याडागमः, 'वैतोन्यत्र' इत्यैकारः । तमघ्नन्निति । वरलाभेन तुष्टं वायुं सहायं लब्ध्वा हतवन्तः ॥

तमंघ्नन्त्सोऽपूयत्तं देवा नोपाधृष्णुव-
न्ते वायुमंब्रुवन्निमं नंस्स्वदय ॥३१॥
इति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव
वः पात्राण्युच्यान्ता इति तस्मान्ना-
नादेवत्यानि सन्ति वायव्यान्युच्य-
न्ते तमेभ्यो वायुरेवास्वदयत्तस्माद्य-

अघ्नन् । [3]सः । अपूयत् । तम् । देवाः । न । उ-
पेति । अधृष्णुवन् । ते । वायुम् । अब्रुवन् । इ-
मम् । नः । स्वदय ॥ ३१ ॥ इति । सः । अब्र-
वीत् । वरम् । वृणै । मद्देवत्यानीति मत्—देवत्या-
नि । एव । वः । पात्राणि । उच्यान्तै । इति ।
तस्मात् । नानादेवत्यानीति नाना—देवत्यानि ।
सन्ति । वायव्यानि । उच्यन्ते । तम् । एभ्यः ।
वायुः । एव । अस्वदयत् । तस्मात् । यत् । पूय-

---

[3]सोपूयदिति ॥ हतावकाशे दौस्थ्यमगमत् । पूयी विशरणे । अथ तं तादृशं सोमं देवा नोपाधृष्णुवन् उपसंग्रहीतुं नाशक्नुवन्, पातुमयोग्यत्वात् । स्वदय स्वादू कुर्विति वायुमब्रुवन् । मद्देवत्यानीति । मह्यं देवतायै इमानि । देवतान्तात्तादर्थ्ये यत् । तस्मादित्यादि । गतम्* । तत्प्रवाते इति । प्रकृष्टे वाते विषजन्ति

त्पूयंति तत्प्र वा ते विषंजन्ति वा-
युर् हि तस्यं पवयिता स्वंदयिता
तस्यं विग्रहंणं नाविंन्दुन्त्साऽदिंति-
रब्रवीद्वरं वृणा अथ मया वि गृंह्णी-
ध्वं मद्देवत्यां एव वस्सोमाः ॥३२॥

ति । तत् । प्रवात इतिं प्र—वाते । वीतिं । सज-
न्ति । वायुः । हि । तस्यं । पवयिता । स्वदयि-
ता । [4]तस्यं । विग्रहंणमितिं वि—ग्रहंणम् । न ।
अविन्दन् । सा । अदिंतिः । अब्रवीत् । वरंम् ।
वृणै । अथं । मयां । वीतिं । गृह्णीध्वम् । मद्देवत्यां
इतिं मत्—देवत्याः । एव । वः । सोमाः ॥३२॥

---

विस्तारयन्ति । वायुः खलु पूयीभूतस्य शोधयिता स्वादुकारी च ॥

[4]तस्य विग्रहणमित्यादि ॥ अथ तस्य सोमस्य विग्रहणं विविधग्रहणसाधनं मन्त्रं नाविन्दन् नालभन्त । अथादितिः पृथिवी अब्रवीत्—मह्यं वरं दत्वा मया विगृह्णीध्वमिति । वरं चाह—मद्देवत्या इति । मद्देवत्या वः युष्माकं सोमाः सन्नाः सादिता आसन् सन्त्विति । अस्तेर्लोटि व्यत्ययेन 'छन्दस्युभयथा' इति लादेशस्यार्धधातुकत्वेन ङित्त्वाभावाल्लोपाभावः । उपयामगृहीतोसीति । अनेन मन्त्रेण गृह्यन्ते येन सोमाः तेन हेतुना अदि-

सन्ना असन्नित्युपयामगृहीतोसीत्या-
हादितिदेवत्यास्तेन यानि हि दारु-
मयाणि पात्राण्यस्यै तानि योनेस्सं-
भूतानि यानि मृन्मयानि साक्षात्ता-

सन्नाः । असन्न् । इति । उपयामगृहीत इत्युपया-
म-गृहीतः । असि । इति । आह । अदितिदेव-
त्या इत्यदिति-देवत्याः । तेन । यानि । हि । दा-
रुमयाणीति दारु-मयानि । पात्राणि । अस्यै । ता-
नि । योनेः । सम्भूतानीति सं-भूतानि । यानि ।
मृन्मयानीति मृत्-मयानि । साक्षादिति स-अ-
क्षात् । तानि । अस्यै । तस्मात् । एवम् । आह ।

---

तिदेवत्याः । 'इयं वा उपयामः'* इति । भवत्वियं पृथिवी, भवतु च पृथिव्यदितिः, कथं पुनरदितिदेवत्यत्वं पात्राणामित्याह— यानि हीत्यादि । यानि पात्राणि दारुमयाणि गृहचमसानि तान्यस्यै अस्याः पृथिव्याः संभूतानि । पञ्चम्यर्थे चतुर्थी । कथं पुनर्दारुमयाणां पार्थिवत्वमित्याह—योनेरिति । स्वयोनेर्दारुणः पार्थिवत्वात् तस्मात् अस्याः प्रणाड्या उत्पन्नानि दारुमयाणि । यानि तु मृण्मयानि स्थाल्यादीनि साक्षादव्यवधानेनास्यास्संभूतानि । तस्मादेवमाह तेन कारणेन उपयामगृहीतोसीति गृह्यमाणं सोममाह उपयामः पृथिवीति कृत्वा ॥

---

*सं. ६-५-८.

न्यस्यै तस्मादेवमाह वाग्वै परा॒च्य-
व्याकृताऽवद॒त्ते दे॒वा इन्द्रमब्रुव॒न्नि॒मां
नो॒ वाच॒ं व्याकु॒र्विंति॒ सोऽब्रवी॒द्वरं॑ वृ-
णे॒ मह्यं॑ चै॒वैष वा॒यवे॑ च स॒ह गृह्या-
ता॒ इति॒ तस्मादैन्द्रवा॒य॒वस्स॒ह गृह्य-
ते॒ तामिन्द्रो॑ मध्य॒तो॒व॒क्रम्य॒ व्याकं-

[5]वाक् । वै । परांची । अव्याकृतेत्यवि—आ॒कृ॒ता॒ । अव॒द॒त् । ते । दे॒वाः । इन्द्रम् । अ॒ब्रु॒व॒न् । इ॒माम् । न॒ः । वाचम् । व्याकु॒र्विंति वि—आकु॒रु । इति॑ । सः । अ॒ब्र॒वी॒त् । वरम् । वृ॒णै॒ । मह्यम् । च॒ । ए॒व । ए॒षः । वा॒यवे॑ । च॒ । स॒ह । गृ॒ह्या॒तै॒ । इति॑ । त-स्मात् । ऐ॒न्द्र॒वा॒य॒व इत्यैन्द्र—वा॒य॒वः । स॒ह । गृ॒ह्य॒-ते॒ । ताम् । इन्द्रः । म॒ध्य॒तः । अ॒व॒क्रम्येत्यव—

[5]वाग्वा इत्यादि ॥ पराची अपुनरुक्तरूपा अविभक्तरूपा* पूर्वमवदत् अभिव्यक्तिमगमत् ध्वनिमात्रमेवोदचरत् । अथ देवा इन्द्रमब्रुवन्—इमां वाचं व्याकुरु विभक्तरूपां कुरु । व्यत्ययविधेयं व्याकृतां कुर्विति । सोब्रवीदित्यादि । गतम् । तामित्यादि । उदारवृत्तिश्शब्द इति परमार्थः । तां वाचं मध्यतोवक्रम्यानुप्रविश्य इन्द्रो व्याकरोत् व्यावृत्तामकरोत् । तस्मादियं

*एकरूपा इत्यपि पाठः.

रोत्तस्मादियं व्याकृता वागुद्यते त-
स्मात्सकृदिन्द्राय मध्यतो गृह्यते
द्विर्वायवे द्वौ हि स वराववृणीत॥ ३ ३

मित्रं देवा अब्रुवन्त्सोमꣳ राजानꣳ

क्रम्यं । व्याकरोदिति वि–आकरोत् । तस्मात् ।
इयम् । व्याकृतेति वि–आकृता । वाक् । उद्यते ।
तस्मात् । सकृत् । इन्द्राय । मध्यतः । गृह्यते । द्विः ।
वायवे । द्वौ । हि । सः । वरौ । अवृणीत ॥ ३ ३ ॥

स्वदय सोमास्सहाष्टाविꣳशतिश्च ॥ ७ ॥

[1]मित्रम् । देवाः । अब्रुवन् । सोमम् । राजा-

---

व्याकृता अस्माभिरुद्यते उच्यते । तस्मान्मध्ये सकृदिन्द्राय गृह्यते, वायवे तु द्विः आदावन्ते च गृह्यते, यस्माद्वायुर्द्वौ वराववृणीत 'मदग्रा एव वो ग्रहा गृह्यान्तै'* 'मद्देवत्यान्येव वः पात्राण्युच्यान्तै'* इति ॥

इति षष्ठे चतुर्थे सप्तमोनुवाकः.

---

[1]मित्रं देवा इत्यादि ॥ गतम्* । नाहमिति । कुतोहं सोमं

*सं ६-४-१७,[2,3]

हनामेति सोऽब्रवीन्नाहꣳ सर्वस्य वा
अहं मित्रमस्मीति तमब्रुवन् हना-
मैवेति सोऽब्रवीद्वरं वृणै पयसैव मे
सोमꣳ श्रीणन्निति तस्मान्मैत्रावरुणं
पयसा श्रीणन्ति तस्मात्पशवोपाक्रा-
मन्मित्रस्सन्क्रूरमकरिति क्रूरमिव

नम् । हनाम । इति । सः । अब्रवीत् । न । अ-
हम् । सर्वस्य । वै । अहम् । मित्रम् । अस्मि ।
इति । तम् । अब्रुवन् । हनाम । एव । इति । सः ।
अब्रवीत् । वरम् । वृणै । पयसा । एव । मे ।
सोमम् । श्रीणन् । इति । तस्मात् । मैत्रावरुण-
मिति मैत्रा–वरुणम् । पयसा । श्रीणाति । त-
स्मात् । पशवः । अप । इति । अक्रामन् । मित्रः ।

---

हन्तुमुत्सहे कारणमाह—सर्वस्येति । अहं सर्वस्य मित्रं दुःखा-
त्त्रायकोस्मि स कथं द्रोहं करिष्ये इति मित्रेणोक्ते पुनरपि
देवा अब्रुवन्—हनामैवेति । यदि सर्वस्य मित्रमसि अस्माकमपि
मित्रमसि ततश्च मित्रकार्यस्यावश्यकर्तव्यत्वात् हनामैव त्वया सह
न विचारस्यावसर इति । सोब्रवीदित्यादि । श्रीणन् मिश्रयेयुः ।
श्रीञ् पाके । तस्मात्पशव इत्यादि । तस्मात्सोमवधसाहाय्यकमा-
चरतो मित्रात्पशवोपाक्रामन् अयं मित्रस्सन् क्रूरमुग्रं अकः
अकार्षीत्, अतो बिभीमोस्मात्क्रूरस्वभावादिति ॥

खलु वा एषः ॥ ३४ ॥ करोति य-
स्सोमेन यजते तस्मात्पशवोप क्रा-
मन्ति यन्मैत्रावरुणं पयसा श्रीणा-
ति पशुभिरेव तन्मित्रꣳ समर्धयति
पशुभिर्यजमानं पुरा खलु वावैवं
मित्रो वेदप मत्क्रूरं चक्रुषः पशवः

सन्न् । क्रूरम् । अकः । इति । [2]क्रूरम् । इव । ख-
लु । वै । एषः ॥ ३४ ॥ करोति । यः । सोमेन ।
यजते । तस्मात् । पशवः । अपेति । क्रामन्ति ।
यत् । मैत्रावरुणमिति मैत्रा-वरुणम् । पयसा ।
श्रीणाति । पशुभिरिति पशु-भिः । एव । तत् ।
मित्रम् । समर्धयतीति सं-अर्धयति । पशुभिरिति
पशु-भिः । यजमानम् । [3]पुरा । खलु । वाव । ए-
वम् । मित्रः । अवेत् । अपेति । मत् । क्रूरम् ।

---

[2]क्रूरमिवेत्यादि ॥ सोमवधरूपत्वाद्यज्ञस्य क्रूरत्वम् । हिंसाप्र-
चुरत्वाद्वा । पयसा श्रपणात् पशूनां समृद्धिर्भवति । 'चादिलोपे
विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते ॥

[3]इदानीं पयसा श्रपणं वृतवतो मित्रस्याभिप्रायमाह—पुरा
खल्वित्यादि ॥ पुरा पूर्वमेव वधात् वधारम्भे एव मित्रोवेत्
वेत्ति जानाति स कथं मत् मत्तः क्रूरं चक्रुषः कृतवतः पश-

क्रमिष्यन्तीति तस्मादेवमवृणीत व-
रुणं देवा अब्रुवन्त्वयाऽꣳशभुवा सो-
मꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं
वृणै मह्यं च ॥ ३५ ॥ एवैष मि-
त्रायं च सह गृह्यात इति तस्मा-

चक्रुर्षः । पशवः । क्रमिष्यन्ति । इति । तस्मात् । एवम् । अवृणीत । [4]वरुणम् । देवाः । अब्रुवन् । त्वया । अꣳशभुवेत्यꣳश–भुवा । सोमम् । राजानम् । हनाम । इति । सः । अब्रवीत् । वरम् । वृणै । मह्यम् । च ॥ ३५ ॥ एव । एषः । मित्राय । च । सह । गृह्यातै । इति । तस्मात् । मैत्रा-

वोपक्रमिष्यन्तीति । तस्मादेवमवृणीत पयसा श्रपणं वृतवान् हननारम्भ एव पशूनां तृप्तये । करोतेर्लिटः क्वसुरादेशः, 'वसोस्संप्रसारणम्' ॥

[4]वरुणं देवा इत्यादि ॥ अंशस्य भविता प्राप्ता अंशभूः दायादः अंशं प्राप्नुवता त्वया सहायेनेत्यर्थः । प्राप्तिकर्मणो भवतेः क्विप् । सोऽब्रवीदित्यादि । गतम्* । तस्माद्राज्ञेत्यादि । यस्मादेनमंशभुवा वरुणेन सोमं राजानं हतवन्तो देवाः तस्माद्राज्ञा अंशभुवा

*सं. ६-४-७,[5]

न्मैत्रावरुणस्सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवां घ्नन्ति वैश्येन वैश्यꣳशूद्रेण शूद्रं न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो वि वासयतमिति

वरुण इति मैत्रा-वरुणः । सह । गृह्यते । तस्मात् । राज्ञा । राजानम् । अꣳशभुवेत्यꣳश-भुवा । घ्नन्ति । वैश्येन । वैश्यम् । शूद्रेण । शूद्रम् । [5]न । वै । इदम् । दिवा । न । नक्तम् । आसीत् । अव्यावृत्तमित्यवि-आवृत्तम् । ते । देवाः । मित्रावरुणाविति मित्रा-वरुणौ । अब्रुवन् । इदम् । नः । वीति । वासयतम् । इति ।

---

अंशग्राहिणा दायादेन राजानं घ्नन्ति यथा रामो रावणं विभीषणेन । वैश्येन वैश्यमिति । अंशभुवा घ्नन्तीत्येव । तथा शूद्रेण शूद्रमिति ॥

[5]न वा इदमित्यादि ॥ यदिदं विश्वं पूर्वमव्यावृत्तमविभक्तकालमासीत् । कथं? न दिवाऽऽसीत्, न नक्तमासीत् । अथ देवा मित्रावरुणावब्रुवन्—अस्माकं विवासयतं विभातं कुरुतं अहश्च रात्रिं च जनयतमिति । तावित्यादि । आवत् आवाभ्यां पूर्वं एक एव ग्रहो गृह्यातै गृह्यताम् ऐन्द्रवायव एव । व्यत्ययेन द्विवं-

तावब्रूतां वरं वृणावहा एक एवाव-
त्पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्र-
वायवः पूर्वो मैत्रावरुणाद्गृह्यते प्रा-
णापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ
मित्रोहरजनयद्वरुणो रात्रिं ततो वा

तौ । अब्रूताम् । वरम् । वृणावहै । एकः । एव । आवत् । पूर्वः । ग्रहः । गृह्यातै । इति । तस्मात् । ऐन्द्रवायव इत्यैन्द्र–वायवः । पूर्वः । मैत्रावरुणादिति मैत्रा–वरुणात् । गृह्यते । [6]प्राणापानाविति प्राण–अपानौ । हि । एतौ । यत् । उपाꣳश्वन्तर्यामावित्युपाꣳशु–अन्तर्यामौ । मित्रः । अहः । अजनयत् । वरुणः । रात्रिम् । ततः । वै । इदम् ।

---

चनस्यादादेशः । 'सुपां सुलुक्' इति वा पञ्चम्या अलुक् । तस्मादित्यादि । गतम् ॥

[6]उपांश्वन्तर्यामावपि मैत्रावरुणात्पूर्वे गृह्येते, कथमैन्द्रवायव एव मैत्रापरुणात्पूर्वो गृह्यते इति तत्राह—प्राणापानाविति ॥ प्राणापानावेतौ मन्यामहे (नैतौ ग्रहौ) प्राणापानयोस्स्थितयोः ये धाराग्रहा गृह्यन्ते तेषामेक एवास्मात्पूर्वः ऐन्द्रवायव इति । ततो लब्धवरो मित्रोहरजनयत्, वरुणो रात्रिमजनयत् । तत इदं सर्वं व्यौच्छत् विभातमभवत् विभक्ताहोरात्रमासीत् । तस्मान्मैत्रावरुणस्य

इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै ॥ ३६ ॥

यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृ-

वीति । औच्छत् । यत् । मैत्रावरुण इति मैत्रा—वरुणः । गृह्यते । व्युष्ट्या इति वि—उष्ट्यै ॥ ३६ ॥

एष चैन्द्रवायवो द्वाविंशतिश्च ॥ ८ ॥

[1]यज्ञस्य । शिरः । अच्छिद्यत । ते । देवाः । अश्विनौ । अब्रुवन् । भिषजौ । वै । स्थः । इदम् । यज्ञस्य । शिरः । प्रतीति । धत्तम् । इति । तौ । अब्रूताम् । वरम् । वृणावहै । ग्रहः । एव । नौ ।

---

यथोक्तप्रकारं ग्रहणं व्युष्ट्यै भवति । उच्छी विवासे, व्रश्चादिना षत्वम् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इत्युकारस्स्वर्यते ॥

इति षष्ठे चतुर्थे अष्टमोनुवाकः.

---

[1]यज्ञस्येत्यादि ॥ गतम् । छेदहेतुर्मृग्यः, पुराणप्रसिद्धो वा । अत्राग्निष्टोमेऽपि नावावयोः । गृह्यतामिति । ग्रह एव गृह्यतां

ह्यतामिति ताभ्यामेतमाश्विनमगृ-
ह्णन्ततो वै तौ यज्ञस्य शिरः प्रत्यध-
त्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृ-
त्यै तौ देवा अब्रुवन्नपूतौ वा इमौ
मनुष्यचरौ ॥ ३७ ॥ भिषजाविति

अत्र । अपीति । गृह्यताम् । इति । ताभ्याम् । ए-
तम् । आश्विनम् । अगृह्णन् । ततः । वै । तौ ।
यज्ञस्य । शिरः । प्रतीति । अधत्ताम् । यत् । आ-
श्विनः । गृह्यते । यज्ञस्य । निष्कृत्या इति निः-
कृत्यै । [2]तौ । देवाः । अब्रुवन् । अपूतौ । वै ।
इमौ । मनुष्यचराविति मनुष्य-चरौ ॥ ३७ ॥
भिषजौ । इति । तस्मात् । ब्राह्मणेन । भेषजम् ।

---

वा । ततस्ताभ्यामाश्विनमगृह्णन् । तौ यज्ञस्य शिरः प्रत्यधत्ताम् । तस्मादाश्विनग्रहणं यज्ञस्य निष्कृत्यै रूपसंपत्त्यै भवति ॥

[2]तौ देवा इत्यादि ॥ अपूतौ अशुद्धौ मनुष्यचरौ मनुष्येषु चरन्तौ मनुष्यकर्माणौ भिषजौ वैद्याविति सगर्हमिव तौ देवा अब्रुवन् । तस्माद्ब्राह्मणेन मेधार्हेण भेषजं न कर्तव्यम् । भिषग्वृत्तिर्हि ब्राह्मणोऽपूतो भवति तत एवामेध्यश्च भवति । तस्मादमेध्यो मा भूवमिति ब्राह्मणो भेषजकारी न स्यात् । तावित्यादि । बहिष्पवमानस्तोत्रमश्विनोः पूतत्वाय भवति । तस्मादद्यत्वेऽपि बहिष्प-

तस्माद्ब्राह्मणेन भेषजं न कार्यमपूतो ह्ये॑षोऽमेध्यो यो भिषक्तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन्तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते तस्मादेवं विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयते

न । कार्यम् । अपूतः । हि । एषः । अमेध्यः । यः । भिषक् । तौ । बहिष्पवमानेनेति बहिः—पवमानेन । पवयित्वा । ताभ्याम् । एतम् । आश्विनम् । अगृह्णन् । तस्मात् । बहिष्पवमान इति बहिः—पवमाने । स्तुते । आश्विनः । गृह्यते । तस्मात् । एवम् । विदुषा । बहिष्पवमान इति बहिः—पवमानः । उपसद्य इत्युप—सद्यः । पवित्रम् । वै । बहिष्पवमान इति बहिः—पवमानः । आत्मा-

---

वमानस्तुत्युत्तरकालमाश्विनो गृह्यते । तस्मादेवं बहिष्पवमानस्य महिमानं विदुषा जानता बहिष्पवमान उपसद्यः उपसदनीयः उपास्यः, तेनात्मानं पूतं करोति ॥

तयोस्त्रेधा भैषंज्यं वि न्यंदधुरग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्रम् ॥ ३८ ॥ उपनिधायं ब्राह्मणं दंक्षिणतो निषाद्यं भेषजं कुर्याद्यावंदेव भेषजं तेनं करोति स

नंम् । एव । पवयते । [3]तयोः । त्रेधा । भैषंज्यम् । वि । नीति । अदधुः । अग्नौ । तृतीयम् । अप्स्विव्यप्-सु । तृतीयम् । ब्राह्मणे । तृतीयम् । तस्मात् । उदपात्रमित्युंद-पात्रम् ॥ ३८ ॥ उपनिधायेत्युंप-निधायं । ब्राह्मणम् । दक्षिणतः । निषाद्येति नि-साद्यं । भेषजम् । कुर्यात् । यावंत् । एव । भेषजम् । तेनं । करोति । समर्धुकमिति सं-अर्धुकम् ।

---

[3]तयोरित्यादि ॥ अग्न्यादिनिमित्तकं भैषज्यं त्रिधा त्रिप्रकारं तयोः विन्यदधुः विविधं निहितवन्तः अग्न्यादित्रयनिमित्तास्त्रयो भागाः भैषज्यस्य । 'पूरणाद्भागेतीयादन्' इति अन्प्रत्ययस्स्वार्थिकः । तस्मादित्यादि । गतम् । अग्निं चोपसमिन्धेदिति केचित् । ब्राह्मणेनोभयसंग्रहणेन पृथगग्निग्रहणे नार्थ इत्यन्ये । यावत् यत्प्रकारं अश्विनोर्देवैः कृतं त्रिप्रकारं तेन सर्वेणापि भेषजेन भैषज्यमस्य कृतं भवति । ततश्च कृतं भैषज्यं समर्धुकं समृद्धिशीलं भवति । छान्दस उकञ् ॥

तानामेव गृह्णाति हविष्माँ अस्तु ॥ ९ ॥ सूर्य इत्याह सशुक्राणामेव गृह्णात्यनुष्टुभा गृह्णाति वाग्वा अनुष्टुग्वाचैवैनास्सर्वया गृह्णाति चतुष्पदयर्चा गृह्णाति त्रिस्सादयति सप्त सं पद्यन्ते सप्तपदा शक्करी पशव-

नामिति हविः–कृतानाम् । एव । गृह्णाति । हविष्मान् । अस्तु ॥ ९ ॥ सूर्यः । इति । आह । सशुक्राणामिति स–शुक्राणाम् । एव । गृह्णाति । अनुष्टुभेत्यनु–स्तुभा । गृह्णाति । वाक् । वै । अनुष्टुगित्यनु–स्तुक् । वाचा । एव । एनाः । सर्वया । गृह्णाति । चतुष्पदयेति चतुः–पदया । ऋचा । गृह्णाति । [8]त्रिः । सादयति । सप्त । समिति । पद्यन्ते । सप्तपदेति सप्त–

सशुक्राणामित्यादि । सज्योतिषां सादित्यानाम् । अनुष्टुभेति । 'हविष्मतीः'* इत्यनया । छन्दस्तुतिरियं, सर्वस्य वाङ्मयस्यानुष्टुभत्वात् तेनैव गृहीता भवन्ति । चतुष्पदयेति । 'संख्यासुपूर्वस्य' इति लोपस्समासान्तः, 'टाबृचि' इति टाप्, 'पादः पत्' इति पद्भावः ॥

[8]त्रिरिति ॥ उभयोरुपसादयतीति विधास्यति । तत्राहवनीयमभितो द्विस्सादयति । सकृज्जघनेन गार्हपत्यम् । सप्तेत्यादि ।

*सं. १-३-१२.

त्याः पशव इडा यदिडां पूर्वां द्विदे-
वत्येभ्य उपह्वयेत ॥ ३१ ॥ पशुभिः
प्राणानन्तर्दधीत प्रमायुकस्स्याद्द्विदे-
वत्यान्भक्षयित्वेडामुप ह्वयते प्राणा-
नेवात्मन्धित्वा पशूनुप ह्वयते वा-
ग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणश्श्रोत्रं-

यत् । इडाम् । पूर्वाम् । द्विदेवत्येभ्य इति द्वि—देव-
त्येभ्यः । उपह्वयेतेत्युप—ह्वयेत ॥ ३१ ॥ पशुभि-
रिति पशु—भिः । प्राणानिति प्र—अनान् । अन्तः ।
दधीत । प्रमायुक इति प्र—मायुकः । स्यात् । द्वि-
देवत्यानिति द्वि—देवत्यान् । भक्षयित्वा । इडाम् ।
उपेति । ह्वयते । प्राणानिति प्र—अनान् । एव ।
आत्मन् । धित्वा । पशून् । उपेति । ह्वयते ।
[5]वाक् । वै । ऐन्द्रवायव इत्यैन्द्र—वायवः । चक्षुः ।

---

त्पूर्वं पुरोडाशस्विष्टकृदनन्तरमेव यद्युपह्वयेत तदा पशुवधोपघाते प्रा-
णरूपाणां द्विदेवत्यानामसन्निहितत्वात् पशुभिरन्तर्हितान् विच्छिन्नान्
प्राणान्कुर्यात् । ततश्च पशूनां प्राणानां च असंबन्धात् प्रमायु-
कस्स्याद्यजमानः । तस्माद्द्विदेवत्यभक्षणेन आत्मनि प्राणान् स्थापयित्वा
इडोपह्वाने पशवः प्राणसंबद्धा भवन्ति ॥

[5]वाग्वा इत्यादि ॥ पुरस्तादग्रतः यथागृहीतमेव ऐन्द्रवायवं

माश्विनः पुरस्तादैन्द्रवायवं भक्षय-
ति तस्मात्पुरस्ताद्वाचा वदति पुर-
स्तान्मैत्रावरुणं तस्मात्पुरस्ताच्चक्षु-
षा पश्यति सर्वतः परिहारमाश्विनं
तस्मात्सर्वतश्श्रोत्रेण शृणोति प्रा-
णा वा एते यद्द्विदेवत्याः ॥ ४० ॥

मैत्रावरुण इति मैत्रा–वरुणः । श्रोत्रम् । आश्वि-
नः । पुरस्तात् । ऐन्द्रवायवमित्यैन्द्र–वायवम् । भ-
क्षयति । तस्मात् । पुरस्तात् । वाचा । वदति ।
पुरस्तात् । मैत्रावरुणमिति मैत्रा–वरुणम् । त-
स्मात् । पुरस्तात् । चक्षुषा । पश्यति । सर्वतः ।
परिहारमिति परि–हारम् । आश्विनम् । तस्मात् ।
सर्वतः । श्रोत्रेण । शृणोति । प्राणा इति प्र–अ-
नाः । वै । एते । यत् । द्विदेवत्या इति द्वि–देवत्याः ॥

---

भक्षयति न परिहृत्य । तस्मात्पुरस्तादेव वाचा वदति अग्रत एवोच्चरितवाग्भवति । मैत्रावरुणं च पुरस्तात् यथागृहीतमेव भक्षयति तस्मात्पुरस्तादग्रत एव चक्षुषा पश्यति । आश्विनं तु सर्वतः परिहारं शिरः परितो भ्रमयित्वा भक्षयति । तस्मात्सर्वतः सर्वासु दिक्षु स्थितं श्रोत्रेण शृणोति नाग्रतस्स्थितमेव । प्राणा वा इत्यादि । अरिक्तानि असोमशून्यानि द्विदेवत्यानि

अरिक्तानि पात्राणि सादयति त-
स्मादरिक्ता अन्तरतः प्राणा यतः
खलु वै यज्ञस्य विततस्य न क्रिय-
ते तदनु यज्ञꣳ रक्षाꣳस्यवचरन्ति
यदरिक्तानि पात्राणि सादयति क्रि-
यमाणमेव तद्यज्ञस्य शये रक्षसा-

४०॥ अरिक्तानि । पात्राणि । सादयति । तस्मात् ।
अरिक्ताः । अन्तरतः । प्राणा इति प्र–अनाः ।
[6]यतः । खलु । वै । यज्ञस्य । विततस्येति वि–
ततस्य । न । क्रियते । तत् । अन्विति । यज्ञम् ।
रक्षाꣳसि । अवेति । चरन्ति । यत् । अरिक्तानि ।
पात्राणि । सादयति । क्रियमाणम् । एव । तत् ।
यज्ञस्य । शये । रक्षसाम् । अनन्ववचारायेत्य-

---

सादयति पुरोडाशमग्निं वा । अरिक्ताः प्राणाः अन्तरत आर्द्रा भवन्ति ॥

[6]यतः खल्वित्यादि ॥ रिक्तत्वे यज्ञस्य विच्छेदात् रक्षांस्यवचरेयुः अनुप्रविश्य बाध्येरन् । अरिक्तत्वे तु क्रियमाणमेव यज्ञस्य शये शेते अवतिष्ठते । 'लोपस्त आत्मनेपदेषु' इति तलोपः । ततश्छिद्राभावात् रक्षसामननुप्रवेशः ॥

मनन्ववचाराय दक्षिणस्य हविर्धा-
नस्योत्तरस्यां वर्तन्या सादयति
वाच्येव वाचं दधात्या तृतीयसवना-
त्परि शेरे यज्ञस्य सन्तत्यै ॥४१॥

ननु-अवचाराय । [7]दक्षिणस्य । हविर्धानस्येति
हविः-धानस्य । उत्तरस्यामित्युत्-तरस्याम् । व-
र्तन्याम् । सादयति । वाचि । एव । वाचम् । द-
धाति । एति । तृतीयसवनादिति तृतीय-सवनात् ।
परीति । शेरे । यज्ञस्य । सन्तत्या इति सं-
तत्यै ॥ ४१ ॥

मनुष्यचरावुदपात्रमुपह्वयेत द्विदे-
वत्याष्षट्चत्वारिंशच्च ॥ ९ ॥

---

[7]दक्षिणस्येत्यादि ॥ वर्तनी मार्गः । तत्र सादयति । द्विदे-
वत्यत्वाद्वाच्येव वाङ्निहिता भवति । ऐन्द्रवायवस्य वाक्त्वादेवमुक्तम्,
उपलक्षणत्वाच्चक्षुरादिनिधानस्य । आतृतीयसवनाद्यावत्तृतीयसवनस-
माप्ति परिशेरे तत्रैव शेरते । पूर्ववत्तलोपः । यज्ञस्याविच्छेदाय
भवति ॥

इति षष्ठे चतुर्थे नवमोनुवाकः.

बृहस्पतिर्देवानां पुरोहित आसीच्छ-
ण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा-
आसन्ब्रह्मण्वन्तोसुरास्तेऽन्योन्यं ना-
शक्नुवन्नभिभवितुं ते देवाश्शण्डाम-
र्कावुपामन्त्रयन्त तावब्रूतां वरं वृणा-
वहै ग्रहावेव नावत्रापि गृह्येतामिति
ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्ततो

[1]बृहस्पतिः । देवानाम् । पुरोहित इति पुरः—हितः । आसीत् । शण्डामर्काविति शण्डा—मर्कौ । असुराणाम् । ब्रह्मण्वन्त इति ब्रह्मण्—वन्तः । देवाः । आसन् । ब्रह्मण्वन्त इति ब्रह्मण्—वन्तः । असुराः । ते । अन्यः । अन्यम् । न । अशक्नुवन् । अभिभवितुमित्यभि—भवितुम् । ते । देवाः । शण्डामर्काविति शण्डा—मर्कौ । उपेति । अमन्त्रयन्त । तौ । अब्रूताम् । वरम् । वृणावहै । ग्रहौ । एव । नौ । अत्र । अपीति । गृह्येताम् । इति । ताभ्याम् । एतौ । शुक्रामन्थिनाविति शुक्रा—म-

[1]बृहस्पतिरित्यादि ॥ पुरोहितमहिम्ना उभयेऽपि देवा असुराश्च ब्रह्मण्वन्तः ब्रह्मवर्चसवन्तः मन्त्रवन्तो वा अभवन् । ततोन्यो-

देवा अभंवन्पराऽसुंरा यस्यैवं विदु-
षंश्शुक्रामन्थिनौं गृह्येते भवंत्यात्म-
ना परां ॥ ४२ ॥ अस्य भ्रातृंव्यो
भवति तौ देवा अंपनुद्यात्मन इ-
न्द्रांयाजुहवुरपंनुत्तौ शण्डामर्कौं स-

न्थिनौं । अगृह्णन्न् । ततंः । देवाः । अभंवन्न् । परें-
तिं । असुंराः । यस्यं । एवम् । विदुषंः । शुक्राम-
न्थिनाविंतिं शुक्रा-मन्थिनौं । गृह्येते इतिं । भवं-
ति । आत्मनां । परेतिं ॥४२॥ अस्य । भ्रातृंव्यः ।
भवति । [2]तौ । देवाः । अपनुद्येत्यंप-नुद्यं । आ-
त्मनें । इन्द्रांय । अजुहवुः । अपंनुत्ताविंत्यपं-नु-
त्तौ । शण्डामर्काविंति शण्डां-मर्कौं । सह । अ-

न्यमभिभवितुं नाशक्नुवन् । उपामन्त्रणं रहस्युपच्छन्दनं उपजापः चित्तभेदनम् । तावित्यादि । गतम् *। ताभ्यां शुक्रामन्थिनौ ग्रहौ अगृह्णन् । गतमन्यत् †॥

[2]तौ देवा इत्यादि ॥ ग्रहग्रहणमात्रेण तौ तोषयित्वा असुरांश्च ताभ्यां जित्वा होमकाले तावपनुद्य त्यक्त्वा आत्मने सर्वात्मभूतायेन्द्राय तौ ग्रहौ देवा अजुहवुः । यं द्विष्यादि-त्यादि । यं द्विष्यात् तं द्वेष्यं "अपनुत्तौ शण्डामर्कौ सहामुना" इत्यत्रामुनेतिपदस्थाने गृहीतनामानं निर्दिशेदित्यर्थः । एवं कृते

*सं. ६-४-९.[1] †सं २-५-८.[4—7]

हामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि
तेनैनौ सहापं नुदते स प्रथमस्सं-
कृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रा-
याजुहवुरिन्द्रो ह्येतानि रूपाणि करि-
क्रदचरदसौ वा आदित्यश्शुक्रश्चन्द्र-
मा मन्थ्यपिगृह्य प्राञ्चौ निः ॥४३॥

मुना । इति । ब्रूयात् । यम् । द्विष्यात् । यम् । एव । द्वेष्टि । तेन । एनौ । सह । अपेति । नुदते । [3]सः । प्रथमः । सङ्कृतिरिति सं–कृतिः । विश्वकर्मेति विश्व–कर्मा । इति । एव । एनौ । आत्मने । इन्द्राय । अजुहवुः । इन्द्रः । हि । एतानि । रूपाणि । करिक्रत् । अचरत् । [4]असौ । वै । आदित्यः । शुक्रः । चन्द्रमाः । मन्थी । अपिगृह्येत्यपि–गृह्य ।

---

किं कृतं भवतीत्याह—यमेवेत्यादि । तेन द्वेष्येण सहैव एनौ शण्डामर्कौ अपनुदते ॥

[3]स प्रथम इत्यादि ॥ अनेन मन्त्रेण हूयमानत्वादेवैतौ ग्रहौ इन्द्रायात्मने भवितुमर्हतः । तत एव देवा अपीन्द्रायैवैतावजुहवुः । कोस्य मन्त्रस्य विशेष इति चेत् एतन्मन्त्रप्रतिपाद्यानि विश्वकर्मत्वादीनि रूपाणि करिक्रत् अत्यर्थं कुर्वन् इन्द्रो ह्यचरत् अवातिष्ठत् । ‘दाधर्ति’ इत्यादौ निपात्यते ॥

[4]असौ वा इत्यादि ॥ अपिगृह्यापिधाय ग्रहौ प्राञ्चौ अध्वर्यू

क्रामतस्तस्मात्प्राञ्चौ यन्तौ न पंश्य-
न्ति प्रत्यञ्चावावृत्य जुहुतस्तस्मात्प्र-
त्यञ्चौ यन्तौ पश्यन्ति चक्षुषी वा एते
यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्त-
रवेदिरभितः परिक्रम्य जुहुतस्तस्मा-

प्राञ्चौ । निरिति ॥ ४३ ॥ क्रामतः । तस्मात् । प्राञ्चौ । यन्तौ । न । पश्यन्ति । प्रत्यञ्चौ । आवृत्येत्या—वृत्य । जुहुतः । तस्मात् । प्रत्यञ्चौ । यन्तौ । पश्यन्ति । [5]चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । शुक्रामन्थिनाविति शुक्रा—मन्थिनौ । नासिका । उत्तरवेदिरित्युत्तर—वेदिः । अभितः । परिक्रम्येति परि—क्रम्य । जुहुतः । तस्मात् ।

---

निष्क्रामतः । तस्मात्प्राञ्चौ यन्तौ प्राङ्मुखौ गच्छन्तौ अस्तं गत्वा उत्तरगोळवर्तिनौ यावदुदयं प्राचीनगमनौ सूर्याचन्द्रमसौ केचिदपि न पश्यन्ति । अथ प्रत्यञ्चौ प्रत्यङ्मुखावावृत्य व्यावृत्तौ भूत्वा जुहुतः होमेन ग्रहौ दर्शयतः । तस्मात्प्रत्यञ्चौ प्रतीचीं यन्तौ उदेत्य दक्षिणगोळवर्तिनौ यावदस्तमयं प्रतीचीनगमनौ तौ पश्यन्ति ॥

[5]चक्षुषी वा इत्यादि ॥ अभितः उभयतः परिक्रम्य परितो गत्वा जुहुतः । तस्मात् नासिकामभितश्चक्षुषी उभयतः स्थिते । 'अभितः परितः' इति द्वितीया । तस्मादेव हेतोर्नासिकया उत्तरवेदि-

दभितो नासिकां चक्षुषी तस्मान्ना-
सिकया चक्षुषी विधृते सर्वतः परि
क्रामतो रक्षसामपहत्यै देवा वै याः
प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा
आसन्ताꣳस्ताभिः प्र॥ ४४॥ अनु-
दन्त याः प्रतीचीर्ये पश्चादसुरा आ-

अभितः । नासिकाम् । चक्षुषी इति । तस्मात् ।
नासिकया । चक्षुषी इति । विधृते इति वि–धृते ।
सर्वतः । परीति । क्रामतः । रक्षसाम् । अपहत्या
इत्यप–हत्यै । [6]देवाः । वै । याः । प्राचीः । आ-
हुतीरित्या–हुतीः । अजुहवुः । ये । पुरस्तात् ।
असुराः । आसन् । तान् । ताभिः । प्रेति ॥ ४४॥
अनुदन्त । याः । प्रतीचीः । ये । पश्चात् । असु-
राः । आसन् । तान् । ताभिः । अपेति । अनुद-
न्त । प्राचीः । अन्याः । आहुतय इत्या–हुतयः ।

---

स्थानीयया चक्षुषी शुक्रामन्थिस्थानीये विधृते । अथ सर्वतः परिक्रमणं रक्षसामपहत्यै भवति ॥

[6]देवा वा इत्यादि ॥ प्राच्यः प्राङ्मुखेन होतव्याः । अग्रतो नोदः प्रणोदः । प्रत्यङ्मुखेन होतव्याः प्रतीच्यः । पृष्ठतो नोदो-

सन्ताꣳस्ताभिरपानुदन्त प्राचीर-
न्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रा-
मन्थिनौ पश्चाच्चैव पुरस्ताच्च यज-
मानो भ्रातृव्यान्प्रणुदते तस्मात्परा-
चीः प्रजाः प्र वीयन्ते प्रतीचीर्जाय-

हूयन्ते । प्रत्यञ्चौ । शुक्रामन्थिनाविति शुक्रा—म-
न्थिनौ । पश्चात् । च । एव । पुरस्तात् । च । य-
जमानः । भ्रातृव्यान् । प्रेति । नुदते । तस्मात् । परा-
चीः । प्रजा इति प्र—जाः । प्रेति । वीयन्ते । प्रतीचीः ।
जायन्ते । [7]शुक्रामन्थिनाविति शुक्रा—मन्थिनौ ।
वै । अन्विति । प्रजा इति प्र—जाः । प्रेति । जा-

---

पनोदः । अन्यौ शुक्रामन्थिनौ प्रत्यञ्चौ हूयेते । तस्मादुभयदि-
गन्वयात् उभयत्र स्थितः भ्रातृव्यापनोदः । तस्मादित्यादि ।
सेक्तुः प्राङ्मुखो रेतस्सेकः ततः प्रतीचीनं निर्गच्छति ॥

[7]शुक्रामन्थिनौ वा इत्यादि ॥ वृष्टयुत्पादनादिक्रमेण सर्वाः प्रजाः
शुक्रामन्थिप्रचरणहेतुका जायन्ते । 'अनुर्लक्षणे' इत्यनोः
कर्मप्रवचनीयत्वम् । अत्त्रीः अत्त्र्यः भक्षयित्र्यः प्राणिनः । 'वा
छन्दसि' इति पूर्णसवर्णदीर्घत्वम् । आद्याः भक्ष्याः । दक्षिणेनोत्तर-
वेदिमध्वर्युः प्रतिपद्यते—सुवीरा इति । तत्र सुवीरा इत्यत्रो-
च्यन्ते । शोभनाः पुत्राः विक्रान्ता येषामिति कृत्वा । 'वीर-

न्ते शुक्रामन्थिनौ वा अनु प्रजाः
प्र जायन्तेऽत्त्रीश्चाद्याश्च सुवीराः प्र-
जाः प्रजनयन्परीहि शुक्रश्शुक्रशो-
चिषा ॥ ४५ ॥ सुप्रजाः प्रजाः प्र-
जनयन्परीहि मन्थी मन्थिशोचिषे-
त्याहैता वै सुवीरा या अत्त्रीरेता-
स्सुप्रजा या आद्या य एवं वेदात्त्र्य-

यन्ते । अत्त्रीः । च । आद्याः । च । सुवीरा इति सु-
वीराः । प्रजा इति प्र-जाः । प्रजनयन्निति प्र-
जनयन् । परीति । इहि । शुक्रः । शुक्रशोचिषेति
शुक्र-शोचिषा ॥ ४५ ॥ सुप्रजा इति सु-प्रजाः ।
प्रजा इति प्र-जाः । प्रजनयन्निति प्र-जनयन् ।
परीति । इहि । मन्थी । मन्थिशोचिषेति मन्थि-
शोचिषा । इति । आह । एताः । वै । सुवीरा
इति सु-वीराः । याः । अत्त्रीः । एताः । सुप्रजा
इति सु-प्रजाः । याः । आद्याः । यः । एवम् ।
वेद । अत्त्री । अस्य । प्रजेति प्र-जा । जायते ।

---

वीर्यौ च ' इत्युत्तरपदान्तोदात्तत्वम् । अथोत्तरेणोत्तरवेदिं प्रति-
प्रस्थाता प्रतिपद्यते, न तु निकृष्टां तामसीं योनिं व्रीह्यादिकाम् ॥

स्य प्रजा जायते नाद्या प्रजापते-
रक्ष्यश्वयत्तत्पराऽपतत्तद्विकङ्कतं प्रा-
विशत्तद्विकङ्कते नारमत तद्यवं प्रा-
विशत्तद्यवेऽरमत तद्यवस्य ॥ ४६ ॥
यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति
सक्तुभिश्श्रीणाति प्रजापतेरेव त-

न । आद्या । [8]प्रजापतेरिति प्रजा-पतेः । अक्षि । अश्वयत् । तत् । परेति । अपतत् । तत् । विकङ्कतमिति वि-कङ्कतम् । प्रेति । अविशत् । तत् । विकङ्कत इति वि-कङ्कते । न । अरमत । तत् । यवम् । प्रेति । अविशत् । तत् । यवे । अरमत । तत् । यवस्य ॥ ४६ ॥ यवत्वमिति यव-त्वम् । यत् । वैकङ्कतम् । मन्थिपात्रमिति मन्थि-पात्रम् । भवति । सक्तुभिरिति सक्तु-भिः । श्रीणाति । प्रजापतेरिति प्रजा-पतेः । एव । तत् । च-

---

[8]प्रजापतेरित्यादि ॥ अश्वयत् उच्छूनमभवत् । परापतत् भ्रष्टमभवत् । तत् विकङ्कतं प्रविश्य तत्र रतिमलब्ध्वा यवं प्रविश्य रतिं लभेत । तस्मादेतन्मिश्रितत्वात् यवत्वम् । यदित्यादि । विकङ्कतशब्दात् 'पलाशादिभ्यो वा' इत्यञ् । यवप्रभवा लाजास्सक्तवः । श्रयणं मिश्रणम् । गतमन्यत् ॥

श्चक्षुस्सं भरति ब्रह्मवादिनो वदन्ति कस्मात्सत्यान्मन्थिपात्रꣳ सदो नाश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युस्स्यादार्तिमार्छेत्तस्मान्नाश्नुते ॥ ४७ ॥

क्षुः । समिति । भरति । [9]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । कस्मात् । सत्यात् । मन्थिपात्रमिति मन्थि-पात्रम् । सदः । न । अश्नुते । इति । आर्त-पात्रमित्यार्त-पात्रम् । हि । इति । ब्रूयात् । यत् । अश्नुवीत । अन्धः । अध्वर्युः । स्यात् । आर्तिम् । एति । ऋच्छेत् । तस्मात् । न । अश्नुते ॥ ४७ ॥

आत्मना परा निष्प्र शुक्रशोचिषा यवस्य सप्तत्रिꣳशच्च ॥ १० ॥

---

[9]ब्रह्मवादिन इत्यादि ॥ कस्मात्कारणाद्भक्षणार्थं सदो नाश्नुते न प्राप्नोति सदसि न नीयते मन्थिपात्रमिति ब्रह्मवादिन आहुः पृच्छन्ति अथार्तपात्रं हि मान्थिपात्रं आर्तचक्षुस्संबन्धात् तस्मात्सदो नाश्नुत इति तेभ्य उत्तरं ब्रूयात्—यदित्यादि । गतम् । सतिशिष्टो विकरणस्वरः लसार्वधातुकस्वरं न बाधते इति लिङ एवोदात्तत्वम् ॥

इति षष्ठे चतुर्थे दशमोनुवाकः.

---

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान्ग्रहानपश्यन्तानगृह्णत ततो वै तेऽग्रं पर्यायन् यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानां पर्येति रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयाद्भ्रातृव्यस्यैव रुक्त्वाऽग्रꣳ समानानां

[1]देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । आग्रयणाग्रानित्याग्रयण-अग्रान् । ग्रहान् । अपश्यन् । तान् । अगृह्णत । ततः । वै । ते । अग्रम् । परीति । आयन् । यस्य । एवम् । विदुषः । आग्रयणाग्रा इत्याग्रयण-अग्राः । ग्रहाः । गृह्यन्ते । अग्रम् । एव । समानानाम् । परीति । एति । [2]रुग्णवत्येति रुग्ण-वत्या । ऋचा । भ्रातृव्यवत इति भ्रातृव्य-वतः । गृह्णीयात् । भ्रातृव्यस्य । एव । रुक्त्वा । अ-

---

[1] देवा वा इत्यादि ॥ असुरा द्यावापृथिव्यसुवः(?)* ते देवाः आग्रयणाग्रान् आग्रयणप्रथमान् ग्रहान् अपश्यन् तांश्चागृह्णन् । ततस्ते अग्रं प्राप्ताः । यस्यैवमित्यादि । गतम् ॥

[2] रुग्णवत्येति ॥ 'त्रिंशत्त्रयश्च'† इत्यनया । रोगो रुग्णं

---

*द्यावापृथिवि द्युत इत्यपि क्वचित्कोशे. †सं. १-४-११.

पर्यैति ये देवा दिव्येकादश स्थे-
त्याह ॥ ४८ ॥ एतावतीर्वै देवता-
स्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्येष ते
योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह
वैश्वदेवो ह्येष देवतया वाग्वै देवे-
भ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते दे-
वा वाच्यपक्रान्तायां तूष्णीं ग्रहान-

ग्रम् । समानानाम् । परीति । एति । [3]ये । देवाः । दिवि । एकादश । स्थ । इति । आह ॥ ४८ ॥ एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णाति । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः । इति । आह । वैश्वदेव इति वैश्व-देवः । हि । एषः । देवतया । [4]वाक् । वै । देवेभ्यः । अपेति । अक्रामत् । यज्ञाय । अतिष्ठ-माना । ते । देवाः । वाचि । अपक्रान्तायामित्य-

रुजिधात्वर्थः, 'ओदितश्च' इति निष्ठानत्वम् । भ्रातृव्यस्यैव । 'रुजार्थानाम्' इति षष्ठी ॥

[3]ये देवा इति ग्रहणमन्त्रः ॥ एतावतीर्वा इत्यादि । गतम्* ॥

[4]वाग्वा इत्यादि ॥ यज्ञार्थमात्मानमप्रकाशयन्ती अप्रकाशनार्थं

*सं. ३-५-९.3

गृह्णत् साऽमन्यत् वागन्तर्यन्ति वै
मेति साऽऽग्रयणं प्रत्यागच्छत्तदाग्र-
यणस्याग्रयणत्वम् ॥४१॥ तस्मादा-
ग्रयणे वाग्वि सृज्यते यत्तूष्णीं पूर्वे ग्र-
हा गृह्यन्ते यथा त्सारीयति म आख

पं—क्रान्तायाम् । तूष्णीम् । ग्रहान् । अगृह्णत ।
सा । अमन्यत । वाक् । अन्तः । यन्ति । वै ।
मा । इति । सा । आग्रयणम् । प्रति । एति । अगच्छत् ।
तत् । आग्रयणस्य । आग्रयणत्वमित्याग्रयण–
त्वम् ॥ ४१ ॥ तस्मात् । आग्रयणे । वाक् । वीति ।
सृज्यते । यत् । तूष्णीम् । पूर्वे । ग्रहाः । गृह्यन्ते ।
यथा । त्सारी । इयति । मे । आखः । इयति । न ।

देवेभ्योपाक्रामत् । अथ देवा वाच्यपक्रान्तायामपगतायां वागभा-
वात्तूष्णीमुपांशु ग्रहान् अगृह्णत मन्त्राम्नानसामर्थ्यात् सवनीय*लक्षणवा
गभावेपि विवक्षितः विकल्पस्यावार्यत्वात् । अथ सा वागमन्यत—
अन्तर्यन्ति अन्तरितां त्यक्तां कुर्वन्ति मां देवा इति । अथ तथा
मन्यमाना वागाग्रयणं प्रत्यागच्छत् । तस्माद्द्यत्वेऽपि आग्रयणग्र-
हणानन्तरं वाग्विसृज्यते यस्मात्पूर्वे ग्रहास्तूष्णीं गृह्यन्ते तदानीं
वाग्विसृज्यते एतावन्तं कालं धारयित्वा अस्मिन् काले यद्विसर्जनं
वाचः तत्र लौकिकं निदर्शनं दर्शयति—यथेत्यादि । त्सारी
छद्मगतिः व्याधः । त्सर छद्मगतौ, ताच्छीलिको णिनिः स यथा

*स्वन इत्यपि पाठः.

इयंति नापं रात्स्यामीत्युंपावसृज-
त्येवमेव तदंध्वर्युरांग्रयणं गृंहीत्वा
यज्ञमारभ्य वाचं वि सृंजते त्रिर्
हिं करोत्युद्गातृनेव तद्वृंणीते प्रजा-
पंतिर्वा एष यदांग्रयणो यदांग्रयणं

अपेतिं । रात्स्यामि । इतिं । उपावसृजतीत्युंप—अ-
वसृजतिं । एवम् । एव । तत् । अध्वर्युः । आग्र-
यणम् । गृहीत्वा । यज्ञम् । आरभ्येत्यां—रभ्यं ।
वाचंम् । वीतिं । सृजते । [5]त्रिः । हिम् । करोति ।
उद्गातृनित्युंत्—गातृन् । एव । तत् । वृणीते । प्र-
जापंतिरितिं प्रजा—पतिः । वै । एषः । यत् । आ-
ग्रयणः । यत् । आग्रयणम् । गृहीत्वा । हिङ्करो-

इयति एतावत्यवकाशे मे मम आखः आखननीयो लक्ष्यस्थितिः।
'डो वक्तव्यः' इति डः । तस्मादवकाशे न अपरात्स्यामि नाप-
राधी स्यां विसर्जनविषयाविषयविवेके अवधारणवागेवमुपावसृजति
विमुञ्चति । एवमेव खलु तत् । किम्? यदाग्रयणं गृहीत्वा
यज्ञमारभ्य प्रस्तुत्य वाचं विसृजते वाचो धारणविसर्जनविषयवि-
वेकवानेतावन्तं कालं धारयित्वा इदानीं विसृजतीति । केचि-
दाहुः—असारी आखुग्राही आखुराखुरिति ॥

[5]त्रिरित्यादि ॥ हिंकारस्य कनीयस्त्वात् उद्गात्रा सारस्वती
कृता भवति । प्रजापतिरित्यादि । अभिघ्राणं मूर्ध्नि घ्राणम् ।

गृहीत्वा हिंकरोति प्रजापतिरेव
॥ ५० ॥ तत्प्रजा अभि जिघ्रति
तस्माद्वथ्सं जातं गौरभि जिघ्रत्या-
त्मा वा एष यज्ञस्य यदाग्रयणस्स-
वनेसवनेऽभि गृह्णात्यात्मन्नेव यज्ञꣳ
सं तनोत्युपरिष्टादा नयति रेत एव

तीति हिं-करोति । प्रजापतिरिति प्रजा-पतिः ।
एव ॥ ५० ॥ तत् । प्रजा इति प्र-जाः । अभी-
ति । जिघ्रति । तस्मात् । वत्सम् । जातम् । गौः ।
अभीति । जिघ्रति । [6]आत्मा । वै । एषः । यज्ञ-
स्य । यत् । आग्रयणः । सवनेसवन इति सवने-
ने-सवने । अभीति । गृह्णाति । आत्मन् । एव ।
यज्ञम् । समिति । तनोति । उपरिष्टात् । एति ।

---

प्रजापतिर्भूत्वा गौरिव वत्सं मूर्ध्नि प्रजा जिघ्रति । तस्मादित्यादि ।
गतम् ॥

[6]आत्मा वा इत्यादि ॥ आत्मनि यज्ञमविच्छिन्नं करोति ।
सवनत्रयव्याप्त्या आत्मवत्तया यज्ञमविच्छिन्नं करोति । उपरिष्टा-
दित्यादि । दशापवित्रस्योपरि सोममानयति तेन रेत एव दधाति
रेत एव सिक्तं भवति । अधस्ताद्दशापवित्रस्य स्रवन्तीं धारामुपगृह्णाति
सामीप्येन गृह्णाति तेन निहितं रेतः प्रजनयति प्रजात्वेन परिणतं करोति॥

तद्दधात्यधस्तादुपं गृह्णाति प्र जंनय-
त्येव तद्ब्रह्मवादिनो वदन्ति कस्मा-
थ्सत्याद्गायत्री कनिष्ठा छन्दसाꣳ
सती सर्वाणि सवनानि वहतीत्येष
वै गायत्रियै वथ्सो यदाग्रयणस्तमेव
तदभिनिवर्तꣳ सर्वाणि सवनानि

नयति । रेतः । एव । तत् । दधाति । अधस्तात् ।
उपेति । गृह्णाति । प्रेति । जनयति । एव । तत् ।
[7]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । क-
स्मात् । सत्यात् । गायत्री । कनिष्ठा । छन्दसाम् ।
सती । सर्वाणि । सवनानि । वहति । इति । ए-
षः । वै । गायत्रियै । वत्सः । यत् । आग्रयणः ।
तम् । एव । तत् । अभिनिवर्तमित्यभि–निवर्तम् ।
सर्वाणि । सवनानि । वहति । तस्मात् । वत्सम् ।

---

[7]ब्रह्मवादिन इत्यादि ॥ कनिष्ठा अल्पतमा सर्वाणि सवनानि प्राप्य वर्तते । उत्तरं—एष इत्यादि । आग्रयण एव गायत्र्या वत्सस्थानीयः । तस्मात्तमाग्रयणमेवाभिनिवृत्तं अभिनिर्वृत्याभिनिर्वृत्य आभिमुख्येन निवृत्तमाना सर्वेषु व्याप्रियते तस्य सर्वेषु सवनेषु गृह्यमाणत्वात् । वत्समभिनिवर्तमानेव आयाति । तदेवाह—त-

वहति तस्माद्वथ्समपाकृतं गौरभि
नि वर्तते ॥ ५१ ॥

अपाकृतमित्यप-आकृतम् । गौः । अभि । नीति ।
वर्तते ॥ ५१ ॥

आहाग्रयणत्वं प्रजापतिरेवेति विंशतिश्च॥११॥

यज्ञेन ता उपयद्भिर्देवा वै यज्ञमाग्नीध्रे ब्रह्मवादिनस्स त्वै देवस्य ग्रावाणं प्राण उपांश्वंग्रा देवा वा उपांशौ वाग्वै मित्रं यज्ञस्य बृहस्पतिर्देवानां देवा वा आग्रयणाग्रानेकादश ॥ ११ ॥

यज्ञेन लोके पशुमांस्यात्सवनं माध्यन्दिनं
वाग्वा आरिक्तानि तत्प्रजा एकप-
श्चाशत् ॥ ५१ ॥

हरिः ओम्.

---

स्मादिति । तस्माद्द्यत्वेऽपि वत्समपाकृतं मातृसकाशादपनीतं सा गौरभिनिवर्तते स यत्रयत्र नीयते तत्रतत्राभिनिवर्तते आभिमुख्येन वर्तते ॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेद-
भाष्ये षष्ठे काण्डे चतुर्थे प्रश्ने एकादशोनुवाकः.
प्रश्नश्च समाप्तः.

# शोधनपत्रम्.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १ | ६ | हरिः | हरिः |
| ११ | ७ | मनु | मनु |
| १५ | ५ | भ्यंम्त्रि- | भ्यंम्त्रि- |
| २३ | ,, | यां । | या । |
| ३९ | ,, | रिक्यृंक् | रित्यृंक् |
| ४८ | ३ | इन्द्रां | इन्द्रं |
| ६५ | २ | ष्वड्रिय | ष्वीडय |
| ६६ | ६ | ब्रूया | ब्रूया |
| ६८ | ३ | देवना | देवता |
| ९१ | २ | स्त्रिया | स्त्रिया |
| १०८ | १४ | ब्रूया | ब्रूया |
| ११७ | ११ | द्विष्मं: | द्विष्मः |
| १२८ | ७ | मिमीते | मिमीते |
| १३२ | ५ | विराट् | वि–राट् |
| १३७ | ११ | क्रीणाति | क्रीणाति |
| १४३ | १० | क्रीतः | क्रीतः |
| १४८ | १ | क्रतु | क्रतु |
| १५२ | ११ | आग्नी | अग्नी |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १५८ | ३ | राजं॑ऽ- | राजा॑ऽ- |
| १५९ | ४ | कारोति | करोति |
| १६० | ९ | अनुष्टु | अनुष्टु |
| ,, | १३ | पञ्चा | पञ्चा॑ |
| १६७ | ५ | द्रक्षा॑ꣳ | द्रक्षाꣳ |
| १७४ | ,, | पञ्च॑ | [4]पञ्च॑ |
| १८१ | ९ | भिभ्यंतः | बिभ्यंतः |
| १८४ | ,, | रजाता | रजता |
| १८६ | ४ | नुद्रो | न्रुद्रो |
| २०४ | ४ | [9]त्रिꣳशत् | [8]त्रिꣳशत् |
| २०८ | ८ | वत्स— | [3]वत्स— |
| २१७ | १६ | इत्युत् तरः । | इत्युत्—तरः । |
| २३४ | १२ | ते । | [3]ते । |
| ,, | १६ | [3]ते । | [4]ते । |
| २३५ | ११ | ते । | [5]ते । |
| २४० | ४ | तुंद्र | तुंद्व |
| २४९ | ८ | पृथिव्या | पृथिव्या |
| २७३ | ९ | देवाः | [2]देवाः |
| ,, | १० | दित्या । | दित्या- |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २७५ | ३ | हिस्तृंणाहि | हिस्स्तृंणाहि |
| ,, | ९ | हिः।।तृणाहि। | हिः।स्तृणाहि। |
| २८१ | १३ | यत् | येत् |
| २८६ | ८ | रक्षाꣳसि– | रक्षाꣳसि। |
| ,, | ९ | कृ। | कृ– |
| २८७ | १ | ह्वयेष | ह्वयेष |
| २९३ | ९ | वदं | वेदं |
| ३१० | ६ | [10]आन्त | आन्त |
| ,, | ८ | सर्वतः | [10]सर्वतः |
| ३३७ | २ | परिधीं | परिधी |
| ३४१ | ८ | एकां | [8]एकां |
| ३७१ | १० | सं– | सं– |
| ४०३ | १४ | अध्वं | [9]अध्वं |
| ४१७ | ७ | विश्वे– | [6]विश्वे– |
| ४२६ | ६ | उप | [3]उप |
| ४२८ | १० | त्वरि | त्वारि |
| ४२९ | ,, | ऐद्र | ऐन्द्र |
| ४३५ | १२ | श्रीणाति | श्रीणन्ति |
| ४६२ | १ | रव | रेव |

# भाष्यस्य शुद्धपाठः पाठान्तरं च.

| पृष्ठे. | पङ्क्तौ. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| ४ | ९ | यणं कर्तव्यमेव | यणं न कर्तव्यं. एवं |
| ११ | १२ | स्थास्तिस्रः | स्था एताः |
| १२ | ४ | दीक्षितः | दीक्षितं |
| १६ | १० | गुणादिभिरङ्गि | गुणसंपत्त्या बन्धै ? |
| २१ | ८ | पवमान........भवन्ति | पावन........भवन्तिति |
| २२ | १ | संपादने | संपादिन |
| ,, | ११ | दक्षिाहुतीं....यदीमा | दीक्षणीया....यदि वा |
| २४ | ६ | वृष्टि | पुष्टि |
| २५ | ३ | ता देव्यो | ताः खलु दैव्यो |
| ,, | ८ | द्युदात्त | नुदात्त |
| २७ | १ | प्रसाद्यास्य सु | प्रणम्य सु ? |
| २६ | २ | क्षरा | क्षरपदा |
| ३१ | १ | ज्ञाय | यज |
| ,, | ४ | ध्रुवा | स्रुवा |
| ३३ | २ | प्रयो | न, प्रयो |
| ,, | ११ | पूरणे | पूरणेन |
| ,, | १३ | त्रीण्या | त्रीणीत्या |
| ३४ | ९ | एको | एके |
| ३६ | ६ | शब्दे | शब्द उदात्तः |
| ३७ | ७ | यमिमे | यदिमे |
| ३९ | ११ | तथै | तदे |

| पुटे. | पङ्क्तौ. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| ४० | ११ | यद् | यद्यद् |
| ४२ | ९ | पश्यति | पश्यतीति |
| ४८ | २ | मत्तोप्यपरः इतो | मर्तोप्यपराजितो |
| ५२ | ८ | धिष्ण्योपवनादेः | धिष्ण्योपवपनादेः |
| ,, | ,, | प्रकृतत्वात् । | प्रकृतित्वात् । |
| ५६ | ६ | यज्ञः व्या | यज्ञव्या |
| ५७ | ४ | यज्ञ | वाग्यमनमपि यज्ञ |
| ६७ | ७ | नष्टानु | नष्टाद्यनु |
| ७१ | १ | एक | एकमेक |
| ७६ | ९ | पूर्वयोः | नञ्पूर्वयोः |
| ८० | ३ | तस्यो | तस्मिन् तस्यो |
| ९३ | ,, | त्युता? तन्मध्ये | त्युतामेध्ये |
| ,, | ११ | बहुगुण | बहुगण |
| ९६ | ४ | न क्री | क्री |
| १०२ | ८ | दयं | द्यदयं |
| १०५ | १ | नत्व | ना त्व |
| ११० | १० | आलस्यादि | मूल्यस्याति |
| १११ | ७ | सोम | षड्दानि सोम |
| ११५ | १ | यजन | यजमान |
| ११७ | ४ | यस्मि- | यस्मा- |
| ,, | ५ | न्नित्या | दादित्या |
| ११९ | ४ | इत्यादिविधिः | इत्यादिरपि विधिः |
| १२० | ८ | यदी- | यद्यदी- |
| १२२ | ५ | स्वर- | स्वरा- |

| पृष्टे. | पङ्क्तौ. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| १३१ | ७ | दश | तेन दश |
| १३१ | १० | तथा | तया |
| १३३ | ६ | करोति ॥ | करोति सोमम् ॥ |
| १३७ | ३ | वह्निर्वा | वह्निर्वोढा |
| १४० | १ | दानमन्त्रं | दानम् । मन्त्रं |
| १४१ | ९ | इत्युकञ्प्र- | इत्यूकप्र- |
| १४२ | ३ | दष्टुं | दंष्टुं |
| १६३ | ५ | त्रिवृदिति । | त्रिवृति हि |
| १६४ | ८ | इति पूर्वं | इति प्रजापतौ पूर्वं |
| १७१ | १० | हिंसाराध्योः | हिंसासंसिद्ध्योः |
| १७२ | १ | मिद | मित्थ |
| १८२ | २ | श्लिष्ट | संश्लिष्ट |
| १८४ | १ | शान्त्यौ | शान्त्यै |
| ,, | २ | शान्त | शान्ति |
| १८५ | ५ | सौवर्णा | सौवर्णी |
| ,, | १४ | जयन्ति | जयन्तीति |
| १८६ | ५ | स्वासुरपु | स्वासु पु |
| १९५ | २ | परो[पूर्व]वरीयसीमति | पुरो[पूर्व]वरीयसीमिति |
| १९६ | १६ | उदश्वनेपु | उदनेषि |
| २०१ | ३ | सत्य | सत्व |
| २०३ | ,, | कृतसंकेतः | कृतमन्त्रः |
| ,, | ८ | ता | तां |
| २०४ | ७ | मध्यमाछ | मध्यमाछा |
| ,, | १० | पृष्ठचन्त | पृष्ठचान्त |

| पुटे. | पङ्क्तौ. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| २१० | ७ | तेरण | तरेण |
| २१४ | ४ | ऊर्ज | उदरे ऊर्ज |
| २२० | ,, | साम्या | संबन्धा |
| २२६ | ७ | मादायो | मादावु |
| २२७ | ११ | प्रापिता | प्रापिका |
| २३२ | ४ | मतिरिच्येत् | मतिरिच्येत |
| २३६ | ३ | क्षिपन्ति | प्रक्षिपन्ति |
| २३७ | २ | तत्प | तान्प |
| २३८ | ३ | द्रुमे । | द्रुमे अवसत् । |
| २४४ | ,, | द्वाभ्यां वर्त्म | द्वाभ्यां वर्त्मनोश्शकटवर्त्म |
| ,, | ९ | विष्णुमन्त्र | विष्णुर्मन्त्र |
| २५० | ३ | भरणात् 'बिभ- | बिभर्ति—अभ्रि- |
| ,, | ४ | र्तेरन् रिश्च' इति....न चा | रसि नारिरसीति....ना |
| २५८ | ६ | द्वा । त- | द्यथा तथा |
| ,, | ७ | स्माद्वीर्यावन्त | वीर्यावत्तम |
| २६५ | ४ | सन्तर्जन | सन्तर्दन |
| २६८ | ३ | पृथुमान् | पृथुलान् |
| २७० | ७ | एनां | स एनां |
| ,, | ८ | ज्ञानत् | ज्ञानात् |
| ,, | १२ | यावदेव यजनभूमीषु | स्वयं देवयजनभूमिः |
| २७१ | २ | हेतोः उपजनस्य | हेतोराञ्जकस्य |
| २८५ | ४ | प्रतिष्ठा | प्रतिष्ठादि |
| २८६ | ,, | स्त्रोमो | स्सोमो |
| २८८ | १ | अन्ये उक्तेभ्यो | अन्येभ्यो |

